वेदनिधि ग्रन्थमाला ...204DV

# यजुर्वेदीय

# तैत्तिरीय ब्राह्मणम्




## अवधूत दत्तपीठम्

श्रीगणपति सच्चिदानन्द आश्रमः, दत्त नगरम्

मैसूरु 570025

वेदनिधि ग्रन्थमाला – 204DV

यजुर्वेदीय तैत्तिरीय ब्राह्मणम्

May 2017

Editorial Team
**Dr.Vamshi Krishna Ghanapathi**




Printed by
**Ma Prints,** Bengaluru

Published by
**SVAMI (SGS VedaNidhi Academy & Masters' Institute)**
**Avadhoota Datta Peetham**
**Sri Ganapathy Sachchidananda Ashrama**
Datta Nagara, Ooty Road, Mysore 570025 India
**Email - veda@dattapeetham.com**
Website - www.vedanidhi.in/books



अवधूत दत्तपीठाधीश्वराणां जगद्गुरूणां

परमपूज्यानां

श्री श्री श्री गणपति सच्चिदानन्द स्वामिश्रीचरणानां

# आविष्कार वचांसि

।। नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणम् ।।

महतां सज्जनानां सम्पत्तिः - ऋचः, यजूंषि, सामानि, तद्विनियोजकानि प्रख्यापकानि ब्राह्मणवाक्यानि - इति श्रुतिः ब्रवीति। तथाविध सम्पत्तिमन्तः नैके महान्तः श्रोत्रियाः ब्रह्मनिष्ठागरिष्ठाः शब्दब्रह्मोपासनधुरीणाः वर्षेऽस्मिन् भारते राराजन्ते स्म। ऋषिकल्पानां तादृशां महतां परम्परा अद्यापि प्रकर्षेण वर्तते, यस्याः परिपोषणाय छात्राणामधीतिः निदानमास्ते। तदधीत्यै उपकुर्वन्ति महान्ति उपकरणानि बहूनि वर्तन्ते, यदन्यतमं पुस्तकजातम् - इति सम्प्रति वैदिकलोकः गाढं विश्वसिति।।

आचार्योपदिष्टानि वेदवाक्यानि समामनन्तः छात्राः, स्वेषामध्ययनाय मुद्रितग्रन्थानेव सर्वधा आद्रियन्ते। अतः गुरुणा उपदिष्टान्, उपदेष्टव्यान्, विकार- लोप- आगम- आदेशात्मकान् विषयान् सङ्कलय्य मुद्रापितो वेदग्रन्थः, नितरां छात्रोपकाराय कल्पते। तथा च मन्त्रसम्बन्धि ऋषि-च्छन्दो- दैवत-विनियोग-प्रकरणादिकं तत्तद्देशेषु निविष्टं सत्, पाठकेषु सुकृतं सम्पादयेत्।

एवंविधग्रन्थसहायेन अध्ययनसम्पत्त्या समासादितयशसः संसाधितपरमेश्वरानुग्रहाः भूयासुरिति सङ्कल्पः दत्तगुरोरनुग्रहेण पूर्वं समजनि।

तदीयमहितकृपावशेन, सद्यः अस्माकं दत्तपीठस्य वेदनिधिबृन्दः पूर्वोदित-बह्वंश-कलितं वेदग्रन्थसमुदायं प्रकाशयतीति महान्तमानन्दमनुबोभूयामहे।

तदस्य ग्रन्थजातस्य पठनेन, अधीयाना अपि भूयिष्ठानन्दभाजस्सन्तः, शब्दब्रह्मोपासनधुरं ससुखं वहन्तः श्रेयसे पारयेयुरिति श्रीदत्त सद्गुरुं प्रार्थयामहे।

प्रायेण संवत्सराष्टकात् सञ्चलतः वेदग्रन्थप्रकाशनस्य आविष्कृतिरूपा समुद्गतिः महत्यस्मिन् वज्रोत्सवे विधीयत इति विषयं, दत्तगुरोः समधिकवरिवस्याफलत्वेन सम्भावयामः। महतोऽस्मात् वज्रोत्सवादारभ्य वैदिकलोकः निरायासं निश्शुल्कं ग्रन्थजातमिदं (अन्तर्जालात्) वेदनिधि निवेशनात् (वॆब्सैट् द्वारा) प्राप्नुवन्तु - इति श्रीदत्तस्मरणपूर्वकं समाशास्महे।

शेवधिर्यः पुमर्थानां षडध्वातीत विग्रहः।

राद्धान्तो निगमार्थानां प्रसद्यात् दत्तसद्गुरुः।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

# विज्ञापनम्

विद्वान् वंशीकृष्ण घनपाठी
निर्देशकः - वेदनिधि प्रकाशनम्

## तद्विश्वमुप जीवति।

यददो ब्रह्म- विश्वस्य अधिष्ठानत्वेन परस्सहस्रैः श्रौत स्मार्त पौराणिक वाक्य प्रमाणैः सङ्कीर्तितं- तदिदं विश्वं सञ्जीवयति, तदाधारेण विश्वमिदं उपजीवतीति भारतीयेषु सम्प्रदायसिद्धं सत्यम्। विश्वसिसृक्षोः अभितप्ताद्ब्रह्मणः- त्रयो लोकाः, त्रयो वेदाः, गायत्र्यास्त्रयः पादाः, तिस्रो व्याहृतयो जज्ञिर इति मन्त्रेभ्यः, तदुपबृंहक ब्राह्मणवाक्येभ्यश्च अवगम्यते।

तदासु वेदवाक्यराजीषु अद्वितीयतया विजेगीयमानः यजुरात्मको मन्त्रः इति वैदिकलोके नितरां रूढ एव विषयः। यज- देवपूजा सङ्गतिकरणदानेषु इति धातोः उत्पन्नः यजुश्शब्दः योगरूढ इति ज्ञायते। समवेतार्थस्मारकता- अमिताक्षरता- विच्छन्दस्कता चेत्येतत्त्रयँ यजुषां लक्षणमिति स्पष्टं विभाव्यते। सर्ववेद ग्रन्थेषु सतीष्वप्यृक्षु, यजुर्मन्त्रप्रचुरतया अस्यैव ग्रन्थस्य यजुर्वेद इति प्रसिद्धिमुपलभामहे।

यजुषां वेदः, यजुर्भिर्लक्षितो वा वेदः इति यजुर्वेदपदस्य व्युत्पत्तिः कथ्यते, यत्र तैत्तिरीय- काण्व- माध्यन्दिन – मैत्रायणीय शाखाः सम्प्रति अध्ययनपरम्परायां वर्तन्ते। तैत्तिरीय शाखाया वैलक्षण्यमेवं वर्तते, यत्र ऋग्यजुर्मन्त्रैस्सह तद्विनियोग- प्रशंसक ब्राह्मणवाक्यानि च एकस्मिन्नेव ग्रन्थे वर्तन्ते। अपरा वैचित्री चेयं यत्र समानविषयको ग्रन्थः, तैत्तिरीयसंहिता तैत्तिरीयब्राह्मणनाम्ना द्वेधा भिन्नः इति च। इदमेव मन्त्रब्राह्मण साङ्कर्यं यजुर्वेदस्य कृष्णत्वव्यवहारे हेतुरिति च कथ्यते।

प्रकृतः तैत्तिरीय संहिता ग्रन्थः 2198 पञ्चाशत्सु, 44 प्रपाठकेषु, 7 काण्डेषु विभक्तस्सन् लोके अधीयते। इतरवेदवैलक्षण्यात् परिदृश्यमानोऽन्यो विषयः, काण्डविभागश्च देवताऽनुरोधेन प्रजापति – सोम- अग्नि- विश्वदेव- स्वायम्भुवब्रह्मनाम्ना वर्तते। अस्य काण्डानुक्रमः मन्त्रब्राह्मणसंश्लिष्टस्सन्नपि, प्रयोगानुसारीति प्रसिद्धमेव। एतद्भिन्नः क्रमः सारस्वतपाठनाम्ना लोके अध्ययनक्रमे सम्प्रति विनियुज्यते।

प्रकृतः सारस्वतपाठक्रमानुसारी तैत्तिरीय संहिताग्रन्थः, बहुभिः धार्मिकैः बहुवारं मुद्रितोऽपि तत्तत्कालिकच्छात्र पठितृवर्ग प्रयोजनाय, पौनःपुन्येन बहुधा प्राकाश्यंन्नीयत इति मोदस्य महत आस्पदं भवति।

सम्प्रति पाठकोपकाराय श्रीमदवधूत दत्तपीठाधीश्वराणां श्री **श्री गणपति सच्चिदानन्द स्वामि** श्री चरणानां दिव्याशीर्मञ्जूषया, दत्तपीठस्य विद्वांसः नैकान् वर्षानधीत्य ग्रन्थमेनं प्रकाशयन्तीति, तेषु गुरुकृपा वृष्टिर्नूनं भूयोभूयो भवेदिति समाशासाना निवेदयामः।

तथा च वेदनिधि.ग्रन्थमालायां बहवो वैदिका ग्रन्थाः देशभाषासु मुद्राप्यन्त इति, तत्तत्सम्पादका विपश्चितो वेदविद्व.दुपकारैकपथिकाः वेदपुरुषस्वरूपं सद्गुरुवर्यं सेवमाना इति, तेषु सर्वेषु- आदिगुरो.र्दत्तात्रेयस्य वात्सल्य.दृक्पातो निरन्तरं संपद्यतामिति च प्रार्थयन्तो विरमामः।

# यजुर्वेदीय तैत्तिरीय ब्राह्मण- आरण्यकग्रन्थ विषय सूचिका



Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore • SGS

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

# अस्मिन् प्रकाशने प्रयुक्तानि चिह्नानि

- आदौ अष्टक - प्रपाठक संख्या (यथा - प्रथमाष्टके प्रथमः प्रपाठकः,)
- ततः प्राजापत्यादि काण्ड विधाने विनियोग प्रकारेण तत्तत्काण्डस्य निर्देशः, काण्डस्थं प्रकरणं, मन्त्र ब्राह्मण निर्देश पूर्विका प्रकरणगत अनुवाक संख्या च निर्दिश्यते। (यथा - सौ।का।1। आध्वर्यव मन्त्राः 4 (एकोऽनुवाकः 1)
- प्रा।का। प्राजापत्यं काण्डं, सौ।का। सौम्यकाण्डं, आ।का। आग्नेय काण्डं, वै। का। वैश्वदेवं काण्डम्।
- वेदः - स्तरः1, शाखा - स्तरः 2, ग्रन्थः - स्तरः 3

ʊ अष्टक/ काण्ड प्रारम्भः (स्तरः 4)

अध्याय/ प्रपाठक प्रारम्भः (स्तरः 5)

❀ सूक्त/ अनुवाक प्रारम्भः (स्तरः 6)

❀ वर्गः/ पञ्चाशत्/ दशतिः (स्तरः 7)

卐 मन्त्र/ ब्राह्मण वाक्य समूहः (स्तरः 8)

✡ परिशिष्टम्

❉ मन्त्रप्रतीकः

गणान्तः (ऋग्वेदे)

। वाक्यावसानः,।। (ऋक्/ यजुः/ साम मन्त्र) वाक्यसमूहावसानः

‡ मन्द्रस्थायिना वक्तव्यम् अथवा इतः प्राक् पाठं नावसादयेत्।

वाक्यावसानयुक्तम् पञ्चाशदवसानम्।

----------------------------

⇆ साम्प्रदायिकं पाक्षिकं वर्णसँयुतत्वम् (तस्मिन्⇆वयम्)

अनुषङ्गः,

ऽऽ आकार प्रश्लेषः, ऽअकार प्रश्लेषः

ᳵ उपध्मानीय/जिह्वामूलीये

_ अनुदात्तः, ॑स्वरितः, ॑ अध्यर्ध स्वरितः, ᳚दीर्घ स्वरितः

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

ꣳ सानुनासिक गकारविशिष्ट अनुस्वार आगमः (गणपतिꣳ हवामहे)

ꣲ निरनुनासिक गकारविशिष्ट अनुस्वार आगमः (याꣲ स्वस्तिमग्निः)

ꣴ सानुनासिक गकार द्वित्वविशिष्ट अनुसारागमः (सꣴश्रवा ह सौवर्चनसः)

ँ सानुनासिक यकार/वकार/ लकार विशिष्टः (अर्धानुस्वारः) (यँ वयम्, त्यम्बकँ यजामह

ं अनुस्वारः

- द्राविड सम्प्रदाये नकार वकार सँयोगस्य सूचकम् ⇆,
- द्विमात्रादि कालोच्चारण संकेतः '2', '3', '4'
- क्लिष्टा दशतिः ☞, उच्चारणे धारणे वा विशिष्टं स्थलम् ☜, मन्त्रविशेषाः ✍,
- -- अनुषङ्गः, मन्त्रारम्भे -- चिह्नं आदौ वक्तव्यमनुषङ्गं सूचयति। मन्त्रावसाने वर्तमानं -- चिह्नं मन्त्रान्ते वक्तव्यमनुषङ्गं बोधयति। तथा चँ अनुषङ्ग भागं सूचयति। • अधो निर्दिष्ट स्थले (फुट् नोट्) द्राविड सम्प्रदाय भेदः, पाठान्तरँ वा, प्रतीकत्वेन दर्शितस्य मन्त्रस्य कृत्स्नः पाठो वा प्रदश्र्यते।

---

वेदश्शिवश्शिवो वेदो वेदाध्यायी सदाशिवः।

तस्मात् सर्वप्रयत्नेन वेदमेव सदा जपेत्।।

उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत्।

तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः।।

Sachchidananda Avadhoota Datta Peetham Ganapati Mysore

---



अजास्यः पीतवर्ण.स्स्या-द्यजुर्वेदोऽक्षसूत्रधृक्।
वामे कुलिशपाणिस्तु भूतिदो मङ्गलप्रदः।।

तस्य यजुरेव शिरः।
यजुर्वेदे तिष्ठति मध्ये अह्नः।।

# प्रथमाष्टकम्

## प्रथमाष्टके प्रथमᳶ प्रपाठकः

### सौ।का। 4। आध्वर्यव मन्त्राः 1(एकोऽनुवाकः 1)

❀ 卐 ब्रह्म सन्धत्त न्तन्मे जिन्वतम्। 卐 क्षत्त्रꣳ सन्धत्त न्तन्मे जिन्वतम्। 卐 इषꣳ सन्धत्त न्तां मे जिन्वतम्। 卐 ऊर्जꣳ सन्धत्त न्तां मे जिन्वतम्। 卐 रयिꣳ सन्धत्त न्तां मे जिन्वतम्। 卐 पुष्टिꣳ सन्धत्त न्तां मे जिन्वतम्। 卐 प्रजाꣳ सन्धत्त न्तां मे जिन्वतम्। 卐 पशून्थ्सन्धत्त न्तान्मे जिन्वतम्। 卐 स्तुतोऽसि जनधाः। देवास्त्वा शुक्रपाᳶ प्रणयन्तु।। 1।। ❀ 卐 सुवीराᳶ प्रजाᳶ प्रजनय न्परीहि। शुक्र श्शुक्रशोचिषा। 卐 स्तुतोऽसि जनधाः। देवास्त्वा मन्थिपाᳶ प्रणयन्तु। 卐 सुप्रजाᳶ प्रजाᳶ प्रजनय न्परीहि। मन्थी मन्थिशोचिषा। 卐 सञ्जग्मानौ दिव आ पृथिव्यायुः। सन्धत्त न्तन्मे जिन्वतम्। 卐 प्राणꣳ सन्धत्त न्तं मे जिन्वतम्। 卐 अपानꣳ सन्धत्त न्तं मे जिन्वतम्।। 2।। ❀ 卐 व्यानꣳ सन्धत्त न्तं मे जिन्वतम्। 卐 चक्षु स्सन्धत्त न्तन्मे जिन्वतम्। 卐 श्रोत्रꣳ सन्धत्त न्तन्मे जिन्वतम्। 卐 मन स्सन्धत्त न्तन्मे जिन्वतम्। 卐 वाचꣳ सन्धत्त न्तां मे जिन्वतम्। 卐 आयुस्स्थ आयुर्मे धत्तम्। आयु र्यज्ञाय धत्तम्। आयु र्यज्ञपतये धत्तम्। 卐 प्राण स्स्थᳶ प्राणं मे धत्तम्। प्राणँ यज्ञाय धत्तम्।। 3।। ❀ प्राणँ यज्ञपतये धत्तम्। 卐 चक्षुस्स्थ श्चक्षुर्मे धत्तम्। चक्षु र्यज्ञाय धत्तम्। चक्षु र्यज्ञपतये धत्तम्। 卐 श्रोत्रꣴ स्थ श्श्रोत्रं मे धत्तम्। श्रोत्रँ यज्ञाय धत्तम्। श्रोत्रँ यज्ञपतये धत्तम्। 卐 तौ देवौ शुक्रामन्थिनौ। कल्पयत न्दैवी र्विशः। कल्पयतं मानुषीः।। 4।। ❀ इष मूर्ज मस्मासु धत्तम्। प्राणा न्पशुषु। प्रजां मयि च यजमाने च। 卐 निरस्त श्शण्डः।-- 卐 निरस्तो मर्कः।-- 卐 अपनुत्तौ शण्डामर्कौ- सहामुना।। 卐 शुक्रस्य समिदसि। 卐 मन्थिन स्समिदसि। 卐 स प्रथम स्सङ्कृति र्विश्वकर्मा। स प्रथमो मित्रो वरुणो अग्निः। सप्रथमो बृहस्पति श्चिकित्वान्। तस्मा इन्द्राय सुत माजुहोमि।। 5।। (नयन्त्वपानꣳ सन्धत्त न्तं मे जिन्वतं प्राणँ यज्ञाय धत्तं मानुषी रग्नि र्द्वे च। 1। (ब्रह्म क्षत्त्र न्त-दिष मूर्जꣳ रयिं पुष्टिं प्रजा न्तां- पशून्तान्। सन्धत्त न्तत्प्राण मपानँ व्यानन्त, श्चक्षु श्श्रोत्रं मन स्त-द्वाच न्ताम्। इषादि पञ्चके वाच न्ताम्मे, पशू न्थ्सन्धत्त न्तान्मे, प्राणाऽऽदि त्रितये तम्मेऽन्यत्र तन्मे।)

## आ।का। 1। अग्न्याधेय ब्राह्मणम् 1(पञ्चानुवाका: 5)

❀ कृत्तिकास्वग्नि मादधीत। एतद्वा अग्ने र्नक्षत्रम्। यत्कृत्तिकाः। स्वाया मेवैन न्देवताया माधाय। ब्रह्मवर्चसी भवति। मुखँ वा एत न्नक्षत्राणाम्। यत्कृत्तिकाः। यः कृत्तिकास्वग्नि माधत्ते। मुख्य एव भवति। अथो खलु।। 6।। ❀ अग्निनक्षत्र मित्यप चायन्ति। गृहान् ह दाहुको भवति। प्रजापती रोहिण्या मग्नि मसृजत। त न्देवा रोहिण्या माऽदधत। ततो वै ते सर्वा न्रोहा नरोहन्न्। तद्रोहिण्यै रोहिणित्वम्। यो रोहिण्या मग्नि माधत्ते। ऋध्नोत्येव। सर्वा न्रोहा न्रोहति। देवा वै भद्रा स्सन्तोऽग्नि माऽधित्सन्त।। 7।। ❀ तेषा मनाहितोऽग्नि रासीत्। अथैभ्यो वामँ वस्वपाक्रामत्। ते पुनर्वस्वो राऽदधत। ततो वै तान् वामँ वसूपाऽऽवर्तत। यः पुरा भद्र स्सन्पापीया न्थ्स्यात्। स पुनर्वस्वो रग्नि मादधीत। पुन रेवैनँ वामँ वसूपाऽऽवर्तते। भद्रो भवति। यः कामयेत दानकामा मे प्रजा स्स्युरिति। स पूर्वयोः फल्गुन्यो रग्नि मादधीत।। 8।। ❀ अर्यम्णो वा एत न्नक्षत्रम्। यत्पूर्वे फल्गुनी। अर्यमेति तमाहु र्यो ददाति। दानकामा अस्मै प्रजा भवन्ति। यः कामयेत भगी स्यामिति। स उत्तरयोः फल्गुन्यो रग्नि मादधीत। भगस्य वा एत न्नक्षत्रम्। यदुत्तरे फल्गुनी। भग्येव भवति। कालकञ्जा वै नामासुरा आसन्न्।। 9।। ❀ ते सुवर्गाय लोकायाग्नि मचिन्वत। पुरुष इष्टका मुपादधा त्पुरुष इष्टकाम्। स इन्द्रो ब्राह्मणो ब्रुवाण इष्टका मुपाधत्त। एषा मे चित्रा नामेति। ते सुवर्गँ लोकमा प्रारोहन्न्। स इन्द्र इष्टका माऽवृहत्। तेऽवाकीर्यन्त। येऽवाकीर्यन्त। त ऊर्णावभयोऽभवन्न्। द्वावुदपतताम्।। 10।। ❀ तौ दिव्यौ श्वाना वभवताम्। यो भ्रातृव्यवान्थ्स्यात्। स चित्राया मग्नि मादधीत। अवकीर्यैव भ्रातृव्यान्। ओजो बल मिन्द्रियँ वीर्य मात्म न्धत्ते। वसन्ता ब्राह्मणोऽग्नि मादधीत। वसन्तो वै ब्राह्मणस्यर्तुः। स्व एवैन मृता वाधाय। ब्रह्मवर्चसी भवति। मुखँ वा एतदृतूनाम्।। 11।। ❀ यद्वसन्तः। यो वसन्ताऽग्नि माधत्ते। मुख्य एव भवति। अथो योनिमन्त मेवैनं प्रजात माधत्ते। ग्रीष्मे राजन्य आ दधीत। ग्रीष्मो वै राजन्यस्यर्तुः। स्व एवैन मृतावाधाय। इन्द्रियावी भवति। शरदि वैश्य आ दधीत। शरद्वै वैश्यस्यर्तुः।। 12।। ❀ स्व एवैन मृतावाधाय। पशुमा न्भवति। न पूर्वयोः फल्गुन्यो रग्नि मादधीत। एषा वै जघन्या रात्रि स्सँवथ्सरस्य। यत्पूर्वे फल्गुनी। पृष्टित एव सँवथ्सरस्याग्नि माधाय। पापीया न्भवति। उत्तरयो रा दधीत। एषा वै प्रथमा रात्रि स्सँवथ्सरस्य। य दुत्तरे

फल्गुनी। मुखत एव सँवथ्सरस्याग्नि माधाय। वसीया न्भवति। अथो खलु। यदैवैनँ यज्ञ उपनमेत्। अथाऽऽदधीत। सैवास्यर्द्धिः।। 13।। (खल्वधिथ्सन्त फल्गुन्यो रग्नि मा दधीताऽऽसन्नपतता मृतूनाँ वैश्यस्यर्तु रुत्तरे फल्गुनी षड्व। 2।)

❀ उद्धन्ति। यदेवास्या अमेध्यम्। तदपहन्ति। अपोऽवोक्षति शान्त्यै। सिकता निवपति। एतद्वा अग्ने वैँश्वानरस्य रूपम्। रूपेणैव वैँश्वानर मवरुन्धे। ऊषा न्निवपति। पुष्टि र्वा एषा प्रजननम्। यदूषाः।। 14।। ❀ पुष्ट्या मेव प्रजननेऽग्नि माधत्ते। अथो सं'2'ज्ञान एव। सं'2'ज्ञानँ ह्येत त्पशूनाम्। यदूषाः। द्यावापृथिवी सहाऽऽस्ताम्। ते वियती अब्रूताम्। अस्त्वेव नौ सह यज्ञिय मिति। यदमुष्या यज्ञिय मासीत्। तदस्या मदधात्। त ऊषा अभवन्न्।। 15।। ❀ यदस्या यज्ञिय मासीत्। तदमुष्या मदधात्। तदद श्चन्द्रमसि कृष्णम्। ऊषा न्निवप न्नदो ध्यायेत्। द्यावापृथिव्यो रेव यज्ञियेऽग्नि माधत्ते। अग्नि र्देवेभ्यो निलायत। आखू रूपङ्कृत्वा। स पृथिवीं प्राविशत्। स ऊतीः कुर्वाणः पृथिवी मनु समचरत्। तदाखुकरीष मभवत्।। 16।। ❀ यदाखुकरीषꣳ सम्भारो भवति। यदेवास्य तत्र न्यक्तम्। तदेवाव रुन्धे। ऊर्जँ वा एतꣳ रसं पृथिव्या उपदीका उद्दिहन्ति। यद्वल्मीकम्। यद्वल्मीकवपा सम्भारो भवति। ऊर्ज मेव रसं पृथिव्या अवरुन्धे। अथो श्रोत्र मेव। श्रोत्रꣳ ह्येत त्पृथिव्याः। यद्वल्मीकः।। 17।। ❀ अबधिरो भवति।। य एवँ वेद। प्रजापतिः प्रजा असृजत। तासा मन्न मुपाक्षीयत। ताभ्य स्सूद मुप प्राभिनत्। ततो वै तासा मन्न न्नाक्षीयत। यस्य सूद स्सम्भारो भवति। नास्य गृहेऽन्न क्षीयते। आपो वा इद मग्रे सलिल मासीत्। तेन प्रजापति रश्राम्यत्।। 18।। ❀ कथ मिदꣳ स्यादिति। सोऽपश्य त्पुष्करपर्ण न्तिष्ठत्। सोऽमन्यत। अस्ति वै तत्। यस्मि न्निद मधि तिष्ठतीति। स वराहो रूप ङ्कृत्वोप न्यमज्जत्। स पृथिवी मध आर्छत्। तस्या उपहत्योदमज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत्।। 19।। ❀ तत्पृथिव्यै पृथिवित्वम्। अभूद्वा इद मिति। तद्भूम्यै भूमित्वम्। ता न्दिशोऽनु वात स्समवहत्। ताꣳ शर्कराभि रदꣳहत्। शँ वै नो ऽभूदिति। तच्छर्कराणाꣳ शर्करत्वम्। यद्वराहविहतꣳ सम्भारो भवति। अस्या मेवाछम्बट्कार मग्नि माधत्ते। शर्करा भवन्ति धृत्यै।। 20।। ❀ अथो शन्त्वाय। सरेता अग्नि राधेय इत्याहुः। आपो वरुणस्य पत्नय आसन्न्। ता अग्नि रभ्यध्यायत्। ता स्समभवत्। तस्य रेतः पराऽपतत्। तद्धिरण्य मभवत्। यद्धिरण्य

मुपास्यति। सरेतस मेवाग्नि माधत्ते। पुरुष इन्वै स्वाद्रेतसो बीभथ्सत इत्याहुः।। 21।।❀ उत्तरत उपास्य त्यबीभथ्सायै। अति प्रयच्छति। आर्ति मेवाति प्रयच्छति।। अग्नि र्देवेभ्यो निलायत। अश्वो रूपङ्कृत्वा। सोऽश्वत्थे सँवथ्सर मतिष्ठत्। तदश्वत्थ स्याश्वत्थत्वम्। यदाश्वत्थ स्सम्भारो भवति। यदेवास्य तत्र न्यक्तम्। तदेवाव रुन्धे।। 22।।❀ देवा वा ऊर्जँ व्यभजन्त। तत उदुम्बर उदतिष्ठत्। ऊर्ग्वा उदुम्बरः। यदौदुम्बर स्सम्भारो भवति। ऊर्ज मेवाव रुन्धे। तृतीयस्या मितो दिवि सोम आसीत्। तङ्गायत्र्याऽहरत्। तस्य पर्ण मच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्।। 23।।❀ यस्य पर्णमय स्सम्भारो भवति। सोमपीथ मेवाव रुन्धे। देवा वै ब्रह्म न्नवदन्त। तत्पर्ण उपाश्रृणोत्। सुश्रवा वै नाम। यत्पर्णमय स्सम्भारो भवति। ब्रह्मवर्चस मेवाव रुन्धे। प्रजापति रग्नि मसृजत। सोऽबिभे त्प्र मा धक्ष्यतीति। त॰ शम्याऽशमयत्।। 24।।❀ तच्छम्यै शमित्वम्। यच्छमीमय स्सम्भारो भवति। शान्त्या अप्रदाहाय। अग्ने स्सृष्टस्य यतः। विकङ्कतं भा आर्छत्। यद्वैकङ्कत स्सम्भारो भवति। भा एवाव रुन्धे। सहृदयोऽग्नि राधेय इत्याहुः। मरुतोऽद्भि रग्नि मतमयन्न्। तस्य तान्तस्य हृदय माऽच्छिन्दन्न्। साऽशनि रभवत्। यदशनिहतस्य वृक्षस्य सम्भारो भवति। सहृदय मेवाग्नि माधत्ते।। 25।। (ऊषा अभव न्नभव द्वल्मीकोऽश्राम्य दप्रथयद्धृत्यै बीभथ्सत इत्याह रुन्धे पर्णत्व मशमय दच्छिन्दꣳ स्त्रीणि च। 3।)

❀ द्वादशसु विक्रामे ष्वग्नि मादधीत। द्वादश मासा स्सँवथ्सरः। सँवथ्सरा देवैन मवरुध्याऽऽधत्ते। यद्वादशसु विक्रामेष्वादधीत। परिमित मवरुन्धीत। चक्षुर्निमित आ दधीत। इय द्वादश विक्रामा '3' इति। परिमित श्चैवापरिमित श्चावरुन्धे। अनृतँ वै वाचा वदति। अनृतं मनसा ध्यायति।। 26।।❀ चक्षुर्वै सत्यम्। अद्रा '3' गित्याह। अदर्श मिति। तथ्सत्यम्। यश्चक्षुर्निमितेऽग्नि माधत्ते। सत्य एवैन माधत्ते। तस्मा दाहिताग्नि र्नानृतँ वदेत्। नास्य ब्राह्मणोऽनाश्वा न्गृहे वसेत्। सत्ये ह्यस्याग्नि राहितः। आग्नेयी वै रात्रिः।। 27।।❀ आग्नेयाः पशवः। ऐन्द्र महः। नक्त ङ्गार्हपत्य मादधाति। पशू नेवाव रुन्धे। दिवाऽऽहवनीयम्। इन्द्रिय मेवाव रुन्धे। अर्धोदिते सूर्य आहवनीय मादधाति। एतस्मिन्वै लोके प्रजापतिः प्रजा असृजत। प्रजा एव तद्यजमान स्सृजते। अथो भूतञ्चैव भविष्य च्चावरुन्धे।। 28।।❀ इडा वै मानवी यज्ञानूकाशिन्यासीत्। साऽश्रृणोत्। असुरा अग्नि मा दधत इति। तदगच्छत्। त आहवनीय मग्र

आऽदधत। अथ गार्हपत्यम्। अथान्वाहार्यपचनम्। साऽब्रवीत्। प्रतीच्येषाऽ श्रीरगात्। भद्रा भूत्वा पराभविष्यन्तीति।। 29।। ❀ यस्यैव मग्नि राधीयते। प्रतीच्यस्य श्रीरेति। भद्रो भूत्वा परा भवति। साऽश्रृणोत्। देवा अग्नि मा दधत इति। तदगच्छत्। तेऽन्वाहार्यपचन मग्र आऽदधत। अथ गार्हपत्यम्। अथाऽऽहवनीयम्। साऽब्रवीत्।। 30।। ❀ प्राच्येषाऽ श्रीरगात्। भद्रा भूत्वा सुवर्गँ लोक मेष्यन्ति। प्रजा न्तु न वेथ्स्यन्त इति। यस्यैव मग्नि राधीयते। प्राच्यस्य श्रीरेति। भद्रो भूत्वा सुवर्गँ लोक मेति। प्रजा न्तु न विन्दते। साऽब्रवी दिडा मनुम्। तथा वा अह न्तवाग्नि माधास्यामि। यथा प्र प्रजया पशुभि र्मिथुनै र्जनिष्यसे।। 31।। ❀ प्रत्यस्मि न्लोके स्थास्यसि। अभि सुवर्गँ लोक ञ्जेष्यसीति। गार्हपत्य मग्र आऽदधात्। गार्हपत्यँ वा अनु प्रजाः पशवः प्र जायन्ते। गार्हपत्येनैवास्मै प्रजां पशू न्प्राजनयत्। अथान्वाहार्यपचनम्। तिर्यङ्ङिव वा अयँ लोकः। अस्मिन्नेव तेन लोके प्रत्यतिष्ठत्। अथाऽऽहवनीयम्। तेनैव सुवर्गँ लोक मभ्यजयत्।। 32।। ❀ यस्यैव मग्नि राधीयते। प्र प्रजया पशुभि र्मिथुनै र्जायते। प्रत्यस्मि न्लोके तिष्ठति। अभि सुवर्गँ लोक ञ्जयति। यस्य वा अयथादेवत मग्नि राधीयते। आ देवताभ्यो वृश्च्यते। पापीया न्भवति। यस्य यथादेवतम्। न देवताभ्य आवृश्च्यते। वसीया न्भवति।। 33।।

❀ 卐 भृगूणा- न्त्वा--卐ऽङ्गिरसाँ-- -व्रतपते व्रतेनाऽऽदधामी-ति भृग्वङ्गिरसा मादध्यात्।

卐 आदित्यानान्त्वा देवानाँ व्रतपते व्रतेनाऽऽदधामी- त्यन्यासां ब्राह्मणीनां प्रजानाम्।

卐 वरुणस्य त्वा राज्ञो व्रतपते व्रतेनाऽऽदधामी-ति राज्ञः।

卐 इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनाऽऽदधामी-ति राजन्यस्य।

卐 मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनाऽऽदधामी-ति वैश्यस्य।

卐 ऋभूणान्त्वा देवानाँ व्रतपते व्रतेनाऽऽदधामी- ति रथकारस्य। यथादेवत मग्नि रा धीयते। न देवताभ्य आवृश्च्यते। वसीया न्भवति।। 34।। (ध्यायति वै रात्रि श्चाव रुन्धे भविष्यन्तीत्यब्रवी ज्जनिष्यसेऽजय द्वसीया न्भवति नव च। 4।)

❀ प्रजापति र्वाच स्सत्य मपश्यत्। तेनाग्नि माऽधत्त। तेन वै स आर्ध्नोत्। 卐 भू 卐 र्भुव 卐 स्सुव- रित्याह। एतद्वै वाच स्सत्यम्। य एतेनाग्नि माधत्ते। ऋध्नोत्येव। अथो सत्यप्राशू रेव भवति। अथो य एवँ विद्वा नभिचरति। स्तृणुत एवैनम्।। 35।। ❀ भूरित्याह। प्रजा एव

तद्यजमान स्सृजते। भुव इत्याह। अस्मिन्नेव लोके प्रतितिष्ठति। सुव रित्याह। सुवर्ग एव लोके प्रतितिष्ठति। त्रिभि रक्षरै र्गार्हपत्य मादधाति। त्रय इमे लोकाः। एष्वेवैनँ लोकेषु प्रतिष्ठित माधत्ते। सर्वैः पञ्चभि राहवनीयम्।। 36।।❀ सुवर्गाय वा एष लोकायाऽऽधीयते। यदाहवनीयः। सुवर्ग एवास्मै लोके वाच स्सत्यꣳ सर्व माप्नोति। त्रिभि र्गार्हपत्य मा दधाति। पञ्चभि राहवनीयम्। अष्टौ सं पद्यन्ते। अष्टाऽक्षरा गायत्री। गायत्रोऽग्निः। यावा नेवाग्निः। त मा धत्ते।। 37।।❀ प्रजापतिः प्रजा असृजत। ता अस्माथ्सृष्टाः पराची रायन्न्। ताभ्यो ज्योति रुदगृह्णात्। तञ्ज्योतिः पश्यन्तीः प्रजा अभि समाऽवर्तन्त। उपरीवाग्नि मुद्गृह्णीया दुद्धरन्न्। ज्योति रेव पश्यन्तीः प्रजा यजमान मभि समावर्तन्ते। प्रजापते रक्ष्यश्वयत्। तत्पराऽपतत्। तदश्वोऽभवत्। तदश्वस्याश्वत्वम्।। 38।।❀ एष वै प्रजापतिः। यदग्निः। प्राजापत्योऽश्वः। यदश्वं पुरस्ता न्नयति। स्वमेव चक्षुः पश्य न्प्रजापति रनूदेति। वज्री वा एषः। यदश्वः। यदश्वं पुरस्ता न्नयति। जातानेव भ्रातृव्या न्प्रणुदते। पुन रावर्तयति।। 39।।❀ जनिष्यमाणा नेव प्रतिनुदते। न्याहवनीयो गार्हपत्य मकामयत। निगार्हपत्य आहवनीयम्। तौ विभाज न्नाशक्नोत्। सोऽश्वः पूर्ववाड्भूत्वा। प्राञ्चँ पूर्व मुदवहत्। तत्पूर्ववाहः पूर्ववाह्त्वम्। यदश्वं पुरस्ता न्नयति। विभक्ति रेवैनयो स्सा। अथो नानावीर्या वेवैनौ कुरुते।। 40।।❀ यदुपर्युपरि शिरो हरेत्। प्राणान् विच्छिन्द्यात्। अधोऽध शिशरो हरति। प्राणाना ङ्गोपीथाय। इयत्यग्रे हरति। अथेयत्यथेयति। त्रय इमे लोकाः। एष्वेवैनँ लोकेषु प्रतिष्ठित मा धत्ते। प्रजापति रग्नि मसृजत। सोऽबिभे त्प्र मा धक्ष्यतीति।। 41।।❀ तस्य त्रेधा महिमानँ व्यौहत्। शान्त्या अप्रदाहाय। यत्त्रेधाऽग्नि राधीयते। महिमान मेवास्य तद्व्यूहति। शान्त्या अप्रदाहाय। पुन रा वर्तयति। महिमान मेवास्य सन्दधाति। पशुर्वा एषः। यदश्वः। एष रुद्रः।। 42।।❀ यदग्निः। यदश्वस्य पदेऽग्नि मादध्यात्। रुद्राय पशूनपि दध्यात्। अपशु र्यजमान स्स्यात्। यन्नाऽऽक्रमयेत्। अनवरुद्धा अस्य पशव स्स्युः। पार्श्वत आ क्रमयेत्। यथाऽऽहितस्याग्ने रङ्गारा अभ्यववर्तेरन्न्। अवरुद्धा अस्य पशवो भवन्ति। न रुद्रायापि दधाति।। 43।।❀ त्रीणि हवीꣳषि निर्वपति। विराज एव विक्रान्तँ यजमानोऽनु वि क्रमते। अग्नये पवमानाय। अग्नये पावकाय। अग्नये शुचये। यदग्नये पवमानाय निर्वपति। पुना त्येवैनम्। यदग्नये पावकाय। पूत एवास्मि न्नन्नाद्य

न्दधाति। यदग्नये शुचये। ब्रह्मवर्चस मेवास्मि न्नुपरिष्टा द्धधाति।। 44।। (एन माहवनीय न्यत्तेऽश्वत्वँ वर्तयति कुरुत इति रुद्रो दधाति यदग्नये शुचय एकञ्च। 5।)

❀ देवासुरा स्सँयत्ता आसन्न्। ते देवा विजय मुपयन्तः। अग्नौ वामँ वसु सन्न्यदधत। इदमु नो भविष्यति। यदि नो जेष्यन्तीति। तदग्नि र्नोथ्सह मशक्नोत्। तत्त्रेधा विन्यदधात्। पशुषु तृतीयम्। अफ्सु तृतीयम्। आदित्ये तृतीयम्।। 45।। ❀ तद्देवा विजित्य। पुन रवारुरुथ्सन्त। तेऽग्नये पवमानाय पुरोडाश मष्टाकपाल न्निरवपन्न्। पशवो वा अग्निः पवमानः। यदेव पशुष्वासीत्। तत्तेनावारुन्धत। तेऽग्नये पावकाय। आपो वा अग्निः पावकः। यदेवाफ्स्वासीत्। तत्तेनावारुन्धत।। 46।। ❀ तेऽग्नये शुचये। असौ वा आदित्योऽग्नि श्शुचिः। यदेवाऽऽदित्य आसीत्। तत्तेनावारुन्धत। ब्रह्मवादिनो वदन्ति। तनुवो वावैता अग्न्याधेयस्य। आग्नेयो वा अष्टाकपालोऽग्न्याधेयमिति। यत्तन्निर्वपेत्। नैतानि। यथाऽऽत्मा स्यात्।। 47।। ❀ नाङ्गानि। तादृगेव तत्। यदेतानि निर्वपेत्। न तम्। यथाऽङ्गानि स्युः। नाऽऽत्मा। तादृगेव तत्। उभयानि सह निरुप्याणि। यज्ञस्य साऽऽत्मत्वाय। उभयँ वा एतस्येन्द्रियँ वीर्य माप्यते।। 48।। ❀ योऽग्नि माधत्ते। ऐन्द्राग्न मेकादशकपाल मनु निर्वपेत्। आदित्य ञ्चरुम्। इन्द्राग्नी वै देवाना मयातयामानौ। ये एव देवते अयातयाम्नी। ताभ्या मेवास्मा इन्द्रियँ वीर्य मव रुन्धे। आदित्यो भवति। इयँ वा अदितिः। अस्या मेव प्रति तिष्ठति। धेन्वै वा एतद्रेतः।। 49।। ❀ यदाज्यम्। अनडुह स्तण्डुलाः। मिथुन मेवाव रुन्धे। घृते भवति। यज्ञस्यालूक्षान्तत्वाय। चत्वार आर्षेयाः प्राश्ञन्ति। दिशा मेव ज्योतिषि जुहोति। पशवो वा एतानि हवीꣳषि। एष रुद्रः। यदग्निः।। 50।। ❀ यथ्सद्य एतानि हवीꣳषि निर्वपेत्। रुद्राय पशू नपि दध्यात्। अपशु र्यजमानस्स्यात्। यन्नानु निर्वपेत्। अनवरुद्धा अस्य पशव स्स्युः। द्वादशसु रात्रीष्वनु निर्वपेत्। सँवथ्सरप्रतिमा वै द्वादश रात्रयः। सँवथ्सरेणैवास्मै रुद्रꣳ शमयित्वा। पशूनव रुन्धे। यदेकमेक मेतानि हवीꣳषि निर्वपेत्।। 51।। ❀ यथा त्रीण्यावपनानि पूरयेत्। तादृक्तत्। न प्रजनन मुच्छिꣳषेत्। एक न्निरुप्य। उत्तरे समस्येत्। तृतीय मेवास्मै लोक मुच्छिꣳषति प्रजननाय। तं प्रजया पशुभि रनु प्रजायते। अथो यज्ञस्यैवैषाऽभिक्रान्तिः। रथचक्रं प्र वर्तयति। मनुष्यरथेनैव देवरथं प्रत्यवरोहति।। 52।। ❀ ब्रह्मवादिनो वदन्ति। होतव्य मग्निहोत्रा '3' न्न होतव्या '3' मिति।

यद्यजुषा जुहुयात्। अयथापूर्वं माहुती जुहुयात्। यन्न जुहुयात्। अग्निः परा भवेत्। तूष्णीमेव होतव्यम्। यथापूर्वं माहुती जुहोति। नाऽग्निः परा भवति। अग्नीधे ददाति।। 53।। ❀ अग्निमुखा नेवर्तू न्प्रीणाति। उपबर्हण न्ददाति। रूपाणा मवरुद्ध्यै। अश्वं ब्रह्मणे। इन्द्रिय मेवाव रुन्धे। धेनुं होत्रे। आशिष एवाव रुन्धे। अनड्वाह मध्वर्यवे। वह्निर्वा अनड्वान्। वह्नि रध्वर्युः।। 54।। ❀ वह्निनैव वह्नि यज्ञस्याव रुन्धे। मिथुनौ गावौ ददाति। मिथुनस्यावरुद्ध्यै। वासो ददाति। सर्वदेवत्यँ वै वासः। सर्वा एव देवताः प्रीणाति। आ द्वादशभ्यो ददाति। द्वादश मासा स्सँवथ्सरः। सँवथ्सर एव प्रतितिष्ठति। काम मूर्ध्वं न्देयम्। अपरिमितस्यावरुद्ध्यै।। 55।। (आदित्ये तृतीयमफ्स्वासी त्तत्तेनावारुन्धत स्यादाप्यते रेतोऽग्नि रेकमेक मेतानि हवीꣳषि निर्वपे त्प्रत्यवरोहति ददा त्यध्वर्यु र्देयमेकञ्च। 6।)

### आ।का। 2। अग्न्याधेय मन्त्राः 1(एकोऽनुवाकः 1)

❀ 卐 घर्म श्शिर स्तदय मग्निः। सम्प्रियः पशुभि र्भुवत्। छर्दि स्स्तोकाय तनयाय यच्छ।।

卐 वातः प्राण स्तदय मग्निः। सम्प्रियः पशुभि र्भुवत्। स्वदित न्तोकाय तनयाय पितुं पच।।

卐 प्राची मनु प्रदिशं प्रेहि विद्वान्। अग्ने रग्ने पुरो अग्नि र्भवेह। विश्वा आशा दीद्यानो विभाहि। ऊर्जन्नो धेहि द्विपदे चतुष्पदे।। 56।।

❀ 卐 अर्क श्चक्षु स्तदसौ सूर्य स्तदय मग्निः। सम्प्रियः पशुभि र्भुवत्।।

卐 यत्ते शुक्र शुक्रँ वर्च श्शुक्रा तनूः। शुक्र ञ्ज्योति रजस्रम्। तेन मे दीदिहि तेन त्वाऽऽदधे। अग्निनाऽग्ने ब्रह्मणा।

卐 आनशे व्यानशे सर्व मायु र्व्यानशे।।卐 ये ते अग्ने शिवे तनुवौ। विराट्च स्वराट्च। ते माऽऽविशता न्ते मा जिन्वताम्।। 57।।

❀ 卐 ये ते अग्ने शिवे तनुवौ। सम्राट्चाभिभूश्च। ते माऽऽविशता न्ते मा जिन्वताम्।।

卐 ये ते अग्ने शिवे तनुवौ। विभूश्च परिभूश्च। ते माऽऽविशता न्ते मा जिन्वताम्।।

卐 ये ते अग्ने शिवे तनुवौ। प्रभ्वी च प्रभूतिश्च। ते माऽऽविशता न्ते मा जिन्वताम्।।

卐 यास्ते अग्ने शिवा स्तनुवः। ताभिस्त्वाऽऽदधे।।

卐 यास्ते अग्ने घोरा स्तनुवः। ताभि रमुङ्गच्छ।। 58।। (चतुष्पदे जिन्वता न्तनुव स्त्रीणि च। 7।)

इमे वा एते लोका अग्नयः। ते यदव्यावृत्ता आधीयेरन्न्। शोचयेयु र्यजमानम्। घर्म शिशर इति गार्हपत्य मा दधाति। वातः प्राण इत्यन्वाहार्यपचनम्। अर्क श्चक्षु रित्याहवनीयम्। तेनैवैना न्व्यावर्तयति। तथा न शोचयन्ति यजमानम्। रथन्तर मभि गायते गार्हपत्य आधीयमाने। राथन्तरो वा अयँ लोकः।। 59।। अस्मि न्नेवैनँ लोके प्रतिष्ठित मा धत्ते। वामदेव्य मभिगायत उद्ध्रियमाणे। अन्तरिक्षँ वै वामदेव्यम्। अन्तरिक्ष एवैनं प्रतिष्ठित मा धत्ते। अथो शान्तिर्वै वामदेव्यम्। शान्त मेवैनं पशव्य मुद्धरते। बृह दभिगायत आहवनीय आधीयमाने। बार्हतो वा असौ लोकः। अमुष्मि न्नेवैनँ लोके प्रतिष्ठित मा धत्ते। प्रजापति रग्नि मसृजत।। 60।। सोऽश्वोऽवारो भूत्वा पराङैत्। तँ वारवन्तीयेनावारयत। तद्वारवन्तीयस्य वारवन्तीयत्वम्। श्यैतेन श्येती अकुरुत। तच्छ्यैतस्य श्यैतत्वम्। यद्वारवन्तीय मभिगायते। वारयित्वैवैनं प्रतिष्ठित मा धत्ते। श्यैतेन श्येती कुरुते। घर्म शिशर इति गार्हपत्य मा दधाति। सशीर्षाण मेवैन मा धत्ते।। 61।। उपैन मुत्तरो यज्ञो नमति। रुद्रो वा एषः। यदग्निः। स आधीयमान ईश्वरो यजमानस्य पशून् हिꣳसितोः। सम्प्रियः पशुभि र्भुव दित्याह। पशुभि रेवैनꣳ सम्प्रिय ङ्करोति। पशूना महिꣳसायै। छर्दि स्स्तोकाय तनयाय यच्छेत्याह। आशिष मेवैता मा शास्ते। वातः प्राण इत्यन्वाहार्यपचनम्।। 62।। सप्राण मेवैन मा धत्ते। स्वदित न्तोकाय तनयाय पितुं पचेत्याह। अन्न मेवास्मै स्वदयति। प्राची मनु प्रदिशं प्रेहि विद्वा नित्याह। विभक्ति रेवैनयो स्सा। अथो नानावीर्या वेवैनौ कुरुते। ऊर्ज न्नो धेहि द्विपदे चतुष्पद इत्याह। आशिष मेवैता मा शास्ते। अर्क श्चक्षु रित्याहवनीयम्। अर्को वै देवाना मन्नम्।। 63।। अन्न मेवाव रुन्धे। तेन मे दीदिहीत्याह। समिन्ध एवैनम्। आनशे व्यानश इति त्रिरुदिङ्गयति। त्रय इमे लोकाः। एष्वेवैनँ लोकेषु प्रतिष्ठित मा धत्ते। तत्तथा न कार्यम्। वीङ्गित मप्रतिष्ठित मा दधीत। उद्धृत्यैवाऽधाया ऽभिमन्त्रियः। अवीङ्गित मेवैनं प्रतिष्ठित माधत्ते। विराड्व स्वराड्व यास्ते अग्ने शिवा स्तनुव स्ताभि स्त्वाऽदध इत्याह। एता वा अग्ने श्शिवा स्तनुवः। ताभि रेवैनꣳ समर्धयति। यास्ते अग्ने घोरा स्तनुव स्ताभि रमु ङ्गच्छेति ब्रूया द्यन्द्विष्यात्। ताभि रेवैनं परा भावयति।। 64।। (लोकोऽसृजतैन मा धत्ते ऽन्वाहार्यपचन न्देवाना मन्नमेनं प्रतिष्ठित माधत्ते पञ्च च। 8।)

❀ शमीगर्भा दग्निं मन्थति। एषा वा अग्ने र्यज्ञिया तनूः। तामेवास्मै जनयति। अदितिः पुत्रकामा। साध्येभ्यो देवेभ्यो ब्रह्मौदन मपचत्। तस्या उच्छेषण मददुः। तत्प्राऽऽश्ञात्। सा रेतोऽधत्त। तस्यै धाता चार्यमा चाजायेताम्। सा द्वितीय मपचत्।। 65।। ❀ तस्या उच्छेषण मददुः। तत्प्राऽऽश्ञात्। सा रेतोऽधत्त। तस्यै मित्रश्च वरुणश्चाजायेताम्। सा तृतीय मपचत्। तस्या उच्छेषण मददुः। तत्प्राऽऽश्ञात्। सा रेतोऽधत्त। तस्या अ॑शश्च भगश्चाजायेताम्। सा चतुर्थ मपचत्।। 66।। ❀ तस्या उच्छेषण मददुः। तत्प्राऽऽश्ञात्। सा रेतोऽधत्त। तस्या इन्द्रश्च विवस्वा॑श्चाजायेताम्। ब्रह्मौदनं पचति। रेत एव तद्दधाति। प्राश्ञन्ति ब्राह्मणा ओदनम्। यदाज्य मुच्छिष्यते। तेन समिधोऽभ्यज्याऽऽदधाति। उच्छेषणाद्धा अदिती रेतोऽधत्त।। 67।। ❀ उच्छेषणादेव तद्रेतो धत्ते। अस्थि वा एतत्। यथ्समिधः। एतद्रेतः। यदाज्यम्। यदाज्येन समिधोऽभ्यज्याऽऽदधाति। अस्थ्येव तद्रेतसि दधाति। तिस्र आ दधाति मिथुनत्वाय। इयती र्भवन्ति। प्रजापतिना यज्ञमुखेन सम्मिताः।। 68।। ❀ इयती र्भवन्ति। यज्ञपरुषा सम्मिताः। इयती र्भवन्ति। एतावद्वै पुरुषे वीर्यम्। वीर्यसम्मिताः। आर्द्रा भवन्ति। आर्द्र मिव हि रेत स्सिच्यते। चित्रियस्याश्वत्थस्याऽऽदधाति। चित्रमेव भवति। घृतवतीभि रा दधाति।। 69।। ❀ एतद्वा अग्नेः प्रिय न्धाम। यद्धृतम्। प्रियेणैवैन न्धाम्ना समर्धयति। अथो तेजसा। गायत्रीभि र्ब्राह्मणस्याऽऽदध्यात्। गायत्रछन्दा वै ब्राह्मणः। स्वस्य छन्दसः प्रत्ययनस्त्वाय। त्रिष्टुग्भी राजन्यस्य। त्रिष्टुप्छन्दा वै राजन्यः। स्वस्य छन्दसः प्रत्ययनस्त्वाय।। 70।। ❀ जगतीभि र्वैश्यस्य। जगतीछन्दा वै वैश्यः। स्वस्य छन्दसः प्रत्ययनस्त्वाय। त॑ सँवथ्सर ङ्गोपायेत्। सँवथ्सर॑ हि रेतो हितँ वर्धते। यद्येन॑ सँवथ्सरे नोपनमेत्। समिधः पुन रा दध्यात्। रेत एव तद्धितँ वर्धमान मेति। न मा॑स मश्ञीयात्। न स्त्रिय मुपेयात्।। 71।। ❀ यन्मा॑स मश्ञीयात्। यथ्स्त्रिय मुपेयात्। निर्वीर्य स्स्यात्। नैन मग्नि रुप नमेत्। श्व आधास्यमानो ब्रह्मौदनं पचति। आदित्या वा इत उत्तमा स्सुवर्गँ लोक मायन्न्। ते वा इतो यन्तं प्रति नुदन्ते। एते खलु वावाऽऽदित्याः। यद्ब्राह्मणाः। तैरेव सन्त्व ङ्गच्छति।। 72।। ❀ नैनं प्रतिनुदन्ते। ब्रह्मवादिनो वदन्ति। क्वासः। अग्निः कार्यः। योऽस्मै प्रजां पशू न्प्रजनयतीति। शल्कै स्ता॑ रात्रि मग्नि मिन्धीत। तस्मि न्नुपव्युष मरणी निष्टपेत्। यथर्षभाय वाशितान्या विच्छायति। तादृगेव तत्।

अपोदूह्य भस्माग्निं मन्थति।। 73।।❀ सैव साऽग्ने स्सन्ततिः। तं मथित्वा प्राञ्च मुद्धरति। सँवथ्सर मेव तद्रेतो हितं प्र जनयति। अनाहित स्तस्याग्नि रित्याहुः। यस्समिधोऽनाधायाग्नि माधत्त इति। तास्सँवथ्सरे पुरस्तादा दध्यात्। सँवथ्सरा देवैन मवरुध्याऽऽधत्ते। यदि सँवथ्सरे नाऽऽदध्यात्। द्वादश्यां पुरस्ता दादध्यात्। सँवथ्सरप्रतिमा वै द्वादश रात्रयः। सँवथ्सर मेवास्याऽऽहिता भवन्ति। यदि द्वादश्या न्नाऽऽदध्यात्। त्र्यहे पुरस्तादा दध्यात्। आहिता एवास्य भवन्ति।। 74।। (द्वितीय मपच चतुर्थ मपच ददिती रेतोऽधत्त सम्मिता घृतवतीभिरा दधाति राजन्य स्स्वस्य छन्दसꣳ प्रत्ययनस्त्वायेया द्वच्छति मन्थति रात्रय श्चत्वारि च। 9।)

❀ प्रजापतिꣳ प्रजा असृजत। स रिरिचानोऽमन्यत। स तपोऽतप्यत। स आत्मन्वीर्य मपश्यत्। तदवर्धत। तदस्मा थ्सहसोर्ध्वं मसृज्यत। सा विराडभवत्। तान्देवासुरा व्यगृह्णत। सोऽब्रवी त्प्रजापतिः। मम वा एषा।। 75।।❀ दोहा एव युष्माक मिति। सा ततꣳ प्राच्युदक्रामत्। तत्प्रजापतिꣳ पर्यगृह्णात्। अथर्व पितुं मे गोपायेति। सा द्वितीय मुदक्रामत्। तत्प्रजापतिꣳ पर्यगृह्णात्। नर्य प्रजां मे गोपायेति। सा तृतीय मुदक्रामत्। तत्प्रजापतिꣳ पर्यगृह्णात्। शꣳस्य पशून्मे गोपायेति।। 76।।❀ सा चतुर्थ मुदक्रामत्। तत्प्रजापतिꣳ पर्यगृह्णात्। सप्रथ सभां मे गोपायेति। सा पञ्चम मुदक्रामत्। तत्प्रजापतिꣳ पर्यगृह्णात्। अहे बुध्निय मन्त्रं मे गोपायेति। अग्नीन् वाव सा तान्व्यक्रामत। तान्प्रजापतिꣳ पर्यगृह्णात्। अथो पङ्क्ति मेव। पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा।। 77।।❀ तामात्मनोऽधि निर्मिमीते। यदग्नि राधीयते। तस्मा देतावन्तोऽग्नय आधीयन्ते। पाङ्क्तं वा इदꣳ सर्वम्। पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोति। अथर्व पितुं मे गोपायेत्याह। अन्न मेवैतेन स्पृणोति। नर्य प्रजां मे गोपायेत्याह। प्रजा मेवैतेन स्पृणोति। शꣳस्य पशून्मे गोपायेत्याह।। 78।।❀ पशू नेवैतेन स्पृणोति। सप्रथ सभां मे गोपायेत्याह। सभा मेवैतेनेन्द्रियꣳ स्पृणोति। अहे बुध्निय मन्त्रं मे गोपायेत्याह। मन्त्र मेवैतेन श्रियꣳ स्पृणोति। यदन्वाहार्यपचने ऽन्वाहार्यं पचन्ति। तेन सोऽस्याभीष्टꣳ प्रीतः। यद्गार्हपत्य आज्य मधिश्रयन्ति सं पत्नी र्याजयन्ति। तेन सोऽस्याऽभीष्टꣳ प्रीतः। यदाहवनीये जुह्वति।। 79।।❀ तेन सोऽस्याभीष्टꣳ प्रीतः। यथ्सभायाँ विजयन्ते। तेन सोऽस्याभीष्टꣳ प्रीतः। यदावसथेऽन्नꣳ हरन्ति। तेन सोऽस्याभीष्टꣳ प्रीतः। तथाऽस्य सर्वे प्रीता अभीष्टा आ धीयन्ते। प्रवसथ मेष्य न्नेव

मुपतिष्ठेतैकमेकम्। यथा ब्राह्मणाय गृहेवासिने परिदाय गृहानेति। तादृगेव तत्। पुन रागत्योप तिष्ठते। साभागेय मेवैषा न्तत्। सा तत ऊर्ध्वाऽरोहत्। सा रोहिण्यभवत्। तद्रोहिण्यै रोहिणित्वम्। रोहिण्या मग्नि मा दधीत। स्व एवैनँ योनौ प्रतिष्ठित मा धत्ते। ऋध्नोत्येनेन।। 80।।(एषा पशून्मे गोपायेति प्रविष्टा पशून्मे गोपायेत्याह जुहृति तिष्ठते सप्त च। 10।)

(ब्रह्म सन्धत्त ङ्कृत्तिकासूद्धन्ति द्वादशसु प्रजापति र्वाचो देवासुरा स्तदग्निर्नो द्धर्म शिशर इमे वै शमीगर्भा त्प्रजापति स्स रिरिचान स्सतप स्स आत्मन्वीर्य न्दश। 10। ब्रह्म सन्धत्त न्तौ दिव्या वथो शन्त्वाय प्राच्येषाँ यदुपर्युपरि यथ्सद्य स्सोऽश्वोऽवारो भूत्वा जगतीभि रशीतिः। 80। ब्रह्म सन्धत्त मृध्नोत्येनेन।।)

## ꣼ प्रथमाष्टके द्वितीयꣳ प्रपाठकः

### आ।का। 1। अग्न्याधेय मन्त्राः 1(एकोऽनुवाकः 1)

❀ 卐 उद्धन्यमान मस्या अमेध्यम्। अप पाप्मानँ यजमानस्य हन्तु। शिवा न स्सन्तु प्रदिश श्चतस्रः। शन्नो माता पृथिवी तोकसाता।।

卐 शन्नो देवी रभिष्टये। आपो भवन्तु पीतये। शँ यो रभि स्त्रवन्तु नः।।

卐 वैश्वानरस्य रूपम्। पृथिव्यां परिस्रसा। स्योन मा विशन्तु नः।। 1।।

❀ 卐यदिद न्दिवो यददꣳ पृथिव्याः। सञ्जज्ञाने रोदसी सम्बभूवतुः। ऊषा न्कृष्ण मवतु कृष्ण मूषाः। इहोभयो र्यज्ञिय मा गमिष्ठाः।।

卐 ऊतीꣳ कुर्वाणो यत्पृथिवी मचरः। गुहाऽऽकार माखुरूपं प्रतीत्य। तत्ते न्यक्त मिह सम्भरन्तः। शत ञ्जीवेम शरद स्सवीराः।।

卐 ऊर्जं पृथिव्या रस माभरन्तः। शत ञ्जीवेम शरदꣳ पुरूचीः।। 2।। ❀ वम्रीभि रनुवित्तङ्गुहासु। श्रोत्रन्त उर्व्यबधिरा भवामः।।

卐 प्रजापतिसृष्टानां प्रजानाम्। क्षुधोपहत्यै सुवितन्नो अस्तु। उप प्रभिन्न मिष मूर्जं प्रजाभ्यः। सूदङ्गृहेभ्यो रस मा भरामि।।

卐 यस्य रूपं बिभ्र दिमा मविन्दत्। गुहा प्रविष्टाꣳ सरिरस्य मध्ये। तस्येदँ विहत माभरन्तः। अछम्बद्कार मस्याँ विधेम।। 3।।

❀ 卐 यत्पर्यपश्यथ्सरिरस्य मध्ये। उर्वी मपश्य ज्जगतꣳ प्रतिष्ठाम्। तत्पुष्करस्याऽऽयतनाद्धि जातम्। पर्णं पृथिव्याꣳ प्रथनꣳ हरामि।।

卐 याभि रद्दꣳह ज्जगतꣳ प्रतिष्ठाम्। उर्वी मिमाँ विश्वजनस्य भर्त्रीम्। ता न श्शिवा श्शर्करा स्सन्तु सर्वाः।।

卐 अग्ने रेतश्चन्द्रꣳ हिरण्यम्। अद्भ्य स्सम्भूत ममृतं प्रजासु। तथ्सम्भर न्नुत्तरतो निधाय।। 4।। ❀ अतिप्रयच्छ न्दुरिति न्तरेयम्।।

卐 अश्वो रूपङ्कृत्वा यदश्वत्थेऽतिष्ठः। सँवथ्सर न्देवेभ्यो निलाय। तत्ते न्यक्त मिह सम्भरन्तः। शत ञ्जीवेम शरद स्सवीराः।।

卐 ऊर्जꣳ पृथिव्या अध्युत्थितोऽसि। वनस्पते शतवल्शो विरोह। त्वया वय मिषमूर्जं मदन्तः। रायस्पोषेण समिषा मदेम।।

卐 गायत्रिया ह्रियमाणस्य यत्ते।। 5।। ❀ पर्ण मपत त्तृतीयस्यै दिवोऽधि। सोऽयं पर्ण स्सोमपर्णाद्धि जातः। ततो हरामि सोमपीथस्यावरुद्ध्यै।।

卐 देवानां ब्रह्मवादँ वदताँ यत्। उपाश्रृणो स्सुश्रवा वै श्रुतोऽसि। ततो मामा विशतु ब्रह्मवर्चसम्। तथ्सम्भरꣳ स्तदवरुन्धीय साक्षात्।।

卐 यया ते सृष्टस्याग्नेः। हेति मशमय त्प्रजापतिः। तामिमा मप्रदाहाय।। 6।। ❀ शमीꣳ शान्त्यै हराम्यहम्।।

卐 यत्ते सृष्टस्य यतः। विकङ्कतं भा आर्छ ज्जातवेदः। तया भासा सम्मितः। उरुन्नो लोक मनु प्रभाहि।।

卐 यत्ते तान्तस्य हृदय माऽच्छिन्द न्जातवेदः। मरुतोऽद्भि स्तमयित्वा। एतत्ते तदशने स्सं भरामि। साऽऽत्मा अग्ने सहृदयो भवेह।।

卐 चित्रिया दश्वत्था थ्सम्भृता बृहत्यः।। 7।। ❀ शरीर मभि सꣳस्कृतास्स्थ। प्रजापतिना यज्ञमुखेन सम्मिताः। तिस्र स्त्रिवृद्धि र्मिथुनाꣳ प्रजात्यै।।

卐 अश्वत्था द्धव्यवाहाद्धि जाताम्। अग्ने स्तनूँ यज्ञियाऽ सं भरामि। शान्तयोनिऽ शमीगर्भम्। अग्नये प्रजनयितवे।।

卐 यो अश्वत्थ श्शमीगर्भः। आरुरोह त्वे सचा। तन्ते हरामि ब्रह्मणा।। 8।। ❀ यज्ञियैः केतुभि स्सह।

卐 यन्त्वा समभर न्जातवेदः। यथाशरीरं भूतेषु न्यक्तम्। स सम्भृत स्सीद शिवः प्रजाभ्यः। उरुन्नो लोक मनुनेषि विद्वान्।।

卐 प्रवेधसे कवये मेध्याय। वचो वन्दारु वृषभाय वृष्णे। यतो भय मभय न्तन्नो अस्तु। अव देवान् यजे हेड्यान्।।

卐 समिधाऽग्नि न्दुवस्यत।। 9।। ❀ घृतै र्बोधयतातिथिम्। आऽस्मिन् हव्या जुहोतन।।

卐 उप त्वाऽग्ने हविष्मतीः। घृताची र्यन्तु हर्यत। जुषस्व समिधो मम।।

卐 तन्त्वा समिद्भि रङ्गिरः। घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य।।

卐 समिध्यमानः प्रथमो नु धर्मः। समक्तुभि रज्यते विश्ववारः।। 10।। ❀ शोचिष्केशो घृतनिर्णि क्पावकः। सुयज्ञो अग्नि र्यजथाय देवान्।।

卐 घृतप्रतीको घृतयोनि रग्निः। घृतै स्समिद्धो घृत मस्यान्नम्। घृतप्रुषस्त्वा सरितो वहन्ति। घृतं पिब न्थ्सुयजा यक्षि देवान्।।

卐 आयुर्दा अग्ने हविषो जुषाणः। घृतप्रतीको घृतयोनि रेधि। घृतं पीत्वा मधु चारु गव्यम्। पितेव पुत्र मभि रक्षता दिमम्।। 11।।

❀ 卐 त्वामग्ने समिधानँ यविष्ठ। देवा दूत ञ्चक्रिरे हव्यवाहम्। उरुज्रयस ङ्घृतयोनि माहुतम्। त्वेषञ्चक्षु र्दधिरे चोदयन्वति।।

卐 त्वामग्ने प्रदिव आहुत ङ्घृतेन। सुम्नायव स्सुषमिधा समीधिरे। स वावृधान ओषधीभि रुक्षितः। उरु ज्रयाऽसि पार्थिवा वितिष्ठसे।।

卐 घृतप्रतीकँ व ऋतस्य धूर्षदम्। अग्निं मित्रन्न समिधान ऋञ्जते।। 12।। ❀ इन्धानो अक्रो विदथेषु दीद्यत्। शुक्रवर्णा मुदु नो यऽसते धियम्।।

卐 प्रजा अग्ने सँवासय। आशाश्च पशुभि स्सह। राष्ट्राण्यस्मा आधेहि। यान्यास न्थ्सवितु स्सवे।।

卐 मही विश्पत्नी सदने ऋतस्य। अर्वाची एत न्धरुणे रयीणाम्। अन्तर्वत्नी जन्य ञ्जातवेदसम्। अध्वराणा ञ्जनयथ॰ पुरोगाम्।। 13।।

❀ 卐 आरोहत न्दशत॰ शक्करी र्मम। ऋतेनाग्न आयुषा वर्चसा सह। ज्योग्जीवन्त उत्तरामुत्तरा॰ समाम्। दर्शमहं पूर्णमासँ यज्ञँ यथा यजै।।

卐 ऋत्वियवती स्थो अग्निरेतसौ। गर्भ न्दधाथा न्ते वा मह न्ददे। तथ्सत्यँ यद्वीरं बिभृथः। वीर ञ्जनयिष्यथः। ते मत्प्रात॰ प्रजनिष्येथे। ते मा प्रजाते प्रजनयिष्यथः।। 14।। ❀ प्रजया पशुभि र्ब्रह्मवर्चसेन सुवर्गे लोके।।

卐 अनृता थ्सत्य मुपैमि। मानुषा द्दैव्य मुपैमि। दैवीँ वाचँ यच्छामि।।

卐 शल्कै रग्नि मिन्धानः। उभौ लोकौ सनेमहम्। उभयो र्लोकयोर् ऋद्ध्वा। अति मृत्यु न्तराम्यहम्।।

卐 जातवेदो भुवनस्य रेतः। इह सिञ्च तपसो यज्जनिष्यते।। 15।। ❀ अग्नि मश्वत्था दधि हव्यवाहम्। शमीगर्भा ज्जनयन् यो मयोभूः।।

卐 अयन्ते योनिर् ऋत्वियः। यतो जातो अरोचथाः। तञ्जान न्नग्न आ रोह। अथा नो वर्धया रयिम्।।

卐 अपेत वीत वि च सर्पतातः। येऽत्र स्थ पुराणा ये च नूतनाः। अदा दिदँ यमोऽवसानं पृथिव्याः। अक्रन्निमं पितरो लोक मस्मै।। 16।।

❀ 卐 अग्ने भस्मा ऽ卐स्यग्ने॰ पुरीषमसि।।

卐 सं'2'ज्ञान मसि कामधरणम्।।

卐 मयि ते कामधरणं भूयात्।।

卐 सँ वस्सृजामि हृदयानि। स॰सृष्टं मनो अस्तु वः। स॰सृष्ट॰ प्राणो अस्तु वः।।

卐 सँ या व॰ प्रिया स्तनुवः। सं प्रिया हृदयानि वः। आत्मा वो अस्तु सम्प्रियः। सम्प्रिया स्तनुवो मम।। 17।।

❀ 卐 कल्पेता न्द्यावापृथिवी। कल्पन्ता माप ओषधीः। कल्पन्ता मग्नय॰ पृथक्। मम ज्यैष्ठ्याय सव्रताः।।

卐 येऽग्नय स्समनसः। अन्तरा द्यावापृथिवी। वासन्तिका वृतू अभि कल्पमानाः। इन्द्र मिव देवा अभि सँविशन्तु।।

卐 दिवस्त्वा वीर्येण। पृथिव्यै महिम्ना।। 18।। ❀ अन्तरिक्षस्य पोषेण। सर्वपशु मा दधे।।

卐 अजीजन न्नमृतं मर्त्यासः। अस्रेमाण न्तरणिँ वीडुजम्भम्। दश स्वसारो अग्रुव स्समीचीः। पुमाꣳस ञ्जात मभि सꣳरभन्ताम्।।

卐 प्रजापतेस्त्वा प्राणेनाभि प्राणिमि। पूष्णः॰ पोषेण मह्यम्। दीर्घायुत्वाय शतशारदाय। शतꣳ शरद्भ्य आयुषे वर्चसे।। 19।। ❀ जीवात्वै पुण्याय।।

卐 अह न्त्वदस्मि मदसि त्वमेतत्। ममासि योनि स्तव योनि रस्मि। ममैव सन्वह हव्या न्यग्ने। पुत्रः॰ पित्रे लोककृ ज्जातवेदः।।

卐 प्राणे त्वाऽमृत मादधामि। अन्नाद मन्नाद्याय। गोप्तार ङ्गुप्त्यै।।

卐 सुगार्हपत्यो विदह न्नरातीः। उषस श्श्रेयसीश्श्रेयसी र्दधत्।। 20।। ❀ अग्ने सपत्नाꣳ अपबाधमानः। रायस्पोष मिष मूर्ज मस्मासु धेहि।।

卐 इमा उ मा मुप तिष्ठन्तु रायः। आभिः॰ प्रजाभि रिह सँ वसेय। इहो इडा तिष्ठतु विश्वरूपी। मध्ये वसो र्दीदिहि जातवेदः।।

卐 ओजसे बलाय त्वोद्यच्छे। वृषणे शुष्मायाऽऽयुषे वर्चसे। सपत्नतूरसि वृत्रतूः।।

卐 यस्ते देवेषु महिमा सुवर्गः।। 21।। ❀ यस्त आत्मा पशुषु प्रविष्टः। पुष्टिर्या ते मनुष्येषु पप्रथे। तया नो अग्ने जुषमाण एहि।।

卐 दिवः॰ पृथिव्याः॰ पर्यन्तरिक्षात्। वाता त्पशुभ्यो अध्योषधीभ्यः। यत्रयत्र जातवेद स्सम्बभूथ। ततो नो अग्ने जुषमाण एहि।।

卐 प्राची मनु प्रदिशं प्रेहि विद्वान्। अग्ने रग्ने पुरो अग्नि र्भवेह। विश्वा आशा दीद्यानो विभाहि।। 22।। ❀ ऊर्जन्नो धेहि द्विपदे चतुष्पदे।।

卐 अन्वग्नि रुषसा मग्र मख्यत्। अन्वहानि प्रथमो जातवेदाः। अनु सूर्यस्य पुरुत्रा च रश्मीन्। अनु द्यावापृथिवी आततान।।

卐 विक्रमस्व महाꣳ असि। वेदिष न्मानुषेभ्यः। त्रिषु लोकेषु जागृहि।।

卐 यदिद न्दिवो यददः पृथिव्याः। सँविदाने रोदसी सम्बभूवतुः।। 23।। ❀ तयोः पृष्ठे सीदतु जातवेदाः। शम्भूः प्रजाभ्य स्तनुवे स्योनः।।

卐 प्राण न्त्वाऽमृत आ दधामि। अन्नाद मन्नाद्याय। गोप्तार ङ्गुप्त्यै।।

卐 यत्ते शुक्र शुक्रँ वर्च श्शुक्रा तनूः। शुक्र ञ्ज्योति रजस्रम्। तेन मे दीदिहि तेन त्वाऽऽदधे। अग्निनाऽग्ने ब्रह्मणा।।

卐 आनशे व्यानशे सर्व मायु र्व्यानशे।। 24।।

❀ 卐 नर्य प्रजां मे गोपाय। अमृतत्वाय जीवसे। जाता ञ्जनिष्यमाणाञ्च। अमृते सत्ये प्रतिष्ठिताम्।।

卐 अथर्व पितुं मे गोपाय। रस मन्न मिहाऽऽयुषे। अदब्धायोऽशीततनो। अविषन्नः पितुङ्कृणु।।

卐 शङ्स्य पशून्मे गोपाय। द्विपादो ये चतुष्पदः।। 25।। ❀ अष्टाशफाश्च य इहाग्ने। ये चैकशफा आशुगाः।।

卐 सप्रथ सभां मे गोपाय। ये च सभ्या स्सभासदः। तानिन्द्रियावतः कुरु। सर्व मायु रुपाऽऽसताम्।।

卐 अहे बुध्निय मन्त्रं मे गोपाय। यमृषय स्त्रैविदा विदुः। ऋच स्सामानि यजूꣳषि। सा हि श्री रमृता सताम्।। 26।।

❀ 卐 चतुश्शिखण्डा युवति स्सुपेशाः। घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय। मह्य न्धुक्ष्व यजमानाय कामान्।।

卐 इहैव सन्तत्र सतो वो अग्नयः। प्राणेन वाचा मनसा बिभर्मि। तिरो मा सन्त मायु र्मा प्रहासीत्। ज्योतिषा वो वैश्वानरेणोपतिष्ठे।।

卐 पञ्चधाऽग्नी न्व्यक्रामत्। विराट्थ्सृष्टा प्रजापतेः। ऊर्ध्वाऽरोह द्रोहिणी। योनि रग्नेः प्रतिष्ठितिः।। 27।। (विशन्तु नः पुरूची र्विधेम निधाय यत्तेऽप्रदाहाय बृहत्यो ब्रह्मणा दुवस्यत विश्ववार इम मृञ्जते पुरोगां प्र जनयिष्यथो जनिष्यतेऽस्मै मम महिम्ना वर्चसे दध थ्सुवर्गो भाहि सम्बभूवतु रायु र्व्यानशे चतुष्पद स्सतां प्रजापते द्वे च। 1।)

## वै।का। सात्रायण ब्राह्मणम् 7– 6(पञ्चानुवाका: 5)

❀ नवैतान्यहानि भवन्ति। नव वै सुवर्गा लोकाः। यदेता न्यहा न्युप यन्ति। नवस्वेव तथ्सुवर्गेषु लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति। अग्निष्टोमाः परस्सामानः कार्या इत्याहुः। अग्निष्टोमसम्मित स्सुवर्गो लोक इति। द्वादशाग्निष्टोमस्य स्तोत्राणि। द्वादश मासा स्सँवथ्सरः। तत्तन्न सूक्ष्यम्। उक्थ्या एव सप्तदशाः परस्सामानः कार्याः।। 28।। ❀ पशवो वा उक्थानि। पशूना मवरुद्ध्यै। विश्वजिदभिजिता वग्निष्टोमौ। उक्थ्या स्सप्तदशाः परस्सामानः। ते सꣳस्तुता विराज मभि सं पद्यन्ते। द्वे चर्चा वति रिच्येते। एकया गौ रतिरिक्तः। एकयाऽयु रूनः। सुवर्गो वै लोको ज्योतिः। ऊर्ग्विराट्।। 29।। ❀ सुवर्गमेव तेन लोक मभि जयन्ति। यत्परꣳ राथन्तरम्। तत्प्रथमेऽह न्कार्यम्। बृहद्द्वितीये। वैरूप न्तृतीये। वैराज ञ्चतुर्थे। शाक्करं पञ्चमे। रैवतꣳ षष्ठे। तदु पृष्ठेभ्यो नयन्ति। सन्तनय एते ग्रहा गृह्यन्ते।। 30।। ❀ अतिग्राह्याः परस्सामसु। इमा नेवैते लोँका न्थ्सन्तन्वन्ति। मिथुना एते ग्रहा गृह्यन्ते। अतिग्राह्याः परस्सामसु। मिथुन मेव तै र्यजमाना अवरुन्धते। बृह त्पृष्ठं भवति। बृहद्वै सुवर्गो लोकः। बृहतैव सुवर्गँ लोकँ यन्ति। त्रयस्त्रिꣳशि नाम साम। माध्यन्दिने पवमाने भवति।। 31।। ❀ त्रयस्त्रिꣳशद्वै देवताः। देवता एवाव रुन्धते। ये वा इतः पराञ्चꣳ सँवथ्सर मुपयन्ति। न हैनन्ते स्वस्ति समश्ञुवते। अथ येऽमुतोऽर्वाञ्च मुपयन्ति। ते हैनꣳ स्वस्ति समश्ञुवते। एतद्वा अमुतोऽर्वाञ्च मुप यन्ति। यदेवम्। यो ह खलु वाव प्रजापतिः। स उ वेवेन्द्रः। तदु देवेभ्यो नयन्ति।।32।। (कार्या विराङ्गृह्यन्ते पवमाने भवतीन्द्र एकञ्च। 2।)

❀ सन्ततिर्वा एते ग्रहाः। यत्परस्सामानः। विषूवा न्दिवाकीर्त्यम्। यथा शालायै पक्षसी। एवꣳ सँवथ्सरस्य पक्षसी। यदेते न गृह्येरन्न्। विषूची सँवथ्सरस्य पक्षसी व्यवस्त्रꣳसेयाताम्। आर्ति मार्छेयुः। यदेते गृह्यन्ते। यथा शालायै पक्षसी मध्यमँ वꣳश मभि समायच्छति।। 33।। ❀ एवꣳ सँवथ्सरस्य पक्षसी दिवाकीर्त्य मभि सन्तन्वन्ति। नाऽर्ति मार्छन्ति। एकविꣳश मह र्भवति। शुक्राग्रा ग्रहा गृह्यन्ते। प्रत्युत्तब्ध्यै सयत्वाय। सौर्य एतदहः पशु रालभ्यते। सौर्योऽतिग्राह्यो गृह्यते। अहरेव रूपेण समर्धयन्ति। अथो अह्न एवैष बलि र्ह्रियते। सप्तैत दह रतिग्राह्या गृह्यन्ते।। 34।। ❀ सप्त वै शीर्षण्याः प्राणाः। असा वादित्य श्शिरः प्रजानाम्।

शीर्षन्नेव प्रजानां प्राणा न्दधाति। तस्मात्सप्त शीर्ष न्प्राणाः। इन्द्रो वृत्रꣳ हत्वा। असुरा न्पराभाव्य। स इमा न्लोका नभ्यजयत्। तस्यासौ लोकोऽनभिजित आसीत्। तँ विश्वकर्मा भूत्वाऽभ्यजयत्। यद्वैश्वकर्मणो गृह्यते।। 35।। ❀ सुवर्गस्य लोकस्याभिजित्यै। प्र वा एतेऽस्मा ल्लोका च्च्यवन्ते। ये वैश्वकर्मण ङ्गृह्णते। आदित्यश्श्वो गृह्यते। इयँ वा अदितिः। अस्यामेव प्रति तिष्ठन्ति। अन्योऽन्यो गृह्येते। विश्वान्येवान्येन कर्माणि कुर्वाणा यन्ति। अस्या मन्येन प्रति तिष्ठन्ति। तावापराार्धा त्सँवत्सरस्यान्योऽन्यो गृह्येते। तावुभौ सह महाव्रते गृह्येते। यज्ञस्यैवान्त ङ्गत्वा। उभयो र्लोकयोः प्रतितिष्ठन्ति। अर्क्य मुक्थं भवति। अन्नाद्यस्यावरुद्ध्यै।। 36।। (समायच्छ त्यतिग्राह्या गृह्यन्ते गृह्यते सँवत्सरस्यान्यो ऽन्यो गृह्येते पञ्च च। 3।)

❀ एकविꣳश एष भवति। एतेन वै देवा एकविꣳशेन। आदित्य मित उत्तमꣳ सुवर्गँ लोक माऽरोहयन्न्। स वा एष इत एकविꣳशः। तस्य दशावस्ता दहानि। दश परस्तात्। स वा एष विरा ज्युभयतः प्रतिष्ठितः। विराजि हि वा एष उभयतः प्रतिष्ठितः। तस्मादन्तरेमौ लोकौ यन्न्। सर्वेषु सुवर्गेषु लोकेष्वभितपन्नेति।। 37।। ❀ देवा वा आदित्यस्य सुवर्गस्य लोकस्य। पराचोऽतिपादा दबिभयुः। तञ्छन्दोभि रदृꣳह न्धृत्यै। देवा वा आदित्यस्य सुवर्गस्य लोकस्य। अवाचोऽवपादा दबिभयुः। तं पञ्चभी रश्मिभि रुदवयन्न्। तस्मा देकविꣳशेऽह न्पञ्च दिवाकीर्त्यानि क्रियन्ते। रश्मयो वै दिवाकीर्त्यानि। ये गायत्रे। ते गायत्रीषूत्तरयोः पवमानयोः।। 38।। ❀ महादिवाकीर्त्यꣳ होतुः पृष्ठम्। विकर्णं ब्रह्मसामम्। भासो ऽग्निष्टोमः। अथैतानि पराणि। परैर्वै देवा आदित्यꣳ सुवर्गँ लोक मपारयन्न्। यदपारयन्न्। तत्पराणां परत्वम्। पारय न्त्येनं पराणि। य एवँ वेद। अथैतानि स्पराणि। स्परैर्वै देवा आदित्यꣳ सुवर्गँ लोक मस्पारयन्न्। यदस्पारयन्न्। तत्स्पराणाꣳ स्परत्वम्। स्पारयन्त्येनꣳ स्पराणि। य एवँ वेद।। 39।। (एति पवमानयो स्स्पराणि पञ्च च। 4।)

❀ अप्रतिष्ठाँ वा एते गच्छन्ति। येषाꣳ सँवत्सरेऽनाप्तेऽथ। एकादशिन्याप्यते। वैष्णवँ वामन मा लभन्ते। यज्ञो वै विष्णुः। यज्ञ मेवाऽऽलभन्ते प्रतिष्ठित्यै। ऐन्द्राग्न मा लभन्ते। इन्द्राग्नी वै देवाना मयातयामानौ। ये एव देवते अयातयाम्नी। ते एवाऽऽलभन्ते।। 40।। ❀ वैश्वदेव मा लभन्ते। देवता एवाव रुन्धते। द्यावापृथिव्या न्धेनु मा लभन्ते। द्यावापृथिव्यो रेव प्रति तिष्ठन्ति।

वायव्यँ वथ्स मालभन्ते। वायु रेवैभ्यो यथाऽऽयतना द्देवता अव रुन्धे। आदित्या मविँ वशा मा
लभन्ते। इयँ वा अदितिः। अस्या मेव प्रति तिष्ठन्ति। मैत्रावरुणी मा लभन्ते।। 41।।❀
मित्रेणैव यज्ञस्य स्विष्टꣳ शमयन्ति। वरुणेन दुरिष्टम्। प्राजापत्य न्तूपरं महाव्रत आ लभन्ते।
प्राजापत्योऽतिग्राह्यो गृह्यते। अहरेव रूपेण समर्धयन्ति। अथो अह्न एवैष बलि र्ह्रियते। आग्नेय
मा लभन्ते प्रति प्रज्ञात्यै। अज.पेत्वान् वा एते पूर्वै र्मासै रव रुन्धते। यदेते गव्याः पशव
आलभ्यन्ते। उभयेषां पशूना मवरुध्यै।। 42।।❀ यदतिरिक्ता मेकादशिनी मालभेरन्न्। अप्रियं
भ्रातृव्य मभ्यति रिच्येत। यद्द्वौद्वौ पशू समस्येयुः। कनीय आयुः कुर्वीरन्न्। यदेते ब्राह्मणवन्तः
पशव आलभ्यन्ते। नाप्रियं भ्रातृव्य मभ्यतिरिच्यते। न कनीय आयुः कुर्वते।। 43।। (ते
एवाऽऽलभन्ते मैत्रावरुणी मा लभन्तेऽवरुध्यै सप्त च। 5।)
❀ प्रजापतिः प्रजा स्सृष्ट्वा वृत्तोऽशयत्। तन्देवा भूतानाꣳ रस न्तेज स्सम्भृत्य। तेनैन
मभिषज्यन्न्। महा नववर्तीति। तन्महाव्रतस्य महाव्रतत्वम्। महद्व्रतमिति। तन्महाव्रतस्य
महाव्रतत्वम्। महतो व्रतमिति। तन्महाव्रतस्य महाव्रतत्वम्। पञ्चविꣳश स्स्तोमो भवति।।
44।।❀ चतुर्विꣳशत्यर्धमास स्सँवथ्सरः। यद्वा एतस्मि न्थ्सँवथ्सरेऽधि प्राजायत। तदन्नं
पञ्चविꣳश मभवत्। मध्यतः क्रियते। मध्यतो ह्यन्न मशित न्धिनोति। अथो मध्यत एव प्रजाना
मूर्ग्धीयते। अथ यद्वा इद मन्ततः क्रियते। तस्मा दुदन्ते प्रजा स्समेधन्ते। अन्ततः क्रियते
प्रजननायैव। त्रिवृच्छिरो भवति।। 45।।❀ त्रेधाविहितꣳ हि शिरः। लोम छवी रस्थि। पराचा
स्तुवन्ति। तस्मात्त थ्सदृगेव। न मेद्यतोऽनु मेद्यति। न कृश्यतोऽनु कृश्यति। पञ्चदशोऽन्यः
पक्षो भवति। सप्तदशोऽन्यः। तस्मा द्वयाꣳस्यन्यतर मर्ध मभि पर्यावर्तन्ते। अन्यतरतो हि
तद्गरीयः क्रियते।। 46।।❀ पञ्चविꣳश आत्मा भवति। तस्मा न्मध्यतः पशवो वरिष्ठाः।
एकविꣳशं पुच्छम्। द्विपदासु स्तुवन्ति प्रतिष्ठित्यै। सर्वेण सह स्तुवन्ति। सर्वेण
ह्यात्मनाऽऽत्मन्वी। सहोत्पतन्ति। एकैका मुच्छिꣳषन्ति। आत्मन्न् ह्यङ्गानि बद्धानि। न वा एतेन
सर्वः पुरुषः।। 47।।❀ यदितइतो लोमानि दतो नखान्। परिमादः क्रियन्ते। तान्येव तेन
प्रत्युप्यन्ते। औदुम्बर स्तल्पो भवति। ऊर्ग्वा अन्न मुदुम्बरः। ऊर्ज एवान्नाद्यस्यावरुध्यै। यस्य
तल्पसद्य मनभिजितꣳ स्यात्। स देवानाꣳ साम्यक्षे। 卐 तल्पसद्य मभि जयानी- ति तल्प

मारुह्योद्गायेत्। तल्पसद्य मेवाभि जयति।। 48।।❀ यस्य तल्पसद्य मभिजितꣳ स्यात्। स देवाना॰ साम्यक्षे। 卐 तल्पसद्यं मा परा जेषी- ति तल्प मारुह्योद्गायेत्। न तल्पसद्यं परा जयते। प्रेङ्खे श॰सति। महो वै प्रेङ्खः। महस एवान्नाद्यस्यावरुद्ध्यै। देवासुरा स्सँयत्ता आसन्न्। त आदित्ये व्यायच्छन्त। तन्देवा स्समजयन्न्।। 49।।❀ ब्राह्मणश्च शूद्रश्च चर्मकर्ते व्यायच्छेते। दैव्यो वै वर्णो ब्राह्मणः। असुर्य श्शूद्रः। 卐 इमेऽराथ्सु रिमे सुभूत मक्र- न्नित्यन्यतरो ब्रूयात्। 卐 इम उद्वासीकारिण इमे दुर्भूत मक्र- न्नित्यन्यतरः। यदेवैषा॰ सुकृतँ या राद्धिः। तदन्यतरोऽभि श्रीणाति। यदेवैषा न्दुष्कृतँ या राद्धिः। तदन्यतरोऽपहन्ति। ब्राह्मण स्सञ्जयति। अमु मेवाऽऽदित्यं भ्रातृव्यस्य सँ विन्दन्ते।। 50।। (भवति भवति क्रियते पुरुषो जय त्यजय न्जय त्येकञ्च। 6।) (उद्धन्यमान न्नवैतानि सन्तति रेकवि॰श एषोऽप्रतिष्ठां प्रजापति र्वृत्त ष्षट्। 6। उद्धन्यमान॰ शोचिष्केशोऽग्ने सपत्ना नतिग्राह्या वैश्वदेव मा लभन्ते पञ्चाशत्। 50। उद्धन्यमान॰ सँविन्दन्ते।)

## ꕥ प्रथमाष्टके तृतीयः प्रपाठकः

### आ।का। 3। पुनराधेय ब्राह्मणम् 1(एकोऽनुवाकः 1)

❀ देवासुरा स्सँयत्ता आसन्न्। ते देवा विजय मुपयन्तः। अग्नीषोमयो स्तेजस्विनी स्तनू स्सन्न्यदधत। इदमु नो भविष्यति। यदि नो जेष्यन्तीति। तेनाग्नीषोमा वपाक्रामताम्। ते देवा विजित्य। अग्नीषोमा वन्वैच्छन्न्। तेऽग्नि मन्वविन्द न्नृतुषूथ्सन्नम्। तस्य विभक्तीभि स्तेजस्विनी स्तनू रवारुन्धत।। 1।।❀ ते सोम मन्वविन्दन्न्। तमघ्नन्न्। तस्य यथाऽभिज्ञाय न्तनू र्व्यगृह्णत। ते ग्रहा अभवन्न्। तद्ग्रहाणा ङ्ग्रहत्वम्। यस्यैवँ विदुषो ग्रहा गृह्यन्ते। तस्य त्वेव गृहीताः। नानाग्नेयं पुनराधेये कुर्यात्। यदनाग्नेयं पुनराधेये कुर्यात्। व्यृद्ध मेव तत्।। 2।।❀ अनाग्नेयँ वा एतत्क्रियते। यथ्समिध स्तनूनपात मिडो बर्हि र्यजति। उभा वाग्नेया वाज्यभागौ स्याताम्। अनाज्यभागौ भवत इत्याहुः। यदुभा वाग्नेया वन्वञ्चाविति। अग्नये पवमानायोत्तर स्स्यात्। यत्पवमानाय। तेनाऽऽज्यभागः। तेन सौम्यः। बुधन्व त्याग्नेयस्याऽऽज्यभागस्य पुरोऽनुवाक्या भवति।। 3।।❀ यथा सुप्तं बोधयति। तादृगेव तत्। अग्निन्यक्ताः पत्नीसँयाजाना मृचस्स्युः। तेनाऽऽग्नेय॰ सर्वं भवति। एकधा तेजस्विनी न्देवता मुपैतीत्याहुः। सैन मीश्वरा प्रदह इति। नेति

ब्रूयात्। प्रजननँ वा अग्निः। प्रजनन मेवोपैतीति। कृतयजु स्सम्भृतसम्भार इत्याहुः।। 4।। ❀ न सम्भृत्या स्सम्भाराः। न यजुः कार्यमिति। अथो खलु। सम्भृत्या एव सम्भाराः। कार्यँ यजुः। पुनराधेयस्य समृद्ध्यै। तेनोपाꣳशु प्र चरति। एष्य इव वा एषः। यत्पुनराधेयः। यथोपाꣳशु नष्ट मिच्छति।। 5।। ❀ तादृगेव तत्। उच्चै स्स्विष्टकृत मुथ्सृजति। यथा नष्टँ वित्त्वा प्राहाय मिति। तादृगेव तत्। एकधा तेजस्विनी न्देवता मुपैतीत्याहुः। सैन मीश्वरा प्रदह इति। तत्तथा नोपैति। प्रयाजानूयाजेष्वेव विभक्तीः कुर्यात्। यथापूर्व माज्यभागौ स्याताम्। एवं पत्नीसँयाजाः।। 6।। ❀ तद्वैश्वानरव त्प्रजननवत्तर मुपैतीति। तदाहुः। व्यृद्धँ वा एतत्। अनाग्नेयँ वा एत त्क्रियत इति। नेति ब्रूयात्। अग्निं प्रथमँ विभक्तीनाँ यजति। अग्नि मुत्तमं पत्नीसँयाजानाम्। तेनाऽऽग्नेयम्। तेन समृद्धङ्क्रियत इति।। 7।। (अरुन्धतैव तद्भवति सम्भृतसम्भार इत्याहु रिच्छति पत्नीसँयाजा नव च।। )

### सौ।का। 1। वाजपेय ब्राह्मणम् 6(नवानुवाकाः 9)

❀ देवा वै यथा दर्शँ यज्ञा नाऽहरन्त। योऽग्निष्टोमम्। य उक्थ्यम्। योऽतिरात्रम्। ते सहैव सर्वे वाजपेय मपश्यन्न्। ते। अन्योऽन्यस्मै नातिष्ठन्त। अह मनेन यजा इति। तेऽब्रुवन्न्। आजिमस्य धावामेति।। 8।। ❀ तस्मि न्नाजि मधावन्न्। तं बृहस्पति रुदजयत्। तेनायजत। स स्वाराज्य मगच्छत्। तमिन्द्रोऽब्रवीत्। मामनेन याजयेति। तेनेन्द्र मयाजयत्। सोऽग्र न्देवतानां पर्यैत्। अगच्छ थ्स्वाराज्यम्। अतिष्ठन्तास्मै ज्यैष्ठ्याय।। 9।। ❀ य एवँ विद्वान् वाजपेयेन यजते। गच्छति स्वाराज्यम्। अग्रꣳ समानानां पर्येति। तिष्ठन्तेऽस्मै ज्यैष्ठ्याय। स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः। तँ वा एतँ वाजपेय इत्याहुः। वाजाऽऽप्यो वा एषः। वाजꣳ ह्येतेन देवा ऐप्सन्न्। सोमो वै वाजपेयः। यो वै सोमँ वाजपेयँ वेद।। 10।। ❀ वाज्येवैनं पीत्वा भवति। आऽस्य वाजी जायते। अन्नँ वै वाजपेयः। य एवँ वेद। अत्त्यन्नम्। आऽस्यान्नादो जायते। ब्रह्म वै वाजपेयः। य एवँ वेद। अत्ति ब्रह्मणाऽन्नम्। आऽस्य ब्रह्मा जायते।। 11।। ❀ वाग्वै वाजस्य प्रसवः। य एवँ वेद। करोति वाचा वीर्यम्। ऐनँ वाचा गच्छति। अपिवतीँ वाचँ वदति। प्रजापति र्देवेभ्यो यज्ञा न्व्यादिशत्। स आत्मन्वाजपेय मधत्त। त न्देवा अब्रुवन्न्। एष वाव यज्ञः। यद्वाजपेयः।। 12।। ❀ अप्येव नोऽत्रास्त्विति। तेभ्य एता उज्जितीः प्रायच्छत्। ता

वा एता उज्जितयो व्याख्यायन्ते। यज्ञस्य सर्वत्वाय। देवताना मनिर्भागाय। देवा वै ब्रह्मण श्चान्नस्य च शमल मपाघ्नन्न्। यद्ब्रह्मण श्शमल मासीत्। सा गाथा नाराशꣳस्यभवत्। यदन्नस्य। सा सुरा ।। 13।।❀ तस्मा द्गायतश्च मत्तस्य च न प्रतिगृह्यम्। यत्प्रतिगृह्णीयात्। शमलं प्रतिगृह्णीयात्। सर्वा वा एतस्य वाचोऽवरुद्धाः। यो वाजपेययाजी। या पृथिव्याँ याऽग्नौ या रथन्तरे। याऽन्तरिक्षे या वायौ या वामदेव्ये। या दिवि याऽऽदित्ये या बृहति। याऽप्सु यौषधीषु या वनस्पतिषु। तस्माद्वाजपेययाज्यार्त्विजीनः। सर्वा ह्यस्य वाचोऽवरुद्धाः।। 14।। (धावामेति ज्यैष्ठ्याय वेद ब्रह्मा जायते वाजपेय स्सुराऽऽर्त्विजीन एकञ्च। 2।

❀ देवा वै यदन्यै र्ग्रहै र्यज्ञस्य नावारुन्धत। तदतिग्राह्यै रतिगृह्यावारुन्धत। तदतिग्राह्याणा मतिग्राह्यत्वम्। यदतिग्राह्या गृह्यन्ते। यदेवान्यै र्ग्रहै र्यज्ञस्य नावरुन्धे। तदेव तैरतिगृह्याव रुन्धे। पञ्च गृह्यन्ते। पाङ्क्तो यज्ञः। यावानेव यज्ञः। तमाप्त्वाऽव रुन्धे।। 15।।❀ सर्वे ऐन्द्रा भवन्ति। एकधैव यजमान इन्द्रिय न्दधति। सप्तदश प्राजापत्या ग्रहा गृह्यन्ते। सप्तदशꣳ प्रजापतिः। प्रजापते राप्त्यै। एकयर्चा गृह्णाति। एकधैव यजमाने वीर्य न्दधाति। सोमग्रहाꣳश्च सुराग्रहाꣳश्च गृह्णाति। एतद्वै देवानां परम मन्नम्। यथ्सोमः।। 16।।❀ एत न्मनुष्याणाम्। यथ्सुरा। परमेणैवास्मा अन्नाद्येनावर मन्नाद्य मवरुन्धे। सोमग्रहा न्गृह्णाति। ब्रह्मणो वा एतत्तेजः। यथ्सोमः। ब्रह्मण एव तेजसा तेजो यजमाने दधाति। सुराग्रहा न्गृह्णाति। अन्नस्य वा एतच्छमलम्। यथ्सुरा।। 17।।❀ अन्नस्यैव शमलेन शमलँ यजमाना दपहन्ति। सोमग्रहाꣳश्च सुराग्रहाꣳश्च गृह्णाति। पुमान् वै सोमः। स्त्री सुरा। तन्मिथुनम्। मिथुन मेवास्य तद्यज्ञे करोति प्रजननाय। आत्मान मेव सोमग्रहै स्स्पृणोति। जायाꣳ सुराग्रहैः। तस्मा द्वाजपेययाज्यमुष्मि न्लोके स्त्रियꣳ सं भवति। वाजपेयाभिजितꣳ ह्यस्य।। 18।।❀ पूर्वे सोमग्रहा गृह्यन्ते। अपरे सुराग्रहाः। पुरोऽक्षꣳ सोमग्रहा न्थ्सादयति। पश्चादक्षꣳ सुराग्रहान्। पापवस्यसस्य विधृत्यै। एष वै यजमानः। यथ्सोमः। अन्नꣳ सुरा। सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति। अन्नाद्येनैवैनँ व्यतिषजति।। 19।।❀ ॐ सम्पृचस्स्थ सं मा भद्रेण पृङ्क्त-त्याह। अन्नँ वै भद्रम्। अन्नाद्येनैवैनꣳ सꣳसृजति। अन्नस्य वा एतच्छमलम्। यथ्सुरा। पाप्मेव खलु वै शमलम्। पाप्मना वा एन मेतच्छमलेन व्यतिषजति। यथ्सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति। ॐ विपृच स्स्थ वि मा

पाप्मना पृङ्क्ते-त्याह। पाप्मनैवैन॰ शमलेन व्यावर्तयति।। 20।। ❀ तस्मा द्वाजपेययाजी पूतो मेध्यो दक्षिण्यः। प्राङुद्द्रवति सोमग्रहैः। अमु मेव तै र्लोक मभि जयति। प्रत्य'2'ङ्सुरा ग्रहैः। इम मेव तै र्लोक मभि जयति। प्र तिष्ठन्ति सोमग्रहैः। यावदेव सत्यम्। तेन सूयते। वाजसृद्भ्य स्सुराग्रहान् हरन्ति। अनृतेनैव विश॰ स॰सृजति। हिरण्यपात्रं मधोः पूर्ण न्ददाति। मधव्योऽसानीति। एकधा ब्रह्मण उप हरति। एकधैव यजमान आयु स्तेजो दधाति।। 21।। (आप्त्वाऽव रुन्धे सोम श्शमलँ यथ्सुरा ह्यस्यैनँ व्यतिषजति व्यावर्तयति सृजति चत्वारि च।। 3।।)

❀ ब्रह्मवादिनो वदन्ति। नाग्निष्टोमो नोक्थ्यः। न षोडशी नातिरात्रः। अथ कस्मा द्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति। पशुभि रिति ब्रूयात्। आग्नेयं पशु मा लभते। अग्निष्टोम मेव तेनाव रुन्धे। ऐन्द्राग्नेनोक्थ्यम्। ऐन्द्रेण षोडशिन स्स्तोत्रम्। सारस्वत्याऽतिरात्रम्।। 22।। ❀ मारुत्या बृहत स्स्तोत्रम्। एतावन्तो वै यज्ञक्रतवः। तान्पशुभि रेवाव रुन्धे। आत्मान मेव स्पृणोत्यग्निष्टोमेन। प्राणापाना वुक्थ्येन। वीर्य॰ षोडशिन स्स्तोत्रेण। वाच मतिरात्रेण। प्रजां बृहत स्स्तोत्रेण। इम मेव लोक मभि जय त्यग्निष्टोमेन। अन्तरिक्ष मुक्थ्येन।। 23।। ❀ सुवर्गँ लोक॰ षोडशिन स्स्तोत्रेण। देवयाना नेव पथ आ रोहत्यतिरात्रेण। नाक॰ रोहति बृहत स्स्तोत्रेण। तेज एवाऽऽत्म न्धत्त आग्नेयेन पशुना। ओजो बल मैन्द्राग्नेन। इन्द्रिय मैन्द्रेण। वाच॰ सारस्वत्या। उभावेव देवलोकञ्च मनुष्यलोकञ्चाभि जयति मारुत्या वशया। सप्तदश प्राजापत्या न्पशूना लभते। सप्तदशः प्रजापतिः।। 24।। ❀ प्रजापते राप्त्यै। श्यामा एकरूपा भवन्ति। एव मिव हि प्रजापति स्समृद्ध्यै। तान्पर्यग्निकृता नुथ्सृजति। मरुतो यज्ञ मजिघा॰स न्प्रजापतेः। तेभ्य एतां मारुतीँ वशा माऽलभत। तयैवैना नशमयत्। मारुत्या प्रचर्य। एतान्थ्सं'2'ज्ञपयेत्। मरुत एव शमयित्वा।। 25।। ❀ एतैः प्रचरति। यज्ञस्याघाताय। एकधा वपा जुहोति। एकदेवत्या हि। एते। अथो एकधैव यजमाने वीर्य न्दधाति। नैवारेण सप्तदश शरावेणैतर्हि प्रचरति। एतत्पुरोडाशा ह्येते। अथो पशूना मेव छिद्र मपि दधाति। सारस्वत्योत्तमया प्र चरति। वाग्वै सरस्वती। तस्मा त्प्राणानाँ वागुत्तमा। अथो प्रजापतावेव यज्ञं प्रतिष्ठापयति। प्रजापतिर् हि वाक्।

अपन्नदती भवति। तस्मा न्मनुष्या स्सर्वां वाचँ वदन्ति।। 26।। (अतिरात्र मन्तरिक्ष मुक्थ्येन प्रजापति श्शमयित्वोत्तमया प्रचरति षट्च। 4।)

🏺❀ सावित्र ञ्जुहोति कर्मणःकर्मणः पुरस्तात्। कस्तद्वेदेत्याहुः। यद्वाजपेयस्य पूर्वँ यदपरमिति। सवितृप्रसूत एव यथापूर्व ङ्कर्माणि करोति। सवनेसवने जुहोति। आक्रमणमेव तथ्सेतुँ यजमानः कुरुते। सुवर्गस्य लोकस्य समष्ट्यै। वाचस्पति र्वाच मद्य स्वदाति न इत्याह। वाग्वै देवानां पुराऽन्न मासीत्। वाच मेवास्मा अन्नꣳ स्वदयति।। 27।। ❀ इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथ मुपावहरति विजित्यै। वाजस्य नु प्रसवे मातरं महीमित्याह। यच्चैवेयम्। यच्चास्यामधि। तदेवाव रुन्धे। अथो तस्मि न्नेवोभयेऽभिषिच्यते। अफ्स्वन्त रमृत मफ्सु भेषज मित्यश्वा न्पल्पूलयति। अफ्सु वा अश्वस्य तृतीयं प्रविष्टम्। तदनुवेनन्वव प्लवते। यदफ्सु पल्पूलयति।। 28।। ❀ यदेवास्याफ्सु प्रविष्टम्। तदेवाव रुन्धे। बहु वा अश्वो मेध्य मुप गच्छति। यदफ्सु पल्पूलयति। मेध्यानेवैना न्करोति। वायुर्वा त्वा मनु र्वात्वेत्याह। एता वा एत न्देवता अग्रे अश्व मयुञ्जन्न्। ताभि रेवैनान् युनक्ति। सवस्योज्जित्यै। यजुषा युनक्ति व्यावृत्त्यै।। 29।। ❀ अपा न्नपा दाशुहेमन्निति सं मार्ष्टि। मेध्या नेवैना न्करोति। अथो स्तौत्येवैना नाजिꣳ सरिष्यतः। विष्णुक्रमा न्क्रमते। विष्णु रेव भूत्वेमा न्लोका नभि जयति। वैश्वदेवो वै रथः। अङ्कौ न्यङ्का वभितो रथँ यावित्याह। या एव देवता रथे प्रविष्टाः। ताभ्य एव नमस्करोति। आत्मनोऽनार्त्यै। अशमरथम्भावुकोऽस्य रथो भवति। य एवँ वेद।। 30।। (स्वदयति पल्पूलयति व्यावृत्त्या अनार्त्यै द्वे च।। 5।)

🏺❀ देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजञ्जेष मित्याह। सवितृप्रसूत एव ब्रह्मणा वाज मुज्जयति। देवस्याꣳह सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठ न्नाकꣳ रुहेय मित्याह। सवितृप्रसूत एव ब्रह्मणा वर्षिष्ठ न्नाकꣳ रोहति। चात्वाले रथचक्र न्निमितꣳ रोहति। अतो वा अङ्गिरस उत्तमा स्सुवर्गँ लोक मायन्न्। साक्षादेव यजमान स्सुवर्गँ लोक मेति। आ वेष्टयति। वज्रो वै रथः। वज्रेणैव दिशोऽभि जयति।। 31।। ❀ वाजिनाꣳ साम गायते। अन्नँ वै वाजः। अन्न मेवाव रुन्धे। वाचो वर्ष्म देवेभ्योऽपाक्रामत्। तद्वनस्पती न्प्राविशत्। सैषा वाग्वनस्पतिषु वदति। या दुन्दुभौ। तस्मा द्दुन्दुभि स्सर्वा वाचोऽति वदति। दुन्दुभी न्थ्समाघ्नन्ति।

परमा वा एषा वाक्।। 32।। ❀ या दुन्दुभौ। परमयैव वाचाऽवराँ वाच मवरुन्धे। अथो वाच एव वर्ष्म यजमानोऽव रुन्धे। इन्द्राय वाचँ वदतेन्द्रँ वाजञ्जापयतेन्द्रो वाज मजयिदित्याह। एष वा एतर्हीन्द्रः। यो यजते। यजमान एव वाज मुज्जयति। सप्तदश प्रव्याधा नाजि न्धावन्ति। सप्तदशꣳ स्तोत्रं भवति। सप्तदशसप्तदश दीयन्ते।। 33।। ❀ सप्तदशः प्रजापतिः। प्रजापते राप्त्यै। अर्वाऽसि सप्ति रसि वाज्यसीत्याह। अग्नि र्वा अर्वा। वायु स्सप्तिः। आदित्यो वाजी। एताभि रेवास्मै देवताभि र्देवरथँ युनक्ति। प्रष्टिवाहिनँ युनक्ति। प्रष्टिवाही वै देवरथः। देवरथ मेवास्मै युनक्ति।। 34।। ❀ वाजिनो वाज न्धावत काष्ठा ङ्गच्छतेत्याह। सुवर्गो वै लोकः काष्ठा। सुवर्ग मेव लोकँ यन्ति। सुवर्गँ वा एते लोकँ यन्ति। य आजि न्धावन्ति। प्राञ्चो धावन्ति। प्राङिव हि सुवर्गो लोकः। चतसृभि रनु मन्त्रयते। चत्वारि छन्दाꣳसि। छन्दोभि रेवैना न्थ्सुवर्गँ लोक ङ्गमयति।। 35।। ❀ प्र वा एतेऽस्मा ल्लोका च्च्यवन्ते।। य आजि न्धावन्ति। उदञ्च आ वर्तन्ते। अस्मादेव तेन लोका न्नयन्ति। रथविमोचनीय ञ्जुहोति प्रतिष्ठित्यै। आ मा वाजस्य प्रसवो जगम्या दित्याह। अन्नँ वै वाजः। अन्न मेवाव रुन्धे। यथालोकँ वा एत उज्जयन्ति। य आजि न्धावन्ति।। 36।। ❀ कृष्णलङ्कृष्णलँ वाजसृद्भ्यः प्रयच्छति। यमेव ते वाजँ लोक मुज्जयन्ति। तं परिक्रीयाऽवरुन्धे। एकधा ब्रह्मण उपहरति। एकधैव यजमाने वीर्य न्दधाति। देवा वा ओषधीष्वाजि मयुः। ता बृहस्पति रुदजयत्। स नीवारा न्निरवृणीत। तन्नीवाराणा न्नीवारत्वम्। नैवार श्चरु र्भवति।। 37।। ❀ एतद्वै देवानां परम मन्नम्। यन्नीवाराः। परमेणैवास्मा अन्नाद्येनावर मन्नाद्य मव रुन्धे। सप्तदशशरावो भवति। सप्तदशः प्रजापतिः। प्रजापते राप्त्यै। क्षीरे भवति। रुच मेवास्मि न्दधाति। सर्पिष्वा न्भवति मेध्यत्वाय। बार्हस्पत्यो वा एष देवतया।। 38।। ❀ यो वाजपेयेन यजते। बार्हस्पत्य एष चरुः। अश्वा न्थ्सरिष्यत स्सस्रुष श्चाव घ्रापयति। यमेव ते वाजँ लोक मुज्जयन्ति। तमेवाव रुन्धे। अजीजिपत वनस्पतय इन्द्रँ वाजँ विमुच्यध्व मिति दुन्दुभीन् विमुञ्चति। यमेव ते वाजँ लोक मिन्द्रिय न्दुन्दुभय उज्जयन्ति। तमेवाव रुन्धे।। 39।। (अभि जयति वा एषा वाग्दीयन्तेऽस्मै युनक्ति गमयति य आजि न्धावन्ति भवति देवतयाऽष्टौ च। 6।)

☸❀ तार्प्यँ यजमानं परि धापयति। यज्ञो वै तार्प्यम्। यज्ञेनैवैन९ समर्धयति। दर्भमयं परि धापयति। पवित्रँ वै दर्भाः। पुनात्येवैनम्। वाजँ वा एषोऽव रुरुथ्सते। यो वाजपेयेन यजते। ओषधय४ खलु वै वाजः। यद्दर्भमयं परिधापयति।। 40।। ❀ वाजस्यावरुद्ध्यै। जाय एहि सुवो रोहावेत्याह। पत्निया एवैष यज्ञस्यान्वारम्भो ऽनवच्छित्त्यै। सप्तदशारत्नि र्यूपो भवति। सप्तदश४ प्रजापतिः। प्रजापते राप्त्यै। तूपर श्चतुरश्रि र्भवति। गौधूमञ्चषालम्। न वा एते व्रीहयो न यवाः। यद्गोधूमाः।। 41।। ❀ एवमिव हि प्रजापति स्समृद्ध्यै। अथो अमु मेवास्मै लोक मन्नवन्तङ्करोति। वासोभि र्वैष्टयति। एष वै यजमानः। यद्यूपः। सर्वदेवत्यँ वासः। सर्वाभि रेवैन न्देवताभि स्समर्धयति। अथो आक्रमण मेव तथ्सेतुँ यजमान४ कुरुते। सुवर्गस्य लोकस्य समष्ट्यै। द्वादश वाजप्रसवीयानि जुहोति।। 42।। ❀ द्वादश मासा स्सँवथ्सरः। स्सँवथ्सर मेव प्रीणाति। अथो सँवथ्सर मेवास्मा उप दधाति। सुवर्गस्य लोकस्य समष्ट्यै। दशभि४ कल्पै रोहति। नव वै पुरुषे प्राणाः। नाभि र्दशमी। प्राणा नेव यथास्थानङ्कल्पयित्वा। सुवर्गँ लोक मेति। एतावद्वै पुरुषस्य स्वम्।। 43।। ❀ यावत्प्राणाः। यावदेवास्यास्ति। तेन सह सुवर्गँ लोक मेति। सुव र्देवा९ अगन्मेत्याह। सुवर्ग मेव लोक मेति। अमृता अभूमेत्याह। अमृतमिव हि सुवर्गो लोकः। प्रजापते४ प्रजा अभूमेत्याह। प्राजापत्यो वा अयँ लोकः। अस्मादेव तेन लोका न्नैति।। 44।। ❀ समहं प्रजया सं मया प्रजेत्याह। आशिष मेवैता मा शास्ते। आसपुटै र्घ्नन्ति। अन्नँ वा इयम्। अन्नाद्येनैवैन९ समर्धयन्ति। ऊषै र्घ्नन्ति। एते हि साक्षा दन्नम्। यदूषाः। साक्षा देवैन मन्नाद्येन समर्धयन्ति। पुरस्ता त्प्रत्यञ्चं घ्नन्ति।। 45।। ❀ पुरस्ताद्धि प्रतीचीन मन्न मद्यते। शीर्षतो घ्नन्ति। शीर्षतो ह्यन्न मद्यते। दिग्भ्यो घ्नन्ति। दिग्भ्य एवास्मा अन्नाद्य मव रुन्धते। ईश्वरो वा एष पराङ्ङ्प्रदघः। यो यूप९ रोहति। हिरण्य मध्यव रोहति। अमृतँ वै हिरण्यम्। अमृत९ सुवर्गो लोकः।। 46।। ❀ अमृत एव सुवर्गे लोके प्रति तिष्ठति। शतमानं भवति। शताऽऽयु४ पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। पुष्ट्यै वा एत द्रूपम्। यदजा। त्रिस्सँवथ्सरस्यान्या न्पशू न्परि प्रजायते। बस्ताजिन मध्यव रोहति। पुष्ट्या मेव प्रजनने प्रति तिष्ठति।। 47।।
(परिधापयति गोधूमा जुहोति स्वन्नैति प्रत्यञ्चं घ्नन्ति लोको नव च। 7।)

सप्तान्नहोमा न्जुहोति। सप्त वा अन्नानि। याव न्त्येवान्नानि। तान्येवाव रुन्धे। सप्त ग्राम्या ओषधयः। सप्ताऽऽरण्याः। उभयीषा मवरुध्यै। अन्नस्यान्नस्य जुहोति। अन्नस्यान्न स्यावरुध्यै। यद्वाजपेययाज्यनवरुद्ध स्याश्ञीयात्।। 48।। अवरुद्धेन व्यृध्येत। सर्वस्य समवदाय जुहोति। अनवरुद्धस्यावरुध्यै। औदुम्बरेण स्रुवेण जुहोति। ऊर्ग्वा अन्न मुदुम्बरः। ऊर्जं एवान्नाद्य स्यावरुध्यै। देवस्य त्वा सवितुः प्रसव इत्याह। सवितृप्रसूत एवैनं ब्रह्मणा देवताभि रभिषिञ्चति। अन्नस्यान्नस्याभिषिञ्चति। अन्नस्यान्नस्यावरुध्यै।। 49।। पुरस्ता त्प्रत्यञ्च मभिषिञ्चति। पुरस्ताद्धि प्रतीचीन मन्न मद्यते। शीर्षतोऽभिषिञ्चति। शीर्षतो ह्यन्न मद्यते। आ मुखा दन्वव स्रावयति। मुखत एवास्मा अन्नाद्य न्दधाति। अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह। एष वा अग्ने स्सवः। तेनैवैन मभिषिञ्चति। इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह।। 50।। इन्द्रिय मेवास्मि न्नेतेन दधाति। बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवैन मभिषिञ्चति। सोमग्रहाꣳ श्चावदानीयानि चर्त्विग्भ्य उपहरन्ति। अमु मेव तै र्लोक मन्नवन्तङ्करोति। सुराग्रहाꣳ श्चानवदानीयानि च वाजसृद्भ्यः। इम मेव तै र्लोक मन्नवन्तङ्करोति। अथो उभयी ष्वेवाभिषिच्यते। विमाथङ्कुर्वते वाजसृतः।। 51।। इन्द्रिय स्यावरुध्यै। अनिरुक्ताभिः प्रातस्सवने स्तुवते। अनिरुक्तः प्रजापतिः। प्रजापते राप्त्यै। वाजवतीभि र्माध्यन्दिने। अन्नँ वै वाजः। अन्न मेवाव रुन्धे। शिपिविष्टवतीभि स्तृतीयसवने। यज्ञो वै विष्णुः। पशव श्शिपिः। यज्ञ एव पशुषु प्रति तिष्ठति। बृहदन्त्यं भवति। अन्त मेवैनꣳ श्रियै गमयति।। 52।। (अश्ञीया दन्नस्यान्नस्यावरुध्या इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चा मीत्याह वाजसृत श्शिपि स्त्रीणि च। 8।)

नृषदन्त्वेत्याह। प्रजा वै नृन्। प्रजाना मेवैतेन सूयते। द्रुषद मित्याह। वनस्पतयो वै द्रु। वनस्पतीना मेवैतेन सूयते। भुवनसद मित्याह। यदा वै वसीया न्भवति। भुवन मगन्निति वै तमाहुः। भुवन मेवैतेन गच्छति।। 53।। अप्सुषदन्त्वा घृतसद मित्याह। अपा मेवैतेन घृतस्य सूयते। व्योमसद मित्याह। यदा वै वसीया न्भवति। व्योमागन्निति वै तमाहुः। व्योमैवैतेन गच्छति। पृथिविषदन्त्वाऽन्तरिक्षसद मित्याह। एषा मेवैतेन लोकानाꣳ सूयते। तस्माद्वाजपेययाजी न कञ्चन प्रत्यवरोहति। अपीव हि देवतानाꣳ सूयते।। 54।। नाकसद

मित्याह। यदा वै वसीया न्भवति। नाकमगन्निति वै तमाहुः। नाक मेवैतेन गच्छति। ये ग्रहाः पञ्चजनीना इत्याह। पञ्चजनाना मेवैतेन सूयते। अपा रस मुद्वयस मित्याह। अपा मेवैतेन रसस्य सूयते। सूर्यरश्मि समाभृत मित्याह सशुक्रत्वाय।। 55।। (गच्छति सूयते नव च। 9।)

## प्रा।का। पौरोडाशिक ब्राह्मणम् 1– 6(एकोनुवाकः 1)

❀ इन्द्रो वृत्र हत्वा। असुरा न्पराभाव्य। सोऽमावास्यां प्रत्यागच्छत्। ते पितरः पूर्वेद्यु राऽगच्छन्न्। पितृन् यज्ञोऽगच्छत्। तन्देवाः पुन रयाचन्त। तमेभ्यो न पुन रददुः। तेऽब्रुवन्वरँ वृणामहै। अथ वः पुन र्दास्यामः। अस्मभ्य मेव पूर्वेद्युः क्रियाता इति।। 56।। ❀ तमेभ्यः पुनरददुः। तस्मात्पितृभ्यः पूर्वेद्युः क्रियते। यत्पितृभ्यः पूर्वेद्युः करोति। पितृभ्य एव तद्यज्ञ न्निष्क्रीय यजमानः प्र तनुते। 卐 सोमाय पितृपीताय स्वधा नम - इत्याह। पितु रेवाधि सोमपीथ मव रुन्धे। न हि पिता प्रमीयमाण आहैष सोमपीथ इति। इन्द्रियँ वै सोमपीथः। इन्द्रियमेव सोमपीथ मव रुन्धे। तेनेन्द्रियेण द्वितीयाञ्जाया मभ्यश्नुते।। 57।। ❀ एतद्वै ब्राह्मणं पुरा वाजश्रवसा विदामकन्न्। तस्मात्ते द्वे द्वे जाये अभ्याक्षत। य एवँ वेद। अभि द्वितीयाञ्जाया मश्नुते। 卐 अग्नये कव्यवाहनाय स्वधा नम- इत्याह। य एव पितृणा मग्निः। तं प्रीणाति। तिस्र आहुती र्जुहोति। त्रिर्नि दधाति। षट्थ्सं पद्यन्ते।। 58।। ❀ षड्वा ऋतवः। ऋतूनेव प्रीणाति। तूष्णीं मेक्षण मादधाति। अस्ति वा हि षष्ठ ऋतु र्न वा। देवान् वै पितृन्प्रीतान्। मनुष्याः पितरोऽनु प्रपिपते। तिस्र आहुती र्जुहोति। त्रिर्नि दधाति। षट्थ्संपद्यन्ते। षड्वा ऋतवः।। 59।। ❀ ऋतवः खलु वै देवाः पितरः। ऋतूनेव देवा न्पितृन्प्रीणाति। तान्प्रीतान्। मनुष्याः पितरोऽनु प्र पिपते। सकृदाच्छिन्नं बर्हि र्भवति। सकृदिव हि पितरः। त्रिर्नि दधाति। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति। पराङ वर्तते।। 60।। ❀ ह्रीका हि पितरः। ओष्मणो व्यावृत उपाऽऽस्ते। ऊष्मभागा हि पितरः। ब्रह्मवादिनो वदन्ति। प्राश्या '3' न्न प्राश्या'3' मिति। यत्प्राश्नीयात्। जन्य मन्न मद्यात्। प्रमायुकस्स्यात्। यन्न प्राश्नीयात्। अहवि स्स्यात्।। 61।। ❀ पितृभ्य आ वृश्च्येत। अवघ्रेय मेव। तन्नेव प्राशित न्नेवाप्राशितम्। वीरँ वा वै पितरः प्रयन्तो हरन्ति। वीरँ वा ददति। दशाञ्छिनत्ति। हरणभागा हि पितरः। पितृनेव निरवदयते। उत्तर आयुषि लोम छिन्दीत। पितृणा ह्येतर्हि नेदीयः।। 62।। ❀ नमस्करोति। नमस्कारो हि पितृणाम्। 卐 नमो

वः पितरो रसाय। -- 卐 नमो वः पितर श्शुष्माय।-- 卐 नमो वः पितरो जीवाय। -- 卐 नमो वः पितर स्स्वधायै। -- 卐 नमो वः पितरो मन्यवे। -- 卐 नमो वः पितरो घोराय।- पितरो नमो वः। य एतस्मिन्ल्लोके स्थ।। 63।।❀ युष्मा॒स्तेऽनु। येऽस्मिन्ल्लोके। मान्तेऽनु। य एतस्मिन्ल्लोके स्थ। यूय न्तेषाँ वसिष्ठा भूयास्त। येऽस्मिन्ल्लोके। अह न्तेषाँ वसिष्ठो भूयास-मित्याह। वसिष्ठ स्समानानां भवति। य एवँ विद्वा न्पितृभ्यः करोति। एष वै मनुष्याणाँ यज्ञः।। 64।।❀ देवानाँ वा इतरे यज्ञाः। तेन वा एतत्पितृलोके चरति। यत्पितृभ्यः करोति। स ईश्वरः प्रमेतोः। प्राजापत्ययर्चा पुनरैति। यज्ञो वै प्रजापतिः। यज्ञेनैव सह पुनरैति। न प्रमायुको भवति। पितृलोके वा एत द्यजमान श्चरति। यत्पितृभ्यः करोति। स ईश्वर आर्ति मार्तोः। प्रजापति स्त्वावैन न्तत उन्नेतु मर्हतीत्याहुः। य 卐त्प्राजापत्ययर्चा[1]❁ पुनरैति। प्रजापति रेवैन न्तत उन्नयति। नाऽऽर्ति मार्छति यजमानः।। 65।। (इत्यश्नुते पद्यन्ते पद्यन्ते षड्वा ऋतवो वर्ततेऽहविस्स्या न्नेदीयस्स्थ यज्ञो यजमान श्चरति यत्पितृभ्यः करोति पञ्च च। 10।)

(देवासुरा अग्नीषोमयो र्देवा वै यथा दर्श न्देवा वै यदन्यै र्ग्रहै र्ब्रह्मवादिनो नाग्निष्टोमो न सावित्र न्देवस्याह न्तार्प्यँ सप्तान्नहोमा न्नृषद न्त्वेन्द्रो वृत्रँ हत्वा दश। 10। देवासुरा वाज्येवैन न्तस्मा द्वाजपेययाजी देवस्याहँ वाजस्यावरुध्या इन्द्रियमेवास्मिन्न् ह्लीका हि पितरः पञ्चषष्टिः। 65। देवासुरा यजमानः।)

## प्रथमाष्टके चतुर्थः प्रपाठकः

### सौ।का। 1। ग्रह ब्राह्मणम् 2(एकोऽनुवाकः 1)

❀ उभये वा एते प्रजापते रध्यसृज्यन्त। देवाश्चासुराश्च। तान्न व्यजानात्। इमेऽन्य इमेऽन्य इति। स देवान॒ँशू नकरोत्। तानभ्यषुणोत्। तान्पवित्रेणापुनात्। तान्परस्ता त्पवित्रस्य व्यगृह्णात्। ते ग्रहा अभवन्न्। तद्ग्रहाणाङ्ग्रहत्वम्।। 1।।❀ देवता वा एता यजमानस्य गृहे गृह्यन्ते। यद्ग्रहाः। विदुरेन न्देवाः। यस्यैवँ विदुष एते ग्रहा गृह्यन्ते। एषा वै सोमस्याऽऽहुतिः। यदुपाँशुः। सोमेन देवाँ स्तर्पयाणीति खलु वै सोमेन यजते। यदुपाँशुञ्जुहोति। सोमेनैव

[1]

तद्देवा॒ स्तर्पयति। यद्ग्रहा न्जुहोति।। 2।।❀ देवा एव तद्देवा न्गच्छन्ति। यच्चमसा न्जुहोति। तेनैवानुरूपेण यजमान स्सुवर्गँ लोकमेति। किन्वेतदग्र आसी दित्याहुः। यत्पात्राणीति। इयँ वा एतदग्र आसीत्। मृन्मयानि वा एतान्यासन्न्। तैर्देवा न व्यावृत मगच्छन्न्। त एतानि दारुमयाणि पात्राण्यपश्यन्न्। तान्यकुर्वत।। 3।।❀ तैर्वै ते व्यावृत मगच्छन्न्। यद्दारुमयाणि पात्राणि भवन्ति। व्यावृत मेव तै र्यजमानो गच्छति। यानि दारुमयाणि पात्राणि भवन्ति। अमु मेव तैर्लोक मभि जयति। यानि मृन्मयानि। इममेव तैर्लोक मभि जयति। ब्रह्मवादिनो वदन्ति। काश्वतस्र स्स्थाली वायव्या स्सोमग्रहणी रिति। देवा वै पृश्निमदुहन्न्।। 4।।❀ तस्या एते स्तना आसन्न्। इयँ वै पृश्निः। तामादित्या आदित्यस्थाल्या चतुष्पदः॑ पशू नदुहन्न्। यदादित्यस्थाली भवति। चतुष्पद एव तया पशून् यजमान इमा न्दुहे। तामिन्द्र उक्थ्यस्थाल्येन्द्रिय मदुहत्। यदुक्थ्यस्थाली भवति। इन्द्रियमेव तया यजमान इमा न्दुहे। ताँ विश्वे देवा आग्रयणस्थाल्योर्ज मदुहन्न्। यदाग्रयणस्थाली भवति।। 5।।❀ ऊर्ज मेव तया यजमान इमा न्दुहे। तां मनुष्या ध्रुवस्थाल्याऽऽयु रदुहन्न्। यद्ध्रुवस्थाली भवति। आयुरेव तया यजमान इमा न्दुहे। स्थाल्या गृह्णाति। वायव्येन जुहोति। तस्मा दन्येन पात्रेण पशू न्दुहन्ति। अन्येन प्रति गृह्णन्ति। अथो व्यावृत मेव तद्यजमानो गच्छति।। 6।। (ग्रहत्व ङ्ग्रहाञ्जुहोत्यकुर्वतादुह न्नाग्रयणस्थाली भवति नव च। 1।)

### वै।का। कौकिली मन्त्राः 9– 2(एको॒ऽनुवाकः 1)

❀ 卐 युव॒ सुराम मश्विना। नमुचावासुरे सचा। विपिपाना शुभस्पती। इन्द्रङ्कर्म स्वावतम्।।

卐 पुत्रमिव पितरा वश्विनोभा। इन्द्रावतङ्कर्मणा द॒सनाभिः। यथ्सुरामँ व्यपिब श्शचीभिः। सरस्वती त्वा मघव न्नभीष्णात्।।

卐 अहाव्यग्ने हवि रास्ये ते। स्रुचीव घृत ञ्चमू इव सोमः।।7।।❀ वाजसनि॒ रयि मस्मे सुवीरम्। प्रशस्त न्धेहि यशसं बृहन्तम्।।

卐 यस्मि न्नश्वास ऋषभास उक्षणः। वशा मेषा अवसृष्टास आहुताः। कीलालपे सोमपृष्ठाय वेधसे। हृदा मतिञ्जनय चारुमग्नये।।

Sri Ganapathy Sachchidananda Avadhoota Datta Peetham Mysore

卐 नाना हि वां न्देवहित॒ सदो मितम्। मा स॒सृक्षाथां परमे व्योमन्न्। सुरा त्वमसि शुष्मिणी सोम एषः। मा मा हि॒सी स्स्वाँ योनि माविशन्न्।। 8।।

❀ 卐 यदत्र शिष्ट॒ रसिन स्सुतस्य। यदिन्द्रो अपिब च्छचीभिः। अह न्तदस्य मनसा शिवेन। सोम॒ राजान मिह भक्षयामि।।

卐 द्वे स्रुती अश्रृणवं पितृणाम्। अह न्देवाना मुत मर्त्यानाम्। ताभ्या मिदँ विश्वं भुवन॒ समेति। अन्तरा पूर्वमपरञ्च केतुम्।।

卐 यस्ते देववरुण गायत्रछन्दाः पाशः। त न्त एतेनाव यजे।। 9।।

❀ 卐 यस्ते देववरुण त्रिष्टुप्छन्दाः पाशः। त न्त एतेनाव यजे।।

卐 यस्ते देववरुण जगतीछन्दाः पाशः। त न्त एतेनाव यजे।

सोमो वा एतस्य राज्य मा दत्ते। यो राजा सन्राज्यो वा सोमेन यजते। देवसुवा मेतानि हवी॒षि भवन्ति। एतावन्तो वै देवाना॒ सवाः। त एवास्मै सवा न्प्र यच्छन्ति। त एनं पुन स्सुवन्ते राज्याय। देवसू राजा भवति।। 10।। (सोम आविशन् यजे राज्यायैकञ्च। 2।)

**आ।का।। अग्न्याधेय ब्राह्मणम्3, मन्त्राश्च 2(द्वावनुवाकौ 2)**

卐 उदस्था द्देव्यदिति र्विश्वरूपी। आयु र्यज्ञपतावधात्। इन्द्राय कृण्वती भागम्। मित्राय वरुणाय च।।

इयँ वा अग्निहोत्री। इयँ वा एतस्य निषीदति। यस्याग्निहोत्री निषीदति। तामुत्थापयेत्। उदस्था द्देव्यदिति रिति। इयँ वै देव्यदितिः।। 11।। ❀ इमा मेवास्मा उत्थापयति। आयु र्यज्ञपतावधा दित्याह। आयु रेवास्मि न्दधाति। इन्द्राय कृण्वती भागं मित्राय वरुणाय चेत्याह। यथायजु रेवैतत्। अवर्तिँ वा एषैतस्य पाप्मानं प्रतिख्याय निषीदति। यस्याग्निहोत्र्युपसृष्टा निषीदति। तान्दुग्ध्वा ब्राह्मणाय दद्यात्। यस्यान्न न्नाद्यात्। अवर्ति मेवास्मि न्पाप्मानं प्रति मुञ्चति।। 12।। ❀ दुग्ध्वा ददाति। नह्यदृष्टा दक्षिणा दीयते। पृथिवीँ वा एतस्य पयः प्रविशति। यस्याग्निहोत्र न्दुह्यमान॒ स्कन्दति। 卐 यदद्य दुग्धं पृथिवी मसक्त। यदोषधी रप्यसर द्यदापः। पयो गृहेषु पयो अघ्नियासु। पयो वथ्सेषु पयो अस्तु तन्मयी- त्याह। पय एवाऽऽत्म न्गृहेषु पशुषु धत्ते। अप उप सृजति।। 13।। ❀ अद्भि रेवैन दाप्नोति। यो वै यज्ञस्याऽऽर्तेनानाऽऽर्त॒

Sri Sachidananda Avadhoota Datta Peetham • Mysore •

स॒ꣳसृजति। उभे वै ते तर्ह्यार्छतः। आर्छति खलु वा एतदग्निहोत्रम्। यद्दुह्यमानꣳ स्कन्दति। यदभिदुह्यात्। आर्तेनानार्तँ यज्ञस्य सꣳ सृजेत्। तदेव यादृक्कीदृक्क होतव्यम्। अथान्या न्दुग्ध्वा पुनर् होतव्यम्। अनार्तेनैवाऽऽर्तँ यज्ञस्य निष्करोति।।14।।❀ यद्युद्रुतस्य स्कन्देत्। यत्ततोऽहुत्वा पुन रेयात्। यज्ञँ विच्छिन्द्यात्। यत्र स्कन्देत्। तन्निषद्य पुन र्गृह्णीयात्। यत्रैव स्कन्दति। तत एवैनत्पुन र्गृह्णाति। तदेव यादृक्कीदृक्क होतव्यम्। अथान्या न्दुग्ध्वा पुनर् होतव्यम्। अनार्तेनैवाऽऽर्तँ यज्ञस्य निष्करोति।। 15।।❀ वि वा एतस्य यज्ञ श्छिद्यते। यस्याग्निहोत्रेऽधिश्रिते श्वाऽन्तरा धावति। रुद्रः खलु वा एषः। यदग्निः। यद्वा मन्वत्यावर्तयेत्। रुद्राय पशू नपि दध्यात्। अपशु र्यजमान स्स्यात्। यदपोऽन्वतिषिञ्चेत्। अनाद्य मग्ने रापः। अनाद्य माभ्या मपि दध्यात्। गार्हपत्या द्भस्माऽऽदाय। 卐 इदँ विष्णु र्विचक्रम - इति वैष्णव्यर्चाऽऽहवनीया द्धꣳसय न्नुद्द्रवेत्। यज्ञो वै विष्णुः। यज्ञेनैव यज्ञꣳ सन्तनोति। भस्मना पद मपि वपति शान्त्यै।। 16।। (वै देव्यादिति मुञ्चति सृजति करोति करोत्याभ्या मपि दध्या त्पञ्च च। 3।)

❀ नि वा एतस्याऽऽहवनीयो गार्हपत्यङ्कामयते। नि गार्हपत्य आहवनीयम्। यस्याग्नि मनुद्धृतꣳ सूर्योऽभि निम्रोचति। दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत्। अथाग्निम्। अथाग्निहोत्रम्। यद्धिरण्यं पुरस्ता द्धरति। ज्योति र्वै हिरण्यम्। ज्योति रेवैनं पश्य न्नुद्धरति। यदग्निं पूर्वꣳ हर त्यथाग्निहोत्रम्।। 17।।❀ भागधेयेनैवैनं प्रणयति। ब्राह्मण आर्षेय उद्धरेत्। ब्राह्मणो वै सर्वा देवताः। सर्वाभि रेवैन न्देवताभि रुद्धरति। अग्निहोत्र मुपसाद्याऽऽतमितो रासीत। व्रत मेव हत मनु म्रियते। अन्तँ वा एष आत्मनो गच्छति। यस्ताम्यति। अन्त मेष यज्ञस्य गच्छति। यस्याग्नि मनुद्धृतꣳ सूर्योऽभि निम्रोचति।। 18।।❀ पुन स्समन्य जुहोति। अन्तेनैवान्तँ यज्ञस्य निष्करोति। वरुणो वा एतस्य यज्ञङ्गृह्णाति। यस्याग्नि मनुद्धृतꣳ सूर्योऽभि निम्रोचति। वारुणञ्चरु न्निर्वपेत्। तेनैव यज्ञ न्निष्क्रीणीते। नि वा एतस्याऽऽहवनीयो गार्हपत्य ङ्कामयते। नि गार्हपत्य आहवनीयम्। यस्याग्नि मनुद्धृतꣳ सूर्योऽभ्युदेति। चतुर्गृहीत माज्यं पुरस्ताद्धरेत्।। 19।।❀ अथाग्निम्। अथाग्निहोत्रम्। यदाज्यं पुरस्ता द्धरति। एतद्वा अग्नेः प्रिय न्धाम। यदाज्यम्। प्रियेणैवैन न्धाम्ना समर्धयति। यदग्निं पूर्वꣳ हर त्यथाग्निहोत्रम्। भागधेयेनैवैनं प्रणयति। ब्राह्मण

आर्षेय उद्धरेत्। ब्राह्मणो वै सर्वा देवताः।।20।।❀ सर्वाभि रेवैन न्देवताभि रुद्धरति। पराची वा एतस्मै व्युच्छन्ती व्युच्छति। यस्याग्नि मनुद्धृतꣳ सूर्योऽभ्युदेति। ॐ उषाः केतुना जुषताम्। यज्ञ न्देवेभि रिन्वितम्। देवेभ्यो मधुमत्तमꣳ स्वाहे-ति प्रत्यङ्ङिषद्याऽऽज्येन जुहुयात्। प्रतीची मेवास्मै विवासयति। अग्निहोत्र मुपसाद्याऽऽतमितो रासीत। व्रतमेव हत मनु म्रियते। अन्तँ वा एष आत्मनो गच्छति।। 21।।❀ यस्ताम्यति। अन्तमेष यज्ञस्य गच्छति। यस्याग्नि मनुद्धृतꣳ सूर्योऽभ्युदेति। पुन स्समन्य जुहोति। अन्तेनैवान्तँ यज्ञस्य निष्करोति। मित्रो वा एतस्य यज्ञङ्गृह्णाति। यस्याग्नि मनुद्धृतꣳ सूर्योऽभ्युदेति। मैत्र ञ्चरु न्निर्वपेत्। तेनैव यज्ञ न्निष्क्रीणीते। यस्याऽऽहवनीयेऽनुद्धाते गार्हपत्य उद्वायेत्।। 22।।❀ यदाहवनीय मनुद्वाप्य गार्हपत्यं मन्थेत्। विच्छिन्द्यात्। भ्रातृव्य मस्मै जनयेत्। यद्वै यज्ञस्य वास्तव्यङ्क्रियते। तदनु रुद्रोऽव चरति। यत्पूर्व मन्ववस्येत्। वास्तव्य मग्नि मुपाऽऽसीत। रुद्रोऽस्य पशू न्घातुक स्स्यात्। आहवनीय मुद्वाप्य। गार्हपत्यं मन्थेत्।।23।।❀ ॐ इतः प्रथम ञ्जज्ञे अग्निः। स्वाद्योने रधि जातवेदाः। स गायत्रिया त्रिष्टुभा जगत्या। देवेभ्यो हव्यँ वहतु प्रजानन्नि-ति।। छन्दोभि रेवैनꣳ स्वाद्योनेः प्र जनयति। गार्हपत्यं मन्थति। गार्हपत्यँ वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते। स यदुद्वायति। तदनु पशवोऽपक्रामन्ति। ॐ इषे रय्यै रमस्व।। 24।।❀ सहसे द्युम्नाय। ऊर्जे पत्याये- त्याह। पशवो वै रयिः। पशू नेवास्मै रमयति। ॐ सारस्वतौ त्वोथ्सौ समिन्धाता[1]❀- मित्याह। ऋख्सामे वै सारस्वतावुथ्सौ। ऋक्सामाभ्या मेवैनꣳ समिन्धे। सम्राडसि विराडसीत्याह। रथन्तरँ वै सम्राट्। बृह द्विराट्।। 25।।❀ ताभ्या मेवैनꣳ समिन्धे। वज्रो वै चक्रम्। वज्रो वा एतस्य यज्ञँ वि च्छिनत्ति। यस्यानो वा रथो वाऽन्तराऽग्नी याति। आहवनीय मुद्वाप्य। गार्हपत्या दुद्धरेत्।

ॐ यदग्ने पूर्वं प्रभृतं पदꣳ हि ते। सूर्यस्य रश्मी नन्वाततान। तत्र रयिष्ठा मनु सं भरैतम्। सन्न स्सृज सुमत्या वाजवत्ये- ति।। 26।।❀ पूर्वेणैवास्य यज्ञेन यज्ञ मनु स न्तनोति। ॐ त्वमग्ने सप्रथा असी[2]❀- त्याह। अग्नि स्सर्वा देवताः। देवताभि रेव यज्ञꣳ सन्तनोति। अग्नये पथिकृते

1

2

पुरोडाश मष्टाकपाल न्निर्वपेत्। अग्नि मेव पथिकृतङ्ग् स्वेन भागधेयेनोप धावति। स एवैनँ यज्ञियं पन्था मपि नयति। अनड्वा न्दक्षिणा। वही ह्येष समृद्ध्यै।। 27।। (हरत्यथाग्निहोत्र न्निम्रोचति हरे द्देवता गच्छ त्युद्वाये न्मन्थे द्रमस्व बृह द्विराडिति नव च। 4। नि वै पूर्व न्त्रीणि निम्रोचति दर्भेण यद्धिरण्य मग्निहोत्रं पुन र्वरुणो वारुण न्नि वा एतस्याभ्युदेति चतुर्गृहीत माज्यँ यदाज्यं पराच्युषा पुन र्मित्रो मैत्रँ यस्याऽऽहवनीयेऽनुद्वाते गार्हपत्ये यद्वै।)

## वै।का। सात्रायण ब्राह्मणम् 7– 7(त्रयोऽनुवाकाः 3)

यस्य प्रातस्सवने सोमोऽतिरिच्यते। माध्यन्दिनँ सवनङ्कामयमानो ऽभ्यतिरिच्यते। गौर्धयति मरुता[1]- मिति धयद्वतीषु कुर्वन्ति। हिनस्ति वै सन्ध्यधीतम्। सन्धीव खलु वा एतत्। यथ्सवनस्यातिरिच्यते। यद्धयद्वतीषु कुर्वन्ति। सन्धे श्शान्त्यै। गायत्रँ साम भवति पञ्चदश स्स्तोमः। तेनैव प्रातस्सवना न्नयन्ति।। 28।। मरुत्वतीषु कुर्वन्ति। तेनैव माध्यन्दिना थ्सवना न्नयन्ति। होतु श्चमस मनून्नयन्ते। होताऽनु शँसति। मध्यत एव यज्ञँ समादधाति। यस्य माध्यन्दिने सवने सोमोऽतिरिच्यते। आदित्य न्तृतीयसवनङ्कामयमानो ऽभ्यतिरिच्यते। गौरिवीतँ साम भवति। अतिरिक्तँ वै गौरिवीतम्। अतिरिक्तँ यथ्सवनस्यातिरिच्यते।। 29।। अतिरिक्तस्य शान्त्यै। बण्महाँ असि सूर्य[2]-ति कुर्वन्ति। यस्यैवाऽऽदित्यस्य सवनस्य कामेनाऽतिरिच्यते। तेनैवैन ङ्कामेन समर्धयन्ति। गौरिवीतँ साम भवति। तेनैव माध्यन्दिना थ्सवना न्नयन्ति। सप्तदश स्स्तोमः। तेनैव तृतीयसवना न्नयन्ति। होतु श्चमस मनून्नयन्ते। होताऽनु शँसति।। 30।। मध्यत एव यज्ञँ समादधाति। यस्य तृतीयसवने सोमोऽतिरिच्येत। उक्थ्यङ्कुर्वीत। यस्योक्थ्येऽतिरिच्येत। अतिरात्रङ्कुर्वीत। यस्यातिरात्रेऽतिरिच्यते। तत्त्वै दुष्प्रज्ञानम्। यजमानँ वा एत त्पशव आसाद्य यन्ति। बृहथ्साम भवति। बृहद्वा इमा न्लोका न्दाधार। बार्हताः पशवः। बृहतैवास्मै न्पशू न्दाधार। शिपिविष्टवतीषु कुर्वन्ति। शिपिविष्टो वै देवानां पुष्टम्। पुष्ट्यैवैनँ समर्धयन्ति। होतु श्चमस

1

2

मनून्नयन्ते। होताऽनु शꣳसति। मध्यत एव यज्ञꣳ समादधाति।। 31।। (यन्ति सवनस्यातिरिच्यते शꣳसति दाधाराष्टौ च। 5।)

❀ एकैको वै जनताया मिन्द्रः। एकँ वा एताविन्द्र मभि सꣳ सुनुतः। यौ द्वौ सꣳसुनुतः। प्रजापति र्वा एष वि तायते। यद्यज्ञः। तस्य ग्रावाणो दन्ताः। अन्यतरँ वा एते सꣳसुन्वतो निर्बप्सति। पूर्वेणोपसृत्या देवता इत्याहुः। पूर्वोपसृतस्य वै श्रेया न्भवति। एतिव न्त्याज्यानि भवन्त्यभिजित्यै।। 32।।❀ मरुत्वतीꣳ प्रतिपदः। मरुतो वै देवाना मपराजित मायतनम्। देवाना मेवापराजित आयतने यतते। उभे बृहद्रथन्तरे भवतः। इयँ वाव रथन्तरम्। असौ बृहत्। आभ्या मेवैन मन्तरेति। वाचश्च मनसश्च। प्राणा च्चापानाच्च। दिवश्च पृथिव्याश्च।। 33।।❀ सर्वस्मा द्वित्ता द्वेद्यात्। अभिवर्तो ब्रह्मसामं भवति। सुवर्गस्य लोकस्याभिवृत्यै। अभिजि द्भवति। सुवर्गस्य लोकस्याभिजित्यै। विश्वजि द्भवति। विश्वस्य जित्यै। यस्य भूयाꣳसो यज्ञक्रतव इत्याहुः। स देवता वृङ्क्त इति। यद्यग्निष्टोम स्सोमꣳ परस्ताथ्स्यात्।।34।।❀ उक्थ्यङ्कुर्वीत। यद्युक्थ्य स्स्यात्। अतिरात्र ङ्कुर्वीत। यज्ञक्रतुभि रेवास्य देवता वृङ्क्ते। यो वै छन्दोभि रभिभवति। स सꣳसुन्वतो रभि भवति। 卐 सँवेशाय त्वोपवेशाय त्वे-त्याह। छन्दाꣳसि वै सँवेश उपवेशः। छन्दोभि रेवास्य छन्दाꣳस्यभि भवति। इष्टर्गो वा ऋत्विजा मध्वर्युः।। 35।।❀ इष्टर्गꣳ खलु वै पूर्वोऽर्ष्टुः~ क्षीयते। प्राणापानौ मृत्यो र्मा पात मित्याह। प्राणापानयो रेव श्रयते। प्राणापानौ मा मा हासिष्ट मित्याह। नैनं पुराऽऽयुषꣳ प्राणापानौ जहितः। आर्तिं वा एते नि यन्ति। येषा न्दीक्षितानां प्रमीयते। तँ यदववर्जेयुः। क्रूरकृता मिवैषाँ लोक स्स्यात्। 卐 आहर दहे- ति ब्रूयात्।। 36।।❀ तन्दक्षिणतो वेद्यै निधाय। 卐 सर्पराज्ञिया ऋग्भि स्स्तुयुः। इयँ वै सर्पतो राज्ञी। अस्या एवैनं परि ददति। व्यृद्ध न्तदित्याहुः। यथ्स्तुत मननुशस्त मिति। होता प्रथमꣳ प्राचीनावीती मार्जालीयं परीयात्। यामी रनु ब्रुवन्न्[1]❀। सर्पराज्ञीनाङ्कीर्तयेत्[2]❀। उभयो रेवैनँ लोकयोꣳ परिददति।। 37।।❀ अथो धुवन्त्येवैनम्। अथो न्येवास्मै ह्नुवते। त्रिꣳ परि यन्ति। त्रय इमे लोकाः। एभ्य एवैनँ लोकेभ्यो धुवते। त्रिꣳ पुनꣳ परियन्ति। षट्थ्सं पद्यन्ते। षड्वा

1

2

ऋतवः। ऋतुभि रेवैन न्धुवते। 卐 अग्न आयूꣳषि पवस[1]❀- इति प्रतिपद ङ्कुर्वीरन्न्। रथन्तरसामैषाꣳ सोमस्स्यात्। आयुरेवाऽऽत्म न्दधते। अथो पाप्मान मेव विजहतो यन्ति।। 38।। (अभिजित्यै पृथिव्याश्च स्या दध्वर्यु र्ब्रूया ल्लोकयोः परि ददति कुर्वीरꣳ स्त्रीणि च। 6।)

❀ असुर्यँ वा एतस्मा द्वर्णङ्कृत्वा। पशवो वीर्य मप क्रामन्ति। यस्य यूपो विरोहति। त्वाष्ट्रं बहुरूप मा लभेत। त्वष्टा वै रूपाणा मीशे। य एव रूपाणा मीशे। सोऽस्मि न्पशून् वीर्यँ यच्छति। नाऽस्मा त्पशवो वीर्य मप क्रामन्ति। आर्तिँ वा एते नि यन्ति। येषा न्दीक्षिताना मग्नि रुद्वायति।।39।।❀ यदाऽऽहवनीय उद्वायेत्। यत्तं मन्थेत्। विच्छिन्द्यात्। भ्रातृव्य मस्मै जनयेत्। यदाहवनीय उद्वायेत्। आग्नीध्रा दुद्धरेत्। यदाग्नीध्र उद्वायेत्। गार्हपत्या दुद्धरेत्। यद्गार्हपत्य उद्वायेत्। अत एव पुन र्मन्थेत् ।। 40।।❀ अत्र वाव स नि लयते। यत्र खलु वै निलीन मुत्तमं पश्यन्ति। तदेन मिच्छन्ति। यस्मा द्दारो रुद्वायेत्। तस्यारणी कुर्यात्। क्रुमुक मपि कुर्यात्। एषा वा अग्नेः प्रिया तनूः। यत्क्रुमुकः। प्रिययैवैन न्तनुवा समर्धयति। गार्हपत्यं मन्थति।। 41।।❀ गार्हपत्यो वा अग्ने र्योनिः। स्वादेवैनँ योने र्जनयति। नास्मै भ्रातृव्य ञ्जनयति। यस्य सोम उपदस्येत्। सुवर्णꣳ हिरण्य न्द्वेधा विच्छिद्य। ऋजीषेऽन्य दाधूनुयात्। जुहुया दन्यत्। सोम मेवाभिषुणोति। सोमञ्जुहोति। सोमस्य वा अभिषूयमाणस्य प्रिया तनू रुदक्रामत्।। 42।।❀ तथ्सुवर्णꣳ हिरण्य मभवत्। यथ्सुवर्णꣳ हिरण्यङ्कुर्वन्ति। प्रिययैवैन न्तनुवा समर्धयन्ति। यस्याक्रीतꣳ सोम मपहरेयुः। क्रीणीया देव। सैव ततः प्रायश्चित्तिः। यस्य क्रीत मपहरेयुः। आदाराꣳश्च फाल्गुनानि चाभिषुणुयात्। गायत्री यꣳ सोम माऽहरत्। तस्य योऽꣳशुः पराऽपतत्।। 43।।❀ त आदारा अभवन्न्। इन्द्रो वृत्र महन्न्। तस्य वल्कः पराऽपतत्। तानि फाल्गुनान्यभवन्न्। पशवो वै फाल्गुनानि। पशव स्सोमो राजा। यदादाराꣳश्च फाल्गुनानि चाभिषुणोति। सोम मेव राजान मभिषुणोति। शृतेन प्रातस्सवने श्रीणीयात्। दध्ना मध्यन्दिने।। 44।।❀ नीतमिश्रेण तृतीयसवने। अग्निष्टोम स्सोमस्स्या द्रथन्तरसामा। य एवर्त्विजो वृतास्स्युः। त एनँ याजयेयुः। एकाङ्गा न्दक्षिणा न्दद्या त्तेभ्य एव। पुन स्सोम ङ्क्रीणीयात्। यज्ञेनैव तद्यज्ञ मिच्छति। सैव ततः प्रायश्चित्तिः। सर्वाभ्यो वा एष देवताभ्य

1

स्सर्वेभ्यः पृष्ठेभ्य आत्मान मा गुरते। यस्सत्रायाऽऽगुरते। एतावा न्खलु वै पुरुषः। यावदस्य वित्तम्। सर्ववेदसेन यजेत। सर्वपृष्ठोऽस्य सोमस्स्यात्। सर्वाभ्य एव देवताभ्य स्सर्वेभ्यः पृष्ठेभ्य आत्मान न्निष्क्रीणीते।। 45।। (उद्वायति मन्थे न्मन्थ त्यक्राम त्पराऽपत न्मध्यन्दिन आगुरते पञ्च च। 7।)

**सौ।का। 3। आध्वर्यव मन्त्राः 1(एकोऽनुवाकः 1)**

卐 पवमान स्सुवर्जनः। पवित्रेण विचर्षणिः। यः पोता स पुनातु मा।।
卐 पुनन्तु मा देवजनाः। पुनन्तु मनवो धिया। पुनन्तु विश्व आयवः।।
卐 जातवेदः पवित्रवत्। पवित्रेण पुनाहि मा। शुक्रेण देव दीद्यत्। अग्ने क्रत्वा क्रतू९ रनु।। 46।।
❀ 卐 यत्ते पवित्र मर्चिषि। अग्ने वितत मन्तरा। ब्रह्म तेन पुनीमहे।।
卐 उभाभ्या न्देव सवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे।।
卐 वैश्वदेवी पुनती देव्यागात्। यस्यै बह्वी स्तनुवो वीतपृष्ठाः। तया मदन्त स्सधमाद्येषु। वय९ स्याम पतयो रयीणाम्।। 47।।
❀ 卐 वैश्वानरो रश्मिभि र्मा पुनातु। वातः प्राणेनेषिरो मयोभूः। द्यावापृथिवी पयसा पयोभिः। ऋतावरी यज्ञिये मा पुनीताम्।।
卐 बृहद्भि स्सवित स्तृभिः। वर्षिष्ठै र्देव मन्मभिः। अग्ने दक्षैः पुनाहि मा।।
卐 येन देवा अपुनत। येनाऽऽपो दिव्यङ्कशः। तेन दिव्येन ब्रह्मणा।।48।। ❀ इदं ब्रह्म पुनीमहे।।
卐 यः पावमानी रध्येति। ऋषिभि स्सम्भृत९ रसम्। सर्व९ स पूत मश्नाति। स्वदितं मातरिश्वना।।
卐 पावमानी र्यो अध्येति। ऋषिभि स्सम्भृत९ रसम्। तस्मै सरस्वती दुहे। क्षीर९ सर्पि र्मधूदकम्।।
卐 पावमानी स्स्वस्त्ययनीः।। 49।। ❀ सुदुघा हि पयस्वतीः। ऋषिभि स्सम्भृतो रसः। ब्राह्मणेष्वमृत९ हितम्।।

卐 पावमानी दिशन्तु नः। इमँ लोक मथो अमुम्। कामा न्थ्समर्धयन्तु नः। देवी र्देवै स्समाभृताः।।

卐 पावमानी स्स्वस्त्ययनीः। सुदुघा हि घृतश्चुतः। ऋषिभि स्सम्भृतो रसः।। 50।। ❀ ब्राह्मणेष्वमृतꣳ हितम्।।

卐 येन देवाः पवित्रेण। आत्मानं पुनते सदा। तेन सहस्रधारेण। पावमान्यः पुनन्तु मा।।

卐 प्राजापत्यं पवित्रम्। शतोद्यामꣳ हिरण्मयम्। तेन ब्रह्मविदो वयम्। पूतं ब्रह्म पुनीमहे।।

卐 इन्द्र स्सुनीती सह मा पुनातु। सोम स्स्वस्त्या वरुण स्समीच्या। यमो राजा प्रमृणाभिः पुनातु मा। जातवेदा मोर्जयन्त्या पुनातु।। 51।। (अनु रयीणां ब्रह्मणा स्वस्त्ययनी स्सुदुघा हि घृतश्चुत ऋषिभि स्सम्भृतो रसः पुनातु त्रीणि च। 8।)

## वै।का। राजसूय ब्राह्मणम् 1– 5(द्वावनुवाकौ 2)

❀ प्रजा वै सत्र मासत तप स्तप्यमाना अजुह्वतीः। देवा अपश्य न्चमसङ्गृतस्य पूर्णꣳ स्वधाम्। तमुपोदतिष्ठ न्तमजुहवुः। तेनार्धमास ऊर्ज मवारुन्धत। तस्मा दर्धमासे देवा इज्यन्ते। पितरोऽपश्य न्चमसङ्गृतस्य पूर्णꣳ स्वधाम्। तमुपोदतिष्ठ न्तमजुहवुः। तेन मास्यूर्ज मवारुन्धत। तस्मान्मासि पितृभ्यः क्रियते। मनुष्या अपश्य न्चमसङ्गृतस्य पूर्णꣳ स्वधाम्।। 52।। ❀ तमुपोदतिष्ठ न्तमजुहवुः। तेन द्वयी मूर्ज मवारुन्धत। तस्मा द्विरह्नो मनुष्येभ्य उप ह्रियते। प्रातश्च सायञ्च। पशवोऽपश्य न्चमसङ्गृतस्य पूर्णꣳ स्वधाम्। तमुपोदतिष्ठ न्तमजुहवुः। तेन त्रयी मूर्ज मवारुन्धत। तस्मा त्त्रिरह्नः पशवः प्रेरते। प्रातस्सङ्गवे सायम्। असुरा अपश्य न्चमसङ्गृतस्य पूर्णꣳ स्वधाम्।। 53।। ❀ तमुपोदतिष्ठ न्तमजुहवुः। तेन सँवथ्सर ऊर्ज मवारुन्धत। ते देवा अमन्यन्त। अमी वा इद मभूवन्न्। यद्वयꣳ स्म इति। त एतानि चातुर्मास्या न्यपश्यन्न्। तानि निरवपन्न्। तैरेवैषा न्तामूर्ज मवृञ्जत। ततो देवा अभवन्न्। पराऽसुराः।। 54।। ❀ यद्यजते। यामेव देवा ऊर्ज मवारुन्धत। तान्तेनाव रुन्धे। यत्पितृभ्यः करोति। यामेव पितर ऊर्ज मवारुन्धत। तान्तेनाव रुन्धे। यदावसथेऽन्नꣳ हरन्ति। यामेव मनुष्या ऊर्ज मवारुन्धत। तान्तेनाव रुन्धे। यद्दक्षिणा न्ददाति।। 55।। ❀ यामेव पशव ऊर्ज मवारुन्धत। तान्तेनाव रुन्धे। यच्चातुर्मास्यै र्यजते। यामेवासुरा ऊर्ज मवारुन्धत। तान्तेनाव रुन्धे। भवत्यात्मना। पराऽस्य

भ्रातृव्यो भवति। विराजो वा एषा विक्रान्तिः। यच्चातुर्मास्यानि। वैश्वदेवेनास्मि न्लोके प्रत्यतिष्ठत्। वरुणप्रघासै रन्तरिक्षे। साकमेधै रमुष्मि न्लोके। एष ह त्वावैतथ्सर्वं भवति। य एवँ विद्वा९ श्चातुर्मास्यै र्यजते।। 56।। (मनुष्या अपश्य न्चमसङ्खृतस्य पूर्णङ् स्वधा मसुरा अपश्य न्चमसङ्खृतस्य पूर्णङ् स्वधा मसुरा ददा त्यतिष्ठ च्चत्वारि च। 9।)

अग्नि र्वाव सँवथ्सरः। आदित्य॰ परिवथ्सरः। चन्द्रमा इदावथ्सरः। वायु रनुवथ्सरः। यद्वैश्वदेवेन यजते। अग्निमेव तथ्सँवथ्सर माप्नोति। तस्मा द्वैश्वदेवेन यजमानः। सँवथ्सरीणा९ स्वस्ति मा शास्त- इत्या शासीत। यद्वरुणप्रघासै र्यजते। आदित्यमेव तत्परिवथ्सर माप्नोति।। 57।। तस्मा द्वरुणप्रघासै र्यजमानः। परिवथ्सरीणा९ स्वस्ति मा शास्त- इत्या शासीत। यथ्साकमेधै र्यजते। चन्द्रमस मेव तदिदावथ्सर माप्नोति। तस्मा थ्साकमेधै र्यजमानः। इदावथ्सरीणा९ स्वस्ति मा शास्त- इत्या शासीत। यत्पितृयज्ञेन यजते। देवा नेव तदन्ववस्यति। अथ वा अस्य वायु श्चानुवथ्सर श्चाप्रीता वुच्छिष्येते। यच्छुनासीरीयेण यजते।। 58।। वायुमेव तदनुवथ्सर माप्नोति। तस्मा च्छुनासीरीयेण यजमानः। अनुवथ्सरीणा९ स्वस्ति मा शास्त - इत्या शासीत। सँवथ्सरँ वा एष ईप्सतीत्याहुः। यश्चातुर्मास्यै र्यजत इति। एष हत्वै सँवथ्सर माप्नोति। य एवँ विद्वा९ श्चातुर्मास्यै र्यजते। विश्वे देवा स्समयजन्त। तेऽग्नि मेवायजन्त। त एतँ लोक मजयन्न्।। 59।। यस्मि न्नग्निः। यद्वैश्वदेवेन यजते। एतमेव लोकञ्जयति। यस्मि न्नग्निः। अग्नेरेव सायुज्य मुपैति। यदा वैश्वदेवेन यजते। अथ सँवथ्सरस्य गृहपति माप्नोति। यदा सँवथ्सरस्य गृहपति माप्नोति। अथ सहस्त्रयाजिन माप्नोति। यदा सहस्त्रयाजिन माप्नोति।। 60।। अथ गृहमेधिन माप्नोति। यदा गृहमेधिन माप्नोति। अथाग्नि र्भवति। यदाग्नि र्भवति। अथ गौ र्भवति। एषा वै वैश्वदेवस्य मात्रा। एतद्वा एतेषा मवमम्। अतोऽतो वा उत्तराणि श्रेया९सि भवन्ति। यद्विश्वे देवा स्समयजन्त। तद्वैश्वदेवस्य वैश्वदेवत्वम्।। 61।। अथाऽऽदित्यो वरुण९ राजानँ वरुणप्रघासै रयजत। स एतँ लोक मजयत्। यस्मि न्नादित्यः। यद्वरुणप्रघासै र्यजते। एत मेव लोकञ्जयति। यस्मि न्नादित्यः। आदित्यस्यैव सायुज्य मुपैति। यदादित्यो वरुण९ राजानँ वरुणप्रघासै रयजत। तद्वरुणप्रघासानाँ वरुणप्रघासत्वम्। अथ सोमो राजा छन्दा९सि साकमेधै रयजत।। 62।। स एतँ लोक मजयत्। यस्मिङ्

श्चन्द्रमा विभाति। यथ्साकमेधै र्यजते। एत मेव लोक ञ्जयति। यस्मिं श्चन्द्रमा विभाति। चन्द्रमस एव सायुज्य मुपैति। सोमो वै चन्द्रमाः। एष ह त्वै साक्षाथ्सोमं भक्षयति। य एवँ विद्वा न्थ्साकमेधै र्यजते। यथ्सोमश्च राजा छन्दाꣳसि च समैधन्त।। 63।। ❀ तथ्साकमेधानाꣳ साकमेधत्वम्। अथर्तवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त। त एतँ लोक मजयन्न्। यस्मि न्नृतवः। यत्पितृयज्ञेन यजते। एत मेव लोकञ्जयति। यस्मि न्नृतवः। ऋतूना मेव सायुज्य मुपैति। यदृतवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त। तत्पितृयज्ञस्य पितृयज्ञत्वम्।। 64।। ❀ अथौषधय इम न्देव न्त्र्यम्बकै रयजन्त प्रथेमहीति। ततो वै ता अप्रथन्त। य एवँ विद्वाꣳ स्त्र्यम्बकै र्यजते। प्रथते प्रजया पशुभिः। अथ वायुः परमेष्ठिनꣳ शुनासीरीयेणायजत। स एतँ लोक मजयत्। यस्मिन्वायुः। यच्छुनासीरीयेण यजते। एतमेव लोकञ्जयति। यस्मिन्वायुः।। 65।। ❀ वायो रेव सायुज्य मुपैति। ब्रह्मवादिनो वदन्ति। प्र चातुर्मास्ययाजी मीयता '3' न प्र मीयता '3' इति। जीवन्वा एष ऋतू नप्येति। यदि वसन्ता प्रमीयते। वसन्तो भवति। यदि ग्रीष्मे ग्रीष्मः। यदि वर्षासु वर्षाः। यदि शरदि शरत्। यदि हेमन् हेमन्तः। ऋतु र्भूत्वा सँवथ्सर मप्येति। सँवथ्सरः प्रजापतिः। प्रजापति र्वावैषः।। 66।। (परिवथ्सर माप्नोति शुनासीरीयेण यजतेऽजय'2'न्थ्सहस्रयाजिन माप्नोति वैश्वदेवत्वꣳ साकमेधै रयजत समैधन्त पितृयज्ञत्व ञ्जयति यस्मिन्वायुर् हेमन्त स्त्रीणि च। )

(उभये युवꣳ सुराम मुदस्था न्नि वै यस्य प्रातस्सवन एकैकोऽसुर्यं पवमानः प्रजा वै सत्र मासताग्नि र्वाव सँवथ्सरो दश। 10। उभये वा उदस्था थ्सर्वाभि र्मध्यतोऽत्र वाव ब्राह्मणेष्वथ गृहमेधिनꣳ षट्थ्षष्टिः। 66। उभये वावैषः।)

## प्रथमाष्टके पञ्चमः प्रपाठकः

## वै।का। 4 नक्षत्रेष्टि मन्त्राः 2(एकोऽनुवाकः 1)

卐 अग्नेः कृत्तिकाः। शुक्रं परस्ता ज्योति रवस्तात्।।

卐 प्रजापते रोहिणी। आपः परस्ता दोषधयोऽवस्तात्।।

卐 सोमस्येन्वका विततानि। परस्ता द्वयन्तोऽवस्तात्।।

卐 रुद्रस्य बाहू। मृगयवः परस्ता द्विक्षारोऽवस्तात्।।

卐 अदित्यै पुनर्वसू। वातꣳ परस्ता दार्द्र मवस्तात्।। 1।।

❀ 卐 बृहस्पते स्तिष्यः। जुह्वतꣳ परस्ता द्यजमाना अवस्तात्।।

卐 सर्पाणा माश्रेषाः। अभ्यागच्छन्तꣳ परस्ता दभ्यानृत्यन्तोऽवस्तात्।।

卐 पितृणां मघाः। रुदन्तꣳ परस्ता दपभ्रꣳशोऽवस्तात्।।

卐 अर्यम्णꣳ पूर्वे फल्गुनी। जाया परस्ता दृषभोऽवस्तात्।।

卐 भगस्योत्तरे। वहतवꣳ परस्ता द्वहमाना अवस्तात्।। 2।।

❀ 卐 देवस्य सवितुर् हस्तः। प्रसवꣳ परस्ता थ्सनि रवस्तात्।।

卐 इन्द्रस्य चित्रा। ऋतं परस्ता थ्सत्य मवस्तात्।।

卐 वायो र्निष्ट्या व्रततिः। परस्ता दसिद्धि रवस्तात्।।

卐 इन्द्राग्नियो र्विशाखे। युगानि परस्ता त्कृषमाणा अवस्तात्।।

卐 मित्रस्यानूराधाः। अभ्यारोह त्परस्ता दभ्यारूढ मवस्तात्।। 3।।

❀ 卐 इन्द्रस्य रोहिणी। शृण त्परस्ता त्प्रतिशृण दवस्तात्।।

卐 निरृत्यै मूलवर्हणी। प्रतिभञ्जन्तꣳ परस्ता त्प्रतिशृणन्तोऽवस्तात्।।

卐 अपां पूर्वा अषाढाः। वर्चꣳ परस्ताथ्समिति रवस्तात्।।

卐 विश्वेषा न्देवाना मुत्तराः। अभिजय त्परस्ता दभिजित मवस्तात्।।

卐 विष्णो श्श्रोणा पृच्छमानाः। परस्ता त्पन्था अवस्तात्।। 4।।

❀ 卐 वसूनाꣳ श्रविष्ठाः। भूतं परस्ता द्भूति रवस्तात्।।

卐 इन्द्रस्य शतभिषक्। विश्वव्यचाꣳ परस्ता द्विश्वक्षिति रवस्तात्।।

卐 अजस्यैकपदꣳ पूर्वे प्रोष्ठपदाः। वैश्वानरं परस्ता द्वैश्वावसव मवस्तात्।।

卐 अहे र्बुध्नियस्योत्तरे। अभिषिञ्चन्तꣳ परस्ता दभिषुण्वन्तोऽवस्तात्।।

卐 पूष्णो रेवती। गावꣳ परस्ता द्वथ्सा अवस्तात्।।

卐 अश्विनो रश्वयुजौ। ग्रामꣳ परस्ता थ्सेनाऽवस्तात्।।

卐 यमस्यापभरणीः। अपकर्षन्तꣳ परस्ता दपवहन्तोऽवस्तात्।।

卐 पूर्णा पश्चा[1]❋ 卐 यत्ते देवा अदधुः[2]❋।। 5।। (आर्द्रं मवस्ता द्वहमाना अवस्ता दभ्यारूढ मवस्ता त्पन्था अवस्ता द्वथ्सा अवस्ता त्पञ्च च। 1।)

### वै।का। नक्षत्रेष्टि ब्राह्मणम् 4– 2(द्वावनुवाकौ 2)

❀ यत्पुण्य न्नक्षत्रम्। तद्बद्कुर्वीतोपव्युषम्। यदा वै सूर्य उदेति। अथ नक्षत्र न्नैति। यावति तत्र सूर्यो गच्छेत्। यत्र जघन्यं पश्येत्। तावति कुर्वीत यत्कारी स्यात्। पुण्याह एव कुरुते। एवꣳ ह वै यज्ञेषुञ्च शतद्युम्नञ्च माथ्स्यो निरवसाययाञ्चकार।❁। 6।।❀ यो वै नक्षत्रियं प्रजापतिं वेद। उभयो रेनँ लोकयो र्विदुः। हस्त एवास्य हस्तः। चित्रा शिरः। निष्ट्या हृदयम्। ऊरू विशाखे। प्रतिष्ठाऽनूराधाः। एष वै नक्षत्रियꣳ प्रजापतिः। य एवँ वेद। उभयो रेनँ लोकयो र्विदुः।।7।।❀ अस्मिꣳश्चामुष्मिꣳश्च। याङ्कामयेत दुहितरं प्रिया स्यादिति। तान्निष्ट्याया न्दद्यात्। प्रियैव भवति। नेव तु पुन रा गच्छति। अभिजिन्नाम नक्षत्रम्। उपरिष्टा दषाढानाम्। अवस्ता च्छ्रोणायै। देवासुरा स्सँयत्ता आसन्न्। ते देवा स्तस्मि न्नक्षत्रेऽभ्यजयन्न्।। 8।।❀ यदभ्यजयन्न्। तदभिजितोऽभिजित्त्वम्। यङ्कामयेतानपजय्य ञ्जयेदिति। तमेतस्मि न्नक्षत्रे यातयेत्। अनपजय्य मेव जयति। पापपराजित मिव तु। प्रजापतिꣳ पशू नसृजत। ते नक्षत्रन्नक्षत्र मुपातिष्ठन्त। ते समावन्त एवाभवन्न्। ते रेवती मुपातिष्ठन्त।। 9।।❀ ते रेवत्यां प्राभवन्न्। तस्मा द्रेवत्यां पशूना ङ्कुर्वीत। यत्किञ्चार्वाचीनꣳ सोमात्। प्रैव भवन्ति। सलिलँ वा इद मन्तराऽऽसीत्। यदतरन्न्। तत्तारकाणा न्तारकत्वम्। यो वा इह यजते। अमुꣳ स लोक न्नक्षते। तन्नक्षत्राणा न्नक्षत्रत्वम्।। 10।।❀ देवगृहा वै नक्षत्राणि। य एवँ वेद। गृह्येव भवति। यानि वा इमानि पृथिव्या श्चित्राणि। तानि नक्षत्राणि। तस्मा दश्लीलनामꣳश्चित्रे। नावस्ये न्न यजेत। यथा पापाहे कुरुते। तादृगेव तत्। देवनक्षत्राणि वा अन्यानि।। 11।।❀ यमनक्षत्रा.ण्यन्यानि। कृत्तिकाꣳ प्रथमम्। विशाखे उत्तमम्। तानि देवनक्षत्राणि। अनूराधाꣳ प्रथमम्। अपभरणी रुत्तमम्। तानि यम नक्षत्राणि। यानि देवनक्षत्राणि। तानि दक्षिणेन परियन्ति। यानि यमनक्षत्राणि।। 12।।❀ तान्युत्तरेण। अन्वेषा मराथ्स्मेति। तदनूराधाः। ज्येष्ठ मेषा मवधिष्मेति। तज्ज्येष्ठघ्नी। मूल मेषा मवृक्षामेति।

1

2

तन्मूलवर्हणी। यन्नासहन्त। तदषाढाः। यदश्लोणत्।। 13।।❀ तच्छ्रोणा। यदश्शृणोत्। तच्छ्रविष्ठाः। यच्छत मभिषज्यन्न्। तच्छतभिषक्। प्रोष्ठपदेषूदयच्छन्त। रेवत्या मरवन्त। अश्वयुजो रयुञ्जत। अपभरणी ष्वपावहन्न्। तानि वा एतानि यमनक्षत्राणि। यान्येव देवनक्षत्राणि। तेषु कुर्वीत यत्कारी स्यात्। पुण्याह एव कुरुते।। 14।। (चकारैवँ वेदोभयो रेनँ लोकयो र्विंदु रजय न्रेवती मुपातिष्ठन्त नक्षत्रत्व मन्यानि यानि यमनक्षत्रा.ण्यश्लोण द्यमनक्षत्राणि त्रीणि च। 2।)

❀ देवस्य सवितुः प्रातः प्रसवः प्राणः। वरुणस्य साय मासवोऽपानः। यत्प्रतीचीनं प्रातस्तनात्। प्राचीनꣳ सङ्गवात्। ततो देवा अग्निष्टोम न्निरमिमत। तत्तदात्तवीर्य न्निर्मार्गः। मित्रस्य सङ्गवः। तत्पुण्य न्तेजस्व्यहः। तस्मात्तर्हि पशव स्समायन्ति। यत्प्रतीचीनꣳ सङ्गवात्।। 15।।❀ प्राचीनं मध्यन्दिनात्। ततो देवा उक्थ्य न्निरमिमत। तत्तदात्तवीर्य न्निर्मार्गः। बृहस्पते र्मध्यन्दिनः। तत्पुण्य न्तेजस्व्यहः। तस्मा त्तर्हि तेक्ष्णिष्ठ न्तपति। यत्प्रतीचीनं मध्यन्दिनात्। प्राचीन मपराह्णात्। ततो देवा ष्षोडशिन न्निरमिमत। तत्तदात्तवीर्य न्निर्मार्गः।। 16।।❀ भगस्यापराह्णः। तत्पुण्य न्तेजस्व्यहः। तस्मा दपराह्णे कुमार्यो भग मिच्छमाना श्चरन्ति। यत्प्रतीचीन मपराह्णात्। प्राचीनꣳ सायात्। ततो देवा अतिरात्र न्निरमिमत। तत्तदात्तवीर्य न्निर्मार्गः। वरुणस्य सायम्। तत्पुण्य न्तेजस्व्यहः। तस्मात्तर्हि नानृतँ वदेत्।। 17।।❀ ब्राह्मणो वा अष्टाविꣳशो नक्षत्राणाम्। समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि। चत्वार्यश्लीलानि। तानि नव। यच्च परस्ता न्नक्षत्राणाँ यच्चावस्तात्। तान्येकादश। ब्राह्मणो द्वादशः। य एवँ विद्वा न्थ्सँवथ्सरँ व्रत ञ्चरति। सँवथ्सरेणैवास्य व्रत ङ्गुप्तं भवति। समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि। चत्वार्यश्लीलानि। तानि नव। आग्नेयी रात्रिः। ऐन्द्र महः। तान्येकादश। आदित्यो द्वादशः। य एवँ विद्वा न्थ्सँवथ्सरँ व्रत ञ्चरति। सँवथ्सरेणैवास्य व्रत ङ्गुप्तं भवति।। 18।। (सङ्गवा थ्षोडशिन न्निरमिमत तत्तदात्तवीर्य न्निर्मार्गो वदे द्भवति समानस्याह्नः पञ्च पुण्यानि नक्षत्राण्यष्टौ च। 3।)

## सौ।का। 2। ग्रह ब्राह्मणम् 2(एकोऽनुवाकः 1)

ब्रह्मवादिनो वदन्ति। कति पात्राणि यज्ञँ वहन्तीति। त्रयोदशेति ब्रूयात्। स यद्ब्रूयात्। कस्तानि निरमिमीतेति। प्रजापतिरिति ब्रूयात्। स यद्ब्रूयात्। कुत स्तानि निरमिमीतेति। आत्मन इति। प्राणापानाभ्या मेवोपाꣳश्वन्तर्यामौ निरमिमीत।। 19।। व्याना दुपाꣳशुसवनम्। वाच ऐन्द्रवायवम्। दक्षक्रतुभ्यां मैत्रावरुणम्। श्रोत्रा दाश्विनम्। चक्षुष श्शुक्रामन्थिनौ। आत्मन आग्रयणम्। अङ्गेभ्य उक्थ्यम्। आयुषो ध्रुवम्। प्रतिष्ठाया ऋतुपात्रे। यज्ञँ वाव तं प्रजापति र्निरमिमीत। स निर्मितो नाध्रियत समव्लीयत। स एता न्प्रजापति रपिवापा नपश्यत्। तान्निरवपत्। तैर्वै स यज्ञ मप्यवपत्। यदपिवापा भवन्ति। यज्ञस्य धृत्या असँव्लयाय।। 20।। (उपाꣳश्वन्तर्यामौ निरमिमीतामिमीत षड्च। 4।)

## वै।का। राजसूय मन्त्राः 1– 3(एकोऽनुवाकः 1)

卐 ऋतमेव परमेष्ठि। ऋत न्नात्येति किञ्चन। ऋते समुद्र आहितः। ऋते भूमि रियꣳ श्रिता। अग्निस्तिग्मेन शोचिषा। तप आक्रान्तमुष्णिहा। शिर स्तपस्याहितम्। वैश्वानरस्य तेजसा। ऋतेनास्य नि वर्तये। सत्येन परि वर्तये।। 21।। तपसाऽस्यानु वर्तये। शिवेनास्योप वर्तये। शग्मेना स्याभि वर्तये।।

卐 तदृत न्तथ्सत्यम्। तद्व्रत न्तच्छकेयम्। तेन शकेय न्तेन राध्यासम्।। 21।।

卐 यद्वर्मꣳ पर्यवर्तयत्। अन्ता न्पृथिव्या दिवः। अग्नि रीशान ओजसा। वरुणो धीतिभि स्सह।। 22।। इन्द्रो मरुद्भि स्सखिभि स्सह। अग्नि स्तिग्मेन शोचिषा। तप आक्रान्त मुष्णिहा। शिर स्तपस्याहितम्। वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये। सत्येन परि वर्तये। तपसाऽस्यानु वर्तये। शिवेनास्योप वर्तये। शग्मेनास्याभि वर्तये।। 23।।

卐 तदृत न्तथ्सत्यम्। तद्व्रत न्तच्छकेयम्। तेन शकेय न्तेन राध्यासम्।। 22।।

卐 यो अस्याꣳ पृथिव्या स्त्वचि। निवर्तय त्योषधीः। अग्नि रीशान ओजसा। वरुणो धीतिभि स्सह। इन्द्रो मरुद्भि स्सखिभि स्सह। अग्नि स्तिग्मेन शोचिषा। तप आक्रान्त मुष्णिहा।। 24।। शिर स्तपस्याहितम्। वैश्वानरस्य तेजसा। ऋतेनास्य नि वर्तये। सत्येन परि वर्तये। तपसाऽस्यानु वर्तये। शिवेनास्योप वर्तये। शग्मेनास्याभि वर्तये।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore

卐 तद्दत न्तथ्सत्यम्। तद्व्रत न्तच्छकेयम्। तेन शकेय न्तेन राध्यासम्।। 25।।
❀ 卐 एकं मास मुदसृजत्। परमेष्ठी प्रजाभ्यः। तेनाभ्यो मह आऽवहत्। अमृतं मर्त्याभ्यः। प्रजामनु प्र जायसे। तदु ते मर्त्यामृतम्। येन मासा अर्धमासाः। ऋतवः परिवथ्सराः। येन ते ते प्रजापते। ईजानस्य न्यवर्तयन्न्।। 26।। ❀ तेनाह मस्य ब्रह्मणा। नि वर्तयामि जीवसे। अग्नि स्तिग्मेन शोचिषा। तप आक्रान्त मुष्णिहा। शिर स्तपस्याहितम्। वैश्वानरस्य तेजसा। ऋतेनास्य नि वर्तये। सत्येन परि वर्तये। तपसाऽस्यानु वर्तये। शिवेनास्योप वर्तये। शग्मेनास्याभि वर्तये।। 卐 तद्दत न्तथ्सत्यम्। तद्व्रत न्तच्छकेयम्। तेन शकेय न्तेन राध्यासम्।। 24। 27।। (परि वर्तये सहाभि वर्तय उष्णिहा राध्यास न्न्यवर्तय न्नुप वर्तये चत्वारि च। 5। ऋतमेव षोडश। यद्धर्मो यो अस्या स्सप्तदश सप्तदश। एकं मास श्चतुर्विꣳशतिः।)

### वै।का। राजसूय ब्राह्मणम् 1– 6(एकोऽनुवाकः 1)

❀ देवा वै यद्यज्ञेऽकुर्वत। तदसुरा अकुर्वत। तेऽसुरा ऊर्ध्वं पृष्ठेभ्यो नापश्यन्न्। ते केशा नग्रेऽवपन्त। अथ श्मश्रूणि। अथोपपक्षौ। तत स्तेऽवाञ्च आयन्न्। पराऽभवन्न्। यस्यैवँ वपन्ति। अवाङेति।। 25।। ❀ अथो परैव भवति। अथ देवा ऊर्ध्वं पृष्ठेभ्योऽपश्यन्न्। त उपपक्षा वग्रेऽवपन्त। अथ श्मश्रूणि। अथ केशान्। ततस्तेऽभवन्न्। सुवर्गँ लोक मायन्न्। यस्यैवँ वपन्ति। भव त्यात्मना। अथो सुवर्गँ लोक मेति।। 26।। ❀ अथैत न्मनु र्वप्त्रे मिथुन मपश्यत्। स श्मश्रूण्यग्रेऽवपत। अथोपपक्षौ। अथ केशान्। ततो वै स प्राजायत प्रजया पशुभिः। यस्यैवँ वपन्ति। प्र प्रजया पशुभि र्मिथुनै र्जायते। देवासुरा स्सँयत्ता आसन्न्। ते सँवथ्सरे व्यायच्छन्त। तान्देवा श्चातुर्मास्यै रेवाभि प्रायुञ्जत।। 27।। ❀ वैश्वदेवेन चतुरो मासोऽवृञ्जतेन्द्रराजानः। ताञ्छीर्षन्नि चावर्तयन्त परि च। वरुणप्रघासै श्चतुरो मासोऽवृञ्जत वरुणराजानः। ताञ्छीर्षन्नि चावर्तयन्त परि च। साकमेधै श्चतुरो मासोऽवृञ्जत सोमराजानः। ताञ्छीर्षन्नि चावर्तयन्त परि च। या सँवथ्सर उपजीवाऽऽसीत्। तामेषा मवृञ्जत। ततो देवा अभवन्न्। पराऽसुराः।। 28।। ❀ य एवँ विद्वाꣳ श्चातुर्मास्यै र्यजते। भ्रातृव्यस्यैव मासो वृक्त्वा। शीर्षन्नि च वर्तयते परि च। यैषा सँवथ्सर उपजीवा। वृङ्क्ते तां भ्रातृव्यस्य। क्षुधाऽस्य भ्रातृव्यः परा भवति। लोहितायसेन निवर्तयते। यद्वा इमा मग्नि रृऋतावागते निवर्तयति। एतदेवैनाꣳ रूपङ्कृत्वा निवर्तयति। सा

ततश्श्वश्वो भूयसी भवन्त्येति।। 29।। ❀ प्र जायते। य एवँ विद्वा न्लोहितायसेन निवर्तयते। एतदेव रूपङ्कृत्वा नि वर्तयते। स तत श्श्वश्वो भूया न्भवन्नेति। प्रैव जायते। त्रेण्या शलल्या नि वर्तयेत। त्रीणि त्रीणि वै देवाना मृद्धानि। त्रीणि छन्दाꣳसि। त्रीणि सवनानि। त्रय इमे लोकाः।। 30।। ❀ ऋध्या मेव तद्वीर्य एषु लोकेषु प्रति तिष्ठति। यच्चातुर्मास्ययाज्यात्मनो नावद्येत्। देवेभ्य आ वृश्च्येत। चतृषुचतृषु मासेषु निवर्तयेत। परोऽक्ष मेव तद्देवेभ्य आत्मनोऽवद्य त्यनाव्रस्काय। देवानाँ वा एष आनीतः। यश्चातुर्मास्ययाजी। य एवँ विद्वा न्नि च वर्तयते परि च। देवता एवाप्येति। नास्य रुद्रः प्रजां पशू नभि मन्यते।। 31।। (एत्येत्ययुञ्जतासुरा एति लोका मन्यते। 6।)

## आ।का। अग्नि चयन मन्त्राः 5– 11(द्वावनुवाकौ 2)

❀ 卐 आयुषः प्राणꣳ सन्तनु। 卐 प्राणादपानꣳ सन्तनु। 卐 अपानाद्व्यानꣳ सन्तनु। व्याना च्चक्षु स्सन्तनु। 卐 चक्षुष श्श्रोत्रꣳ सन्तनु। 卐 श्रोत्रा न्मन स्सन्तनु। 卐 मनसो वाचꣳ सन्तनु। 卐 वाच आत्मानꣳ सन्तनु। 卐 आत्मनः पृथिवीꣳ सन्तनु। 卐 पृथिव्या अन्तरिक्षꣳ सन्तनु। 卐 अन्तरिक्षा द्दिवꣳ सन्तनु। 卐 दिव स्सुव स्सन्तनु।। 32।। (अन्तरिक्षꣳ सन्तनु द्वे च। 7।)

❀ 卐 इन्द्रो दधीचो अस्थभिः। वृत्राण्यप्रतिष्कुतः। जघान नवतीर्नव।।
卐 इच्छ न्नश्वस्य यच्छिरः। पर्वतेष्वपश्रितम्। तद्विदच्छर्यणावति।।
卐 अत्राह गोरमन्वत। नाम त्वष्टु रपीच्यम्। इत्था चन्द्रमसो गृहे।।
卐 इन्द्रमि द्गाथिनो बृहत्।। 33।। ❀ इन्द्र मर्केभि रर्किणः। इन्द्रँ वाणी रनूषत।।
卐 इन्द्र इद्धर्यो स्सचा। संमिश्ल आ वचो युजा। इन्द्रो वज्री हिरण्ययः।।
卐 इन्द्रो दीर्घाय चक्षसे। आसूर्यꣳ रोहयद्दिवि। वि गोभि रद्रि मैरयत्।।
卐 इन्द्र वाजेषु नो अव। सहस्र प्रधनेषु च।। 34।। ❀ उग्र उग्राभि रूतिभिः।।
卐 तमिन्द्रँ वाजयामसि। महे वृत्राय हन्तवे। स वृषा वृषभो भुवत्।।
卐 इन्द्र स्सदामने कृतः। ओजिष्ठ स्स बले हितः। द्युम्नी श्लोकी स सौम्यः।।
卐 गिरा वज्रो न सम्भृतः। स बलो अनपच्युतः। ववक्षु रुग्रो अस्तृतः।। 35।। (बृह च्चास्तृतः। 8।)

❀ देवासुरा स्सँयत्ता आसन्न्। स प्रजापति रिन्द्रञ्ज्येष्ठं पुत्र मप न्यधत्त। नेदेन मसुरा बलीया॰ँसोऽहनन्निति। प्रह्लादो ह वै कायाधवः। विरोचनङ्ँ स्वं पुत्र मप न्यधत्त। नेदेन न्देवा अहन न्निति। ते देवाः प्रजापति मुपसमेत्योचुः। नाराजकस्य युद्धमस्ति। इन्द्र मन्विच्छामेति। तँ यज्ञक्रतुभि रन्वैच्छन्न्।। 36।। ❀ तँ यज्ञक्रतुभि र्नान्वविन्दन्न्। तमिष्टिभि रन्वैच्छन्न्। तमिष्टिभि रन्वविन्दन्न्। तदिष्टीना मिष्टित्वम्। एष्टयो ह वै नाम। ता इष्टय इत्या चक्षते परोऽक्षेण। परोऽक्षप्रिया इव हि देवाः। तस्मा एत माग्नावैष्णव मेकादशकपाल न्दीक्षणीय न्निरवपन्न्। तदपुद्रुत्यातन्वत। तान्पत्नीसँयाजान्त उपानयन्न्।। 37।। ❀ ते तदन्त मेव कृत्वोदद्रवन्न्। ते प्रायणीय मभि समाऽरोहन्न्। तदपुद्रुत्यातन्वत। ताञ्छँय्य्वन्त उपानयन्न्। ते तदन्त मेव कृत्वोदद्रवन्न्। त आतिथ्य मभि समाऽरोहन्न्। तदपुद्रुत्यातन्वत। तानिडाऽन्त उपानयन्न्। ते तदन्त मेव कृत्वोदद्रवन्न्। तस्मा देता एतदन्ता इष्टय स्सन्तिष्ठन्ते।। 38।। ❀ एव॰ँ हि देवा अकुर्वत। इति देवा अकुर्वत। इत्यु वै मनुष्याः कुर्वते। ते देवा ऊचुः। यद्वा इद मुच्चै र्यज्ञेन चराम। तन्नोऽसुराः पाप्माऽनु विन्दन्ति। उपा॰ँशूपसदा चराम। तथा नोऽसुराः पाप्मा नानुवेथ्स्यन्तीन्ति। त उपा॰ँशूपसद मतन्वत। तिस्र एव सामिधेनी रनूच्य।। 39।। ❀ स्रुवेणाऽऽघार माघार्य। तिस्रः पराची राहुतीर् हुत्वा। स्रुवेणोपसद ञ्जुहवाञ्चक्रुः। उग्रँ वचो अपावधी न्त्वेषँ वचो अपावधी॰ँ स्वाहेति। अशनयापिपासे ह वा उग्रँ वचः। एनश्च वैरहत्यञ्च त्वेषँ वचः। एत॰ँ ह वाव तच्चतुर्धाविहितं पाप्मान न्देवा अपजघ्निरे। तथो एवैत देवँवि द्यजमानः। तिस्र एव सामिधेनी रनूच्य। स्रुवेणाऽऽघार माघार्य।। 40।। ❀ तिस्रः पराची राहुतीर् हुत्वा। स्रुवेणोपसद ञ्जुहोति। उग्रँ वचो अपावधी न्त्वेषँ वचो अपावधी॰ँ स्वाहेति। अशनयापिपासे ह वा उग्रँ वचः। एनश्च वैरहत्यञ्च त्वेषँ वचः। एत मेव तच्चतुर्धाविहितं पाप्मानँ यजमानोऽपहते। तेऽभिनीयैवाहः पशु माऽलभन्त। अह्न एव तद्देवा अवर्तिं पाप्मानं मृत्यु मप जघ्निरे। तेनाभिनीयेव रात्रेः प्राचरन्न्। रात्रिया एव तद्देवा अवर्तिं पाप्मानं मृत्यु मप जघ्निरे।। 41।। ❀ तस्मा दभिनीयैवाहः पशु मा लभेत। अह्न एव तद्यजमानोऽवर्तिं पाप्मानं भ्रातृव्या नप नुदते। तेनाभिनीयेव रात्रेः प्र चरेत्। रात्रिया एव तद्यजमानोऽवर्तिं पाप्मानं भ्रातृव्या नप नुदते। स एष

उपवसथीयेऽह न्द्विदेवत्यः पशु रालभ्यते। द्वयँ वा अस्मि न्लोके यजमानः। अस्थि च माꣳसञ्च। अस्थि चैव तेन माꣳसञ्च यजमान स्सꣳस्कुरुते। ता वा एताः पञ्च देवताः। अग्नीषोमा वग्नि र्मित्रावरुणौ।। 42।। ❀ पञ्चपञ्ची वै यजमानः। त्वङ्माꣳसꣳ स्नावाऽस्थि मज्जा। एत मेव तत्पञ्चधाविहित मात्मानँ वरुणपाशा न्मुञ्चति। भेषजतायै निर्वरुणत्वाय। तꣳ सप्तभि श्छन्दोभिः प्रात रह्वयन्न्। तस्मात्सप्त चतुरुत्तराणि छन्दाꣳसि प्रातरनुवाके ऽनूच्यन्ते। तमेतयोपसमेत्योपासीदन्न्। 卐 उपास्मै गायता नर[1]❀- इति। तस्मा देतया बहिष्पवमान उपसद्यः।। 43।। (ऐच्छ न्ननयꣳ स्तिष्ठन्तेऽनूच्यानूच्य स्रुवेणाऽऽघार माघार्य रात्रिया एव तद्देवा अवर्तिं पाप्मानं मृत्यु मप जघ्निरे मित्रावरुणौ नव च। 9। देवा यजमानो देवा देवा यजमानो यजमानः प्राचर न्प्रचरे दाऽलभन्ताऽऽलभेत मृत्यु मपजघ्निरे भ्रातृव्यान्।)

❀ स समुद्र उत्तरतः प्राज्वल द्भूम्यन्तेन। एष वाव स समुद्रः। यच्चात्वालः। एष उ वेव स भूम्यन्तः। यद्वेद्यन्तः। तदेत त्त्रिशल त्त्रिपूरुषम्। तस्मा त्तन्त्रिवित स्तङ्खनन्ति। स सुवर्णरजताभ्या ङ्कुशीभ्यां परिगृहीत आसीत्। तँ यदस्या अध्यजनयन्न्। तस्मा दादित्यः।। 44।। ❀ अथ यत्सुवर्णरजताभ्या ङ्कुशीभ्यां परिगृहीत आसीत्। साऽस्य कौशिकता। तन्त्रिवृताऽभि प्रास्तुवत। तन्त्रिवृताऽऽददत। तन्त्रिवृताऽहरन्न्। यावती त्रिवृतो मात्रा। तं पञ्चदशेनाभि प्रास्तुवत। तं पञ्चदशेनाऽऽददत। तं पञ्चदशेनाहरन्न्। यावती पञ्चदशस्य मात्रा।। 44।। ❀ तꣳ सप्तदशेनाभि प्रास्तुवत। तꣳ सप्तदशेनाऽऽददत। तꣳ सप्तदशेनाहरन्न्। यावती सप्तदशस्य मात्रा। तस्य सप्तदशेन ह्रियमाणस्य तेजो हरोऽपतत्। तमेकविꣳशेनाभि प्रास्तुवत। तमेकविꣳशेनाऽऽददत। तमेकविꣳशेनाहरन्न्। यावत्येकविꣳशस्य मात्रा। ते यत्त्रिवृता स्तुवते।। 46।। ❀ त्रिवृतैव तद्यजमान मा ददते। तन्त्रिवृतैव हरन्ति। यावती त्रिवृतो मात्रा। अग्नि र्वै त्रिवृत्। यावद्वा अग्ने र्दहतो धूम उदेत्यानुव्येति। तावती त्रिवृतो मात्रा। अग्ने रेवैन न्तत्। मात्राꣳ सायुज्यꣳ सलोकता ङ्गमयन्ति। अथ यत्पञ्चदशेन स्तुवते। पञ्चदशेनैव तद्यजमान मा ददते।। 47।। ❀ तं पञ्चदशेनैव हरन्ति। यावती पञ्चदशस्य मात्रा। चन्द्रमा वै पञ्चदशः। एष हि पञ्चदश्या मपक्षीयते। पञ्चदश्या मापूर्यते। चन्द्रमस एवैनन्तत्। मात्राꣳ सायुज्यꣳ सलोकता

1

ङ्गमयन्ति। अथ यथ्सप्तदशेन स्तुवते। सप्तदशेनैव तद्यजमान मा ददते। तꣳसप्तदशेनैव हरन्ति।। 48।। ❀ यावती सप्तदशस्य मात्रा। प्रजापतिर्वै सप्तदशः। प्रजापते रेवैनन्तत्। मात्राꣳ सायुज्यꣳ सलोकता ङ्गमयन्ति। अथ यदेकविꣳशेन स्तुवते। एकविꣳशेनैव तद्यजमान मा ददते। तमेकविꣳशेनैव हरन्ति। यावत्येकविꣳशस्य मात्रा। असौ वा आदित्य एकविꣳशः। आदित्यस्यैवैन न्तत्।। 49।। ❀ मात्राꣳ सायुज्यꣳ सलोकता ङ्गमयन्ति। ते कुश्यौ। व्यघ्नन्न्। ते अहोरात्रे अभवताम्। अह रेव सुवर्णाऽभवत्। रजता रात्रिः। स यदादित्य उदेति। एतामेव तथ्सुवर्णा ङ्कुशी मनु समेति। अथ यदस्तमेति। एतामेव तद्रजता ङ्कुशी मनु सँ विशति। प्रह्लादो ह वै कायाधवः। विरोचनꣳ स्वं पुत्र मुदास्यत्। स प्रदरोऽभवत्। तस्मा त्प्रदरा दुदक न्नाऽऽचामेत्।। 50।। (आदित्यः पञ्चदशस्य मात्रा स्तुवते पञ्चदशेनैव तद्यजमान मा ददते सप्तदशेनैव हरन्त्यादित्यस्यैवैन न्तद्विꣳशति चत्वारि च। 10।)

❀ ये वै चत्वार स्स्तोमाः। कृतन्तत्। अथ ये पञ्च। कलि स्सः। तस्मा च्चतुष्टोमः। तच्चतुष्टोमस्य चतुष्टोमत्वम्। तदाहुः। कतमानि तानि ज्योतीꣳषि। य एतस्य स्तोमा इति। त्रिवृत्पञ्चदश स्सप्तदश एकविꣳशः।। 51।। ❀ एतानि वाव तानि ज्योतीꣳषि। य एतस्य स्तोमाः। सोऽब्रवीत्। सप्तदशेन ह्रियमाणो व्यलेशिषि। भिषज्यतमेति। तमश्विनौ धानाभि रभिषज्यताम्। पूषा करम्भेण। भारती परिवापेण। मित्रावरुणौ पयस्यया। तदाहुः।। 52।। ❀ यदश्विभ्या न्धानाः। पूष्णः करम्भः। भारत्यै परिवापः। मित्रावरुणयोः पयस्याऽथ। कस्मा देतेषाꣳ हविषा मिन्द्र मेव यजन्तीति। एता ह्येन न्देवता इति ब्रूयात्। एतैर् हविर्भि रभिषज्यꣳ स्तस्मादिति। तँ वसवोऽष्टाकपालेन प्रातसवनेऽभिषज्यन्न्। रुद्रा एकादशकपालेन माध्यन्दिने सवने। विश्वे देवा द्वादश कपालेन तृतीयसवने।। 53।। ❀ स यदष्टाकपाला न्प्रातस्सवने कुर्यात्। एकादशकपाला न्माध्यन्दिने सवने। द्वादशकपालाꣳ स्तृतीयसवने। विलोम तद्यज्ञस्य क्रियेत। एकादशकपाला नेव प्रातस्सवने कुर्यात्। एकादशकपाला न्माध्यन्दिने सवने। एकादशकपालाꣳ स्तृतीयसवने। यज्ञस्य सलोमत्वाय। तदाहुः। यद्वसूनां प्रातस्सवनम्। रुद्राणां माध्यन्दिनꣳ सवनम्। विश्वेषा न्देवाना न्तृतीयसवनम्। अथ कस्मा देतेषाꣳ हविषा मिन्द्र मेव यजन्तीति।

एता ह्येन न्देवता इति ब्रूयात्। एतैर् हविर्भि रभिषज्यꣳ स्तस्मादिति।। 54।। (एकविꣳश आहु स्तृतीयसवने प्रातस्सवनं पञ्च च। 11।)

तस्यावाचोऽवपादा दबिभयुः। तमेतेषु सप्तसु छन्दस्स्वश्रयन्न्। यदश्रयन्न्। तच्छ्रायन्तीयस्य श्रायन्तीयत्वम्। यदवारयन्न्। तद्वारवन्तीयस्य वारवन्तीयत्वम्। तस्यावाच एवावपादा दबिभयुः। तस्मा एतानि सप्त चतुरुत्तराणि छन्दाꣳस्युपादधुः। तेषा मति त्रीण्यरिच्यन्त। न त्रीण्युदभवन्न्।। 55।। स बृहती मेवास्पृशत्। द्वाभ्या मक्षराभ्याम्। अहोरात्राभ्या मेव। तदाहुः। कतमा सा देवाक्षरा बृहती। यस्यान्त त्प्रत्यतिष्ठत्। द्वादश पौर्णमास्यः। द्वादशाष्टकाः। द्वादशामावास्याः। एषा वाव सा देवाक्षरा बृहती।। 56।। यस्यान्त त्प्रत्यतिष्ठदिति। यानि च छन्दाꣳस्यत्यरिच्यन्त। यानि च नोदभवन्न्। तानि निर्वीर्याणि हीना न्यमन्यन्त। साऽब्रवी द्बृहती। मामेव भूत्वा। मामुप सꣳश्रयतेति। चतुर्भि रक्षरै रनुष्टु ग्बृहती न्नोदभवत्। चतुर्भि रक्षरैः पङ्क्ति र्बृहती मत्यरिच्यत। तस्या मेतानि चत्वार्यक्षरा.ण्यपच्छिद्यादधात्।। 57।। ते बृहती एव भूत्वा। बृहती मुप समश्रयताम्। अष्टाभि रक्षरै रुष्णि ग्बृहती न्नोदभवत्। अष्टाभि रक्षरै स्त्रिष्टुग्बृहती मत्यरिच्यत। तस्या मेतान्यष्टा वक्षराण्यपच्छिद्यादधात्। ते बृहती एव भूत्वा। बृहती मुप समश्रयताम्। द्वादशभि रक्षरै र्गायत्री बृहती न्नोदभवत्। द्वादशभि रक्षरै र्जगती बृहती मत्यरिच्यत। तस्या मेतानि द्वादशाक्षरा.ण्यपच्छिद्यादधात्।। 58।। ते बृहती एव भूत्वा। बृहती मुप समश्रयताम्। सोऽब्रवी त्प्रजापतिः। छन्दाꣳसि रथो मे भवत। युष्माभि रह मेत मध्वान मनु सञ्चराणीति। तस्य गायत्री च जगती च पक्षा वभवताम्। उष्णिक्क त्रिष्टुप्च प्रष्ट्यौ। अनुष्टुप्च पङ्क्तिश्च धुर्यौ। बृहत्येवोद्धि रभवत्। स एतञ्छन्दोरथ मास्थाय। एत मध्वान मनु समचरत्। एतꣳ ह वै छन्दोरथ मास्थाय। एत मध्वान मनु सञ्चरति। येनैष एतथ्सञ्चरति। य एवँ विद्वा न्थ्सोमेन यजते। य उ चैन मेवँ वेद।। 59।। (अभवन्वाव सा देवाक्षरा बृहत्यदधा द्वादशाक्षराण्यपच्छिद्या दधा दास्थाय षट्च। 12।)

(अग्नेः कृत्तिका यत्पुण्य न्देवस्य सवितु र्ब्रह्मवादिनः कत्यृतमेव देवा वा आयुषः प्राण मिन्द्रो दधीचो देवासुरा स्स प्रजापति स्स समुद्रो ये वै चत्वार स्तस्यावाचो द्वादश। 12। अग्नेः कृत्तिका

देवगृहा ऋत मेव वैश्वदेवेन ते तदन्त न्तं पञ्चदशेन ते बृहती एव द्विषष्टिः। 62। (अथवा) अग्नेः कृत्तिका देवगृहा ऋत मेवर्ध्यामेव तिस्रः पराची र्ये वै चत्वारो नव पञ्चाशत्। 59। अग्नेः कृत्तिका य उ चैन मेवँ वेद।)

## प्रथमाष्टके षष्ठः प्रपाठकः

### वै।का। राजसूय 1ब्राह्मणम् – 2(दशानुवाकाः 10)

अनुमत्यै पुरोडाश मष्टाकपाल न्निर्वपति। ये प्रत्यञ्च श्शम्याया अवशीयन्ते। तन्नैरृत मेककपालम्। इयँ वा अनुमतिः। इय न्निरृतिः। नैरृतेन पूर्वेण प्रचरति। पाप्मान मेव निरृतिं पूर्वा न्निरवदयते। एककपालो भवति। एकधैव निरृति न्निरवदयते। यदहुत्वा गार्हपत्य ईयुः।। 1।। रुद्रो भूत्वाऽग्नि रनूत्थाय। अध्वर्युञ्च यजमानञ्च हन्यात्। वीहि स्वाहाऽऽहुतिञ्जुषाण इत्याह। आहुत्यैवैनꣳ शमयति। नाऽऽर्ति मार्छ त्यध्वर्युर्न यजमानः। एकोल्मुकेन यन्ति। तद्धि निरृत्यै भागधेयम्। इमा न्दिशँ यन्ति। एषा वै निरृत्यै दिक्। स्वाया मेव दिशि निरृति न्निरवदयते।। 2।। स्वकृत इरिणे जुहोति प्रदरे वा। एतद्वै निरृत्या आयतनम्। स्व एवाऽऽयतने निरृति न्निरवदयते। एष ते निरृते भाग इत्याह। निर्दिश त्यैवैनाम्। भूते हविष्मत्यसीत्याह। भूति मेवोपाऽऽवर्तते। मुञ्चेम मꣳहस इत्याह। अꣳहस एवैनं मुञ्चति। अङ्गुष्ठाभ्याञ्जुहोति।। 3।। अन्तत एव निरृति न्निरवदयते। कृष्णँ वासः कृष्णतूष न्दक्षिणा। एतद्वै निरृत्यै रूपम्। रूपेणैव निरृति न्निरवदयते। अप्रतीक्ष मा यन्ति। निरृत्या अन्तर्हित्यै। स्वाहा नमो य इदञ्चकारेति पुनरेत्य गार्हपत्ये जुहोति। आहुत्यैव नमस्यन्तो गार्हपत्य मुपाऽऽवर्तन्ते। आनुमतेन प्रचरति। इयँ वा अनुमतिः।। 4।। इय मेवास्मै राज्य मनु मन्यते। धेनु र्दक्षिणा। इमा मेव धेनुङ्कुरुते। आदित्यञ्चरु न्निर्वपति। उभयीष्वेव प्रजास्वभिषिच्यते। दैवीषु च मानुषीषु च। वरो दक्षिणा। वरो हि राज्यꣳ समृध्यै। आग्नावैष्णव मेकादशकपाल न्निर्वपति। अग्नि स्सर्वा देवताः।। 5।। विष्णु र्यज्ञः। देवताश्चैव यज्ञञ्चाव रुन्धे। वामनो वही दक्षिणा। यद्वही। तेनाऽऽग्नेयः। यद्वामनः। तेन वैष्णव स्समृध्यै। अग्नीषोमीय मेकादशकपाल न्निर्वपति। अग्नीषोमाभ्याँ वा इन्द्रो वृत्र मह न्निति। यदग्नीषोमीय

मेकादशकपाल न्निर्वपति।। 6।।❀ वार्त्रघ्न मेव विजित्यै। हिरण्य न्दक्षिणा समृद्ध्यै। इन्द्रो वृत्रꣳ हत्वा। देवताभि श्चेन्द्रियेण च व्यार्ध्यत। स एत मैन्द्राग्न मेकादशकपाल मपश्यत्। तन्निरवपत्। तेन वै स देवता श्चेन्द्रिय ञ्चावारुन्ध। यदैन्द्राग्न मेकादशकपाल न्निर्वपति। देवताश्चैव तेनेन्द्रियञ्च यजमानोऽव रुन्धे। ऋषभो वही दक्षिणा।। 7।।❀ यद्वही। तेनाऽऽग्नेयः। यदृषभः। तेनैन्द्र स्समृद्ध्यै। आग्नेय मष्टाकपाल न्निर्वपति। ऐन्द्र न्दधि। यदाग्नेयो भवति। अग्निर्वै यज्ञमुखम्। यज्ञमुख मेवर्द्धिं पुरस्ता द्धत्ते। यदैन्द्रन्दधि।।8।।❀ इन्द्रिय मेवाव रुन्धे। ऋषभो वही दक्षिणा। यद्वही। तेनाऽऽग्नेयः। यदृषभः। तेनैन्द्र स्समृद्ध्यै। यावतीर्वै प्रजा ओषधीना महुताना माश्ञन्। ताः पराऽभवन्न्। आग्रयणं भवति हुताद्याय। यजमान.स्यापराभावाय।। 9।।❀ देवा वा ओषधीष्वाजि मयुः। ता इन्द्राग्नी उदजयताम्। तावेत मैन्द्राग्न न्द्वादशकपाल न्निरवृणाताम्। यदैन्द्राग्नो भव त्युज्जित्यै। द्वादशकपालो भवति। द्वादश मासा स्सँवथ्सरः। सँवथ्सरेणैवास्मा अन्न मव रुन्धे। वैश्वदेव श्चरु भवति। वैश्वदेवँ वा अन्नम्। अन्नमेवास्मै स्वदयति।। 10।।❀ प्रथमजो वथ्सो दक्षिणा समृद्ध्यै। सौम्यꣳ श्यामाकञ्चरु न्निर्वपति। सोमो वा अकृष्टपच्यस्य राजा। अकृष्टपच्य मेवास्मै स्वदयति। वासो दक्षिणा। सौम्यꣳ हि देवतया वास स्समृद्ध्यै। सरस्वत्यै चरु न्निर्वपति। सरस्वते चरुम्। मिथुन मेवाव रुन्धे। मिथुनौ गावौ दक्षिणा समृद्ध्यै। एति वा एष यज्ञमुखा दृध्याः। योऽग्ने र्देवताया एति। अष्टा वेतानि हवीꣳषि भवन्ति। अष्टाऽक्षरा गायत्री। गायत्रोऽग्निः। तेनैव यज्ञमुखा दृध्या अग्ने र्देवतायै नैति।। 11।। (ईयु र्निरवदयतेऽङ्गुष्ठाभ्याञ्जुहो त्यनुमति र्देवता निर्वपति वही दक्षिणा यदैन्द्र दध्यपराभावाय स्वदयति गावौ दक्षिणा समृद्ध्यै षट्च। 1।)

❀ वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। तास्सृष्टा न प्राजायन्त। सोऽग्नि रकामयत। अह मिमाः प्रजनयेयमिति। स प्रजापतये शुच मदधात्। सोऽशोच त्प्रजा मिच्छमानः। तस्माद्यञ्च प्रजा भुनक्ति यञ्च न। तावुभौ शोचतः प्रजा मिच्छमानौ। तास्वग्नि मप्यसृजत्। ता अग्नि रध्यैत्।। 12।।❀ सोमो रेतोऽदधात्। सविता प्राजनयत्। सरस्वती वाच मदधात्। पूषाऽपोषयत्। ते वा एते त्रिस्सँवथ्सरस्य प्र युज्यन्ते। ये देवाः पुष्टिपतयः। सँवथ्सरो वै प्रजापतिः। सँवथ्सरेणैवास्मै प्रजाः प्राजनयत्। ताः प्रजा जाता मरुतोऽघ्नन्न्। अस्मा नपि न

प्रायुक्षतेति।। 13।।❀ स एतं प्रजापति र्मारुतꣳ सप्तकपाल मपश्यत्। तन्निरवपत्। ततो वै प्रजाभ्योऽकल्पत। यन्मारुतो निरुप्यते। यज्ञस्य क्लृप्त्यै। प्रजाना मघाताय। सप्तकपालो भवति। सप्तगणा वै मरुतः। गणश एवास्मै विशङ्कल्पयति। स प्रजापति रशोचत्।। 14।।❀ याः पूर्वाः प्रजा असृक्षि। मरुत स्ता अवधिषुः। कथ मपरा स्सृजेयेति। तस्य शुष्म आण्डं भूत न्निरवर्तत। तद्व्युदहरत्। तदपोषयत्। तत्प्राजायत। आण्डस्य वा एत द्रूपम्। यदामिक्षा। यद्व्युद्धरति।। 15।।❀ प्रजा एव तद्यजमानः पोषयति। वैश्वदेव्यामिक्षा भवति। वैश्वदेव्यो वै प्रजाः। प्रजा एवास्मै प्र जनयति। वाजिन मा नयति। प्रजास्वेव प्रजातासु रेतो दधाति। द्यावापृथिव्य एककपालो भवति। प्रजा एव प्रजाता द्यावापृथिवीभ्या मुभयतः परि गृह्णाति। देवासुरा स्सँयत्ता आसन्न्। सोऽग्नि रब्रवीत्।। 16।।❀ मामग्रे यजत। मया मुखेनासुरा न्जेष्यथेति। मा न्द्वितीय मिति सोमोऽब्रवीत्। मया राज्ञा जेष्यथेति। मान्तृतीय मिति सविता। मया प्रसूता जेष्यथेति। माञ्चतुर्थी मिति सरस्वती। इन्द्रियँ वोऽह न्धास्यामीति। मां पञ्चम मिति पूषा। मया प्रतिष्ठया जेष्यथेति।। 17।।❀ तेऽग्निना मुखेनासुरा नजयन्न्। सोमेन राज्ञा। सवित्रा प्रसूताः। सरस्वतीन्द्रिय मदधात्। पूषा प्रतिष्ठाऽऽसीत्। ततो वै देवा व्यजयन्त। यदेतानि हवीꣳषि निरुप्यन्ते विजित्यै। नोत्तरवेदि मुप वपति। पशवो वा उत्तरवेदिः। अजाता इव ह्येतर्हि पशवः।। 18।।(ऐदित्यशोच द्व्युद्धरत्यब्रवी त्प्रतिष्ठया ज्येष्यथे त्येतर्हि पशवः। 2।)

❀ त्रिवृद्बर्हि र्भवति। माता पिता पुत्रः। तदेव तन्मिथुनम्। उल्बङ्गर्भो जरायु। तदेव तन्मिथुनम्। त्रेधा बर्हि स्सन्नद्धं भवति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रति तिष्ठति। एकधा पुन स्सन्नद्धं भवति। एक इव ह्ययँ लोकः।। 19।।❀ अस्मिन्नेव तेन लोके प्रतितिष्ठति। प्रसुवो भवन्ति। प्रथमजा मेव पुष्टि मव रुन्धे। प्रथमजो वथ्सो दक्षिणा समृद्ध्यै। पृषदाज्य ङ्गृह्णाति। पशवो वै पृषदाज्यम्। पशू नेवाव रुन्धे। पञ्चगृहीतं भवति। पाङ्क्ता हि पशवः। बहुरूपं भवति।। 20।।❀ बहुरूपा हि पशव स्समृद्ध्यै। अग्निं मन्थन्ति। अग्निमुखा वै प्रजापतिः प्रजा असृजत। यदग्निं मन्थन्ति। अग्निमुखा एव तत्प्रजा यजमान स्सृजते। नव प्रयाजा इज्यन्ते। नवानूयाजाः। अष्टौ हवीꣳषि। द्वावाघारौ। द्वावाज्यभागौ।। 21।।❀ त्रिꣳश थ्सं पद्यन्ते। त्रिꣳशदक्षरा विराट्। अन्नँ विराट्। विराजैवान्नाद्य मवरुन्धे। यजमानो वा एककपालः। तेज आज्यम्। यदेककपाल

आज्य मानयति। यजमानमेव तेजसा समर्धयति। यजमानो वा एककपालः। पशव आज्यम्।। 22।।❀ यदेककपाल आज्य मानयति। यजमान मेव पशुभि स्समर्धयति। यदल्प मानयेत्। अल्पा एनं पशवो भुञ्जन्त उप तिष्ठेरन्न्। यद्बह्वानयेत्। बहव एनं पशवोऽभुञ्जन्त उप तिष्ठेरन्न्। बह्वानीयाऽऽवि॰पृष्ठ ङ्कुर्यात्। बहव एवैनं पशवो भुञ्जन्त उप तिष्ठन्ते। यजमानो वा एककपालः। यदेककपाल स्यावद्येत्।। 23।।❀ यजमानस्याव द्येत्। उद्वा माद्ये द्यजमानः। प्र वा मीयेत। सकृदेव होतव्यः। सकृदिव हि सुवर्गो लोकः। हुत्वाऽभि जुहोति। यजमान मेव सुवर्गँ लोकङ्गमयित्वा। तेजसा समर्धयति। यजमानो वा एककपालः। सुवर्गो लोक आहवनीयः।। 24।।❀ यदेककपाल माहवनीये जुहोति। यजमान मेव सुवर्गँ लोक ङ्गमयति। यद्धस्तेन जुहुयात्। सुवर्गा ल्लोका द्यजमान मव विध्येत्। स्रुचा जुहोति। सुवर्गस्य लोकस्य समष्ट्यै। यत्प्राङ्ग्द्येत। देवलोक मभि जयेत्। यद्दक्षिणा पितृलोकम्। यत्प्रत्यक्।। 25।।❀ रक्षा॰सि यज्ञ॰ हन्युः। यदुदङ्ङ्। मनुष्यलोक मभि जयेत्। प्रतिष्ठितो होतव्यः। एककपालँ वै प्रतितिष्ठन्त न्द्यावापृथिवी अनु प्रति तिष्ठतः। द्यावापृथिवी ऋतवः। ऋतून् यज्ञः। यज्ञँ यजमानः। यजमानं प्रजाः। तस्मा त्प्रतिष्ठितो होतव्यः।। 26।।❀ वाजिनो यजति। अग्नि र्वायु स्सूर्यः। ते वै वाजिनः। तानेव तद्यजति। अथो खल्वाहुः। छन्दा॰सि वै वाजिन इति। तान्येव तद्यजति। ऋख्सामे वा इन्द्रस्य हरी सोमपानौ। तयो॰ परिधय आधानम्। वाजिनं भागधेयम्।। 27।।❀ यदप्रहृत्य परिधी न्जुहुयात्। अन्तराधानाभ्या ङ्घासं प्र यच्छेत्। प्रहृत्य परिधी न्जुहोति। निराधानाभ्या मेव घासं प्र यच्छति। बर्हिषि विषिञ्चन्वाजिन मा नयति। प्रजा वै बर्हिः। रेतो वाजिनम्। प्रजास्वेव रेतो दधाति। समुपहूय भक्षयन्ति। एतथ्सोमपीथा ह्येते। अथो आत्मन्नेव रेतो दधते। यजमान उत्तमो भक्षयति। पशवो वै वाजिनम्। यजमान एव पशू न्प्रतिष्ठापयन्ति।। 28।। (लोको बहुरूपं भवत्याज्यभागौ पशव आज्यमवद्ये दाहवनीय॰ प्रत्यक्तस्मा त्प्रतिष्ठितो होतव्यो भागधेय मेते चत्वारि च। 3।)

❀ प्रजापति स्सविता भूत्वा प्रजा असृजत। ता एन मत्यमन्यन्त। ता अस्मा दपाक्रामन्न्। ता वरुणो भूत्वा प्रजा वरुणेनाग्राहयत्। ता॰ प्रजा वरुणगृहीताः। प्रजापतिं पुन रुपाधाव न्नाथ मिच्छमानाः। स एता न्प्रजापति र्वरुणप्रघासा नपश्यत्। तान्निरवपत्। तैर्वै स प्रजा वरुणपाशा

दमुञ्चत्। यद्वरुणप्रघासा निरुप्यन्ते।। 29।।❀ प्रजाना मवरुणग्राहाय। तासा न्दक्षिणो बाहु न्यंक्क आसीत्। सव्यः प्रसृतः। स एता न्द्वितीया न्दक्षिणतो वेदि मुदहन्न्। ततो वै स प्रजाना न्दक्षिणं बाहुं प्रासारयत्। यद्वितीया न्दक्षिणतो वेदि मुद्धन्ति। प्रजाना मेव तद्यजमानो दक्षिणं बाहुं प्र सारयति। तस्मा च्चातुर्मास्ययाज्यमुष्मिन्लोक उभयाबाहुः। यज्ञाभिजितꣳ ह्यस्य। पृथमात्रा द्वेदी असम्भिन्ने भवतः।। 30।।❀ तस्मा त्पृथमात्रँ व्यꣳसौ। उत्तरस्याँ वेद्या मुत्तरवेदि मुप वपति। पशवो वा उत्तरवेदिः। पशू नेवाव रुन्धे। अथो यज्ञपरुषोऽनन्तरित्यै। एतद्ब्राह्मणान्येव पञ्च हवीꣳषि। अथैष ऐन्द्राग्नो भवति। प्राणापानौ वा एतौ देवानाम्। यदिन्द्राग्नी। यदैन्द्राग्नो भवति।। 31।।❀ प्राणापाना वेवाव रुन्धे। ओजो बलँ वा एतौ देवानाम्। यदिन्द्राग्नी। यदैन्द्राग्नो भवति। ओजो बल मेवाव रुन्धे। मारुत्यामिक्षा भवति। वारुण्यामिक्षा। मेषी च मेषश्च भवतः। मिथुना एव प्रजा वरुणपाशा न्मुञ्चति। लोमशौ भवतो मेध्यत्वाय।। 32।।❀ शमीपर्णा न्युप वपति। घास मेवाभ्या मपि यच्छति। प्रजापति मन्नाद्य न्नोपानमत्। स एतेन शतेध्मेन हविषाऽन्नाद्य मवारुन्ध। यत्परश्शतानि शमीपर्णानि भवन्ति। अन्नाद्यस्यावरुद्ध्यै। सौम्यानि वै करीराणि। सौम्या खलु वा आहुति र्दिवो वृष्टिञ्च्यावयति। यत्करीराणि भवन्ति। सौम्ययैवाऽऽहुत्या दिवो वृष्टि मवरुन्धे। काय एककपालो भवति। प्रजानाङ्कन्त्वाय। प्रतिपूरुषङ्करम्भपात्राणि भवन्ति। जाता एव प्रजा वरुणपाशा न्मुञ्चति। एकमतिरिक्तम्। जनिष्यमाणा एव प्रजा वरुणपाशा न्मुञ्चति।। 33।। (निरुप्यन्ते भवतो भवति मेध्यत्वाय रुन्धे षट्च। 4।)

❀ उत्तरस्याँ वेद्या मन्यानि हवीꣳषि सादयति। दक्षिणायां मारुतीम्। अपधुर मेवैना युनक्ति। अथो ओज एवाऽऽसा मव हरति। तस्माद्ब्रह्मणश्च क्षत्राच्च विशोऽन्यतो ऽपक्रमिणीः। मारुत्या पूर्वया प्र चरति। अनृत मेवाव यजते। वारुण्योत्तरया। अन्तत एव वरुण मव यजते। यदेवाध्वर्युः करोति।। 34।।❀ तत्प्रतिप्रस्थाता करोति। तस्मा द्यच्छ्रेया न्करोति। तत्पापीया न्करोति। पत्नीँ वाचयति। मेध्या मेवैना ङ्करोति। अथो तप एवैना मुप नयति। यज्जारꣳ सन्त न्न प्रब्रूयात्। प्रियं'2' ज्ञातिꣳ रुन्ध्यात्। असौ मे जार इति निर्दिशेत्। निर्दिश्यैवैनँ वरुणपाशेन ग्राहयति।। 35।।❀ प्रघास्यान् हवामह इति पत्नी मुदानयति। अह्वतैवैनाम्। यत्पत्नी पुरोऽवाक्या मनुब्रूयात्। निर्वीर्यो यजमान स्स्यात्। यजमानोऽन्वाह। आत्म न्नेव वीर्य न्धत्ते।

उभौ याज्याऽ सवीर्यत्वाय। यद्ग्रामे यदरण्य इत्याह। यथोदितमेव वरुण मव यजते। यजमानदेवत्यो वा आहवनीयः।। 36।।❀ भ्रातृव्यदेवत्यो दक्षिणः। यदाहवनीये जुहुयात्। यजमानँ वरुणपाशेन ग्राहयेत्। दक्षिणेऽग्नौ जुहोति। भ्रातृव्यमेव वरुणपाशेन ग्राहयति। शूर्पेण जुहोति। अन्य मेव वरुण मव यजते। शीर्षन्नधिनिधाय जुहोति। शीर्षत एव वरुण मव यजते। प्रत्यङ्ङ्तिष्ठ न्जुहोति।। 37।।❀ प्रत्यङ्ङेव वरुणपाशा न्निर्मुच्यते। अक्र न्कर्म कर्मकृत इत्याह। देवानृण न्निरवदाय। अनृणा गृहा नुप प्रेतेति वावैतदाह। वरुणगृहीतँ वा एतद्यज्ञस्य। यद्यजुषा गृहीतस्यातिरिच्यते। तुषाश्च निष्कासश्च। तुषैश्च निष्कासेन चावभृथ मवैति। वरुणगृहीतेनैव वरुण मव यजते। अपोऽवभृथ मवैति।। 38।।❀ अप्सु वै वरुणः। साक्षादेव वरुण मव यजते। प्रतियुतो वरुणस्य पाश इत्याह। वरुणपाशा देव निर्मुच्यते। अप्रतीक्ष मा यन्ति। वरुणस्यान्तर्हित्यै। एधोऽस्येधिषीमहीत्याह। समिधैवाग्नि न्नमस्यन्त उपाऽऽयन्ति। तेजोऽसि तेजो मयि धेहीत्याह। तेज एवाऽऽत्म न्धत्ते।। 39।। (करोति ग्राहयत्याहवनीय स्तिष्ठ न्जुहो त्यपोऽवभृथ मवैति धत्ते। 5।)

❀ देवासुरा स्सँयत्ता आसन्न्। सोऽग्नि रब्रवीत्। ममेय मनीकवती तनूः। तां प्रीणीत। अथासुरा नभि भविष्यथेति। ते देवा अग्नयेऽनीकवते पुरोडाश मष्टाकपाल न्निरवपन्न्। सोऽग्नि रनीकवा न्थ्स्वेन भागधेयेन प्रीतः। चतुर्धाऽनीका न्यजनयत। ततो देवा अभवन्न्। पराऽसुराः।। 40।।❀ यदग्नयेऽनीकवते पुरोडाश मष्टाकपाल न्निर्वपति। अग्नि मेवानीकवन्तꣳ स्वेन भागधेयेन प्रीणाति। सोऽग्नि रनीकवान्थ्स्वेन भागधेयेन प्रीतः। चतुर्धाऽनीकानि जनयते। असौ वा आदित्योऽग्नि रनीकवान्। तस्य रश्मयोऽनीकानि। साकꣳ सूर्येणोद्यता निर्वपति। साक्षादेवास्मा अनीकानि जनयति। तेऽसुराः पराजिता यन्तः। द्यावापृथिवी उपाश्रयन्न्।। 41।।❀ ते देवा मरुद्भ्य स्सान्तपनेभ्य श्चरु न्निरवपन्न्। तान्द्यावापृथिवीभ्या मेवोभयत स्समतपन्न्। यन्मरुद्भ्य स्सान्तपनेभ्य श्चरु न्निर्वपति। द्यावापृथिवीभ्या मेव तदुभयतो यजमानो भ्रातृव्या न्थ्सन्तपति। मध्यन्दिने निर्वपति। तर्हि हि तेक्ष्णिष्ठ न्तपति। चरु र्भवति। सर्वत एवैनान्थ्सन्तपति। ते देवा श्श्वोविजयिन स्सन्तः। सर्वासा न्दुग्धे गृहमेधीय ञ्चरु न्निरवपन्न्।। 42।।❀ आशिता एवाद्योप वसाम। कस्य वा हेदम्। कस्य वा श्वो भवितेति। स श्रृतोऽभवत्। तस्याहुतस्य नाऽऽश्ञन्न्। न हि

देवा अहुतस्याश्ञ्जन्ति। तेऽब्रुवन्न्। कस्मा इमꣳ होष्याम इति। मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन्न्। तं मरुद्भ्यो गृहमेधिभ्योऽजुहवुः।। 43।। ❀ ततो देवा अभवन्न्। पराऽसुराः। यस्यैवँ विदुषो मरुद्भ्यो गृहमेधिभ्यो गृहे जुह्वति। भवत्यात्मना। पराऽस्य भ्रातृव्यो भवति। यद्वै यज्ञस्य पाकत्रा क्रियते। पशव्यन्तत्। पाकत्रा वा एत त्क्रियते। यन्नेध्माबर्हि र्भवति। न सामिधेनी रन्वाह।। 44।। ❀ न प्रयाजा इज्यन्ते । नानूयाजाः। य एवँ वेद। पशुमा न्भवति। आज्यभागौ यजति। यज्ञस्यैव चक्षुषी नान्तरेति। मरुतो गृहमेधिनो यजति। भागधेयेनैवैना न्थ्समर्धयति। अग्निꣳ स्विष्टकृतँ यजति प्रतिष्ठित्यै। इडाऽन्तो भवति। पशवो वा इडा। पशुष्वेवोपरिष्टा त्प्रति तिष्ठति।। 45।।
(असुरा अश्रय न्गृहमेधीय श्चरु न्निरवप न्नजुहवु रन्वाहेडाऽन्तो भवति द्वे च। 6।)
❀ यत्पत्नी गृहमेधीय.स्याश्ञ्जीयात्। गृहमेध्येव स्यात्। वि त्वस्य यज्ञ ऋध्येत। यन्नाश्ञ्जीयात्। अगृहमेधी स्यात्। नास्य यज्ञो व्यृध्येत। प्रतिवेशं पचेयुः। तस्याश्ञ्जीयात्। गृहमेध्येव भवति। नास्य यज्ञो व्यृध्यते।। 46।। ❀ ते देवा गृहमेधीयेनेष्ट्वा। आशिता अभवन्न्। आञ्जताभ्यञ्जत। अनु वथ्सा नवासयन्न्। तेभ्योऽसुराः~ क्षुधं प्राहिण्वन्न्। सा देवेषु लोक मवित्वा। असुरा न्पुन रगच्छत्। गृहमेधीयेनेष्ट्वा। आशिता भवन्ति। आञ्जतेऽभ्यञ्जते।। 47।। ❀ अनु वथ्सान् वासयन्ति। भ्रातृव्यायैव तद्यजमानः~ क्षुधं प्र हिणोति। ते देवा गृहमेधीयेनेष्ट्वा। इन्द्राय निष्कास न्न्यदधुः। अस्मा नेव श्व इन्द्रो निहितभाग उपाऽऽवर्तितेति। तानिन्द्रो निहितभाग उपाऽऽवर्तत। गृहमेधीयेनेष्ट्वा। इन्द्राय निष्कास न्निदध्यात्। इन्द्र एवैन न्निहितभाग उपाऽऽवर्तते। गार्हपत्ये जुहोति।। 48।। ❀ भागधेयेनैवैनꣳ समर्धयति। ऋषभ मा ह्वयति। वषट्कार एवास्य सः। अथो इन्द्रिय मेव तद्वीर्यँ यजमानो भ्रातृव्यस्य वृङ्क्ते। इन्द्रो वृत्रꣳ हत्वा। परां परावत मगच्छत्। अपाराध मिति मन्यमानः। सोऽब्रवीत्। क इदँ वेदिष्यतीति। तेऽब्रुव न्मरुतो वरँ वृणामहै।। 49।। ❀ अथ वयँ वेदाम। अस्मभ्य मेव प्रथमꣳ हवि र्निरुप्याता इति। त एन मध्यक्रीडन्न्। तत्क्रीडिनाङ्क्रीडित्वम्। यन्मरुद्भ्यः क्रीडिभ्यः प्रथमꣳ हवि र्निरुप्यते विजित्यै। साकꣳ सूर्येणोद्यता निर्वपति। एतस्मिन्वै लोक इन्द्रो वृत्र मह'2'न्थ्समृद्ध्यै। एतद्ब्राह्मणान्येव पञ्च हवीꣳषि। एतद्ब्राह्मण ऐन्द्राग्नः। अथैष ऐन्द्र श्चरु र्भवति।। 50।। ❀ उद्धारँ वा एत मिन्द्र उदहरत। वृत्रꣳ हत्वा। अन्यासु देवता स्वधि। यदेष ऐन्द्र श्चरु र्भवति। उद्धार मेव तँ यजमान

उद्धरते। अन्यासु प्रजास्वधि। वैश्वकर्मण एककपालो भवति। विश्वान्येव तेन कर्माणि यजमानोऽवरुन्धे।। 51।। (ऋध्यतेऽभ्यञ्जते जुहोति वृणामहै भवत्यष्टौ च। 7।)

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। ता वरुणप्रघासै र्वरुणपाशा दमुञ्चत्। साकमेधैः प्रत्यस्थापयत्। त्र्यम्बकै रुद्र न्निरवादयत। पितृयज्ञेन सुवर्गं लोक मगमयत्। यद्वैश्वदेवेन यजते। प्रजा एव तद्यजमान स्सृजते। ता वरुणप्रघासै र्वरुणपाशा न्मुञ्चति। साकमेधैः प्रतिष्ठापयति। त्र्यम्बकै रुद्र न्निरवदयते।। 52।। पितृयज्ञेन सुवर्गं लोकङ्गमयति। दक्षिणतः प्राचीनाऽऽवीती निर्वपति। दक्षिणाऽऽवृद्धि पितृणाम्। अनादृत्य तत्। उत्तरत एवोपवीय निर्वपेत्। उभये हि देवाश्च पितर श्चेज्यन्ते। अथो यदेव दक्षिणार्धेऽधिश्रयति। तेन दक्षिणावृत्। सोमाय पितृमते पुरोडाशः षद्कपाल न्निर्वपति। सँवथ्सरो वै सोमः पितृमान्।। 53।। सँवथ्सर मेव प्रीणाति। पितृभ्यो बर्हिषद्भ्यो धानाः। मासा वै पितरो बर्हिषदः। मासानेव प्रीणाति। यस्मिन्वा ऋतौ पुरुषः प्रमीयते। सोऽस्यामुष्मि न्लोके भवति। बहुरूपा धाना भवन्ति। अहोरात्राणा मभिजित्यै। पितृभ्योऽग्निष्वात्तेभ्यो मन्थम्। अर्धमासा वै पितरोऽग्निष्वात्ताः।। 54।। अर्धमासा नेव प्रीणाति। अभिवान्यायै दुग्धे भवति। सा हि पितृदेवत्य न्दुहे। यत्पूर्णम्। तन्मनुष्याणाम्। उपर्यर्धो देवानाम्। अर्धः पितृणाम्। अर्ध उप मन्थति। अर्धो हि पितृणाम्। एकयोप मन्थति।। 55।। एका हि पितृणाम्। दक्षिणोप मन्थति। दक्षिणावृद्धि पितृणाम्। अनारभ्योप मन्थति। तद्धि पितृ न्गच्छति। इमा न्दिशँ वेदि मुद्धन्ति। उभये हि देवाश्च पितर श्चेज्यन्ते। चतुस्स्रक्ति र्भवति। सर्वा ह्यनु दिशः पितरः। अखाता भवति।। 56।। खाता हि देवानाम्। मध्यतोऽग्नि रा धीयते। अन्ततो हि देवाना माधीयते। वर्षीया निध्म इध्मा द्भवति व्यावृत्त्यै। परिश्रयति। अन्तर्हितो हि पितृलोको मनुष्यलोकात्। यत्परुषि दिनम्। तद्देवानाम्। यदन्तरा। तन्मनुष्याणाम्।। 57।। यथ्समूलम्। तत्पितृणाम्। समूलं बर्हि र्भवति व्यावृत्त्यै। दक्षिणा स्तृणाति। दक्षिणावृद्धि पितृणाम्। त्रिः पर्येति। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति। त्रिः पुनः पर्येति। षट्थ्सं पद्यन्ते।। 58।। षड्वा ऋतवः। ऋतू नेव प्रीणाति। यत्प्रस्तरँ यजुषा गृह्णीयात्। प्रमायुको यजमान स्स्यात्। यन्न गृह्णीयात्। अनायतनस्स्यात्। तूष्णी मेव न्यस्येत्। न प्रमायुको भवति। नानायतनः। यत्त्री न्परिधी न्परिदध्यात्।। 59।। मृत्युना यजमानं परि

गृह्णीयात्। यन्न परिदध्यात्। रक्षाꣳसि यज्ञꣳ हन्युः। द्वौ परिधी परि दधाति। रक्षसा मपहत्यै। अथो मृत्यो रेव यजमान मुथ्सृजति। यत्त्रीणित्रीणि हवीꣳष्युदाहरेयुः। त्रयस्त्रय एषाꣳ साकं प्र मीयेरन्न्। एकैक मनूचीना न्युदाहरन्ति। एकैक एवैषा मन्वञ्चः प्रमीयते। कशिपु कशिपव्याय। उपबर्हण मुपबर्हण्याय। आञ्जन माञ्जन्याय। अभ्यञ्जन मभ्यञ्जन्याय। यथाभाग मेवैना न्प्रीणाति।। 60।। (निरवदयते पितृमा नग्निष्वात्ता एकयोप मन्थ त्यखाता भवति मनुष्याणां पद्यन्ते परिदध्या न्मीयते पञ्च च। 8।)

❀ 卐 अग्नये देवेभ्यः पितृभ्य स्समिध्यमानायानु ब्रूही- त्याह। उभये हि देवाश्च पितर श्चेज्यन्ते। एका मन्वाह। एका हि पितृणाम्। त्रिरन्वाह। त्रिर् हि देवानाम्। आघारा वाघारयति। यज्ञपरुषो रनन्तरित्यै। नाऽऽर्षेयँ वृणीते। न होतारम्।। 61।।❀ यदार्षेयँ वृणीत। यद्धोतारम्। प्रमायुको यजमान स्स्यात्। प्रमायुको होता। तस्मान्न वृणीते। यजमानस्य होतु र्गोपीथाय। अपबर्हिषः प्रयाजान् यजति। प्रजा वै बर्हिः। प्रजा एव मृत्यो रुथ्सृजति। आज्यभागौ यजति।। 62।।❀ यज्ञस्यैव चक्षुषी नान्तरेति। प्राचीनावीती सोमँ यजति। पितृदेवत्या हि। एषाऽऽहुतिः। पञ्चकृत्वोऽव द्यति। पञ्च ह्येता देवताः। द्वे पुरोऽनुवाक्ये। याज्या देवता वषट्कारः। ता एव प्रीणाति। सन्तत मव द्यति।। 63।।❀ ऋतूनाꣳ सन्तत्यै। प्रैवैभ्यः पूर्वया पुरोऽनुवाक्ययाऽऽह। प्रणयति द्वितीयया। गमयति याज्यया। तृतीये वा इतो लोके पितरः। अह्न एवैना न्पूर्वया पुरोऽनुवाक्ययाऽत्यानयति। रात्रियै द्वितीयया। ऐवैनान् याज्यया गमयति। दक्षिणतोऽवदाय। उदङ्ङतिक्रामति व्यावृत्त्यै।। 64।।❀ 卐 आ स्वधे- त्याश्रावयति। 卐 अस्तु स्वधे-ति प्रत्याश्रावयति। 卐 स्वधा नम - इति वषट्करोति। स्वधाकारो हि पितृणाम्। सोम मग्रे यजति। सोमप्रयाजा हि पितरः। सोमं पितृमन्तँ यजति। सँवथ्सरो वै सोमः पितृमान्। सँवथ्सर मेव तद्यजति। पितृन् बर्हिषदो यजति।। 65।।❀ ये वै यज्वानः। ते पितरो बर्हिषदः। तानेव तद्यजति। पितृ नग्निष्वात्तान् यजति। ये वा अयज्वानो गृहमेधिनः। ते पितरोऽग्निष्वात्ताः। तानेव तद्यजति। अग्नि ङ्कव्यवाहनँ यजति। य एव पितृणा मग्निः। तमेव तद्यजति।। 66।।❀ अथो यथाऽग्निꣳ स्विष्टकृतँ यजति। तादृगेव तत्। एतत्ते तत ये च त्वा मन्विति तिसृषु स्रक्तीषु नि दधाति। तस्मा दातृतीया त्पुरुषा न्नाम न गृह्णन्ति। एतावन्तो हीज्यन्ते। अत्र पितरो यथाभागं

मन्दध्व मित्याह। ह्रीका हि पितरः। उदञ्चो निष्क्रामन्ति। एषा वै मनुष्याणा न्दिक्। स्वामेव तद्दिश मनु निष्क्रामन्ति।। 67।।❀ आहवनीय मुप तिष्ठन्ते। न्येवास्मै तद्धुवते। यथ्सत्याहवनीये। अथान्यत्र चरन्ति। आ तमितो रुप तिष्ठन्ते। अग्नि मेवोपद्रष्टारङ्कृत्वा। पितॄ न्निरवदयन्ते। अन्तँ वा एते प्राणाना ङ्गच्छन्ति। य आतमितो रुपतिष्ठन्ते। सुसन्दृशन्त्वा वय मित्याह।। 68।।❀ प्राणो वै सुसन्दृक्। प्राण मेवाऽऽत्म न्दधते। योजा न्विन्द्र ते हरी इत्याह। प्राण मेव पुनरयुक्त। अक्ष न्नमीमदन्त हीति गार्हपत्य मुप तिष्ठन्ते। अक्ष न्नमीमदन्ताथ त्वोप तिष्ठामह इति वावैतदाह। अमीमदन्त पितर स्सोम्या इत्यभि प्र पद्यन्ते। अमीमदन्त पितरोऽथ त्वाऽभि प्र पद्यामह इति वावैतदाह। अपः॰ परिषिञ्चति। मार्जय त्येवैनान्।। 69।।❀ अथो तर्पयत्येव। तृप्यति प्रजया पशुभिः। य एवँ वेद। अपबर्हिषा वनूयाजौ यजति। प्रजा वै बर्हिः। प्रजा एव मृत्यो रुथ्सृजति। चतुरः॰ प्रयाजान् यजति। द्वावनूयाजौ। षट्थ्सं पद्यन्ते। षड्वा ऋतवः।। 70।।❀ ऋतू नेव प्रीणाति। न पत्न्यन्वास्ते। न सँ याजयन्ति। यत्पत्न्यन्वासीत। यथ्सँयाजयेयुः। प्रमायुका स्यात्। तस्मा न्नान्वास्ते। न सँ याजयन्ति। पत्नियै गोपीथाय।। 71।। (होतार माज्यभागौ यजति सन्तत मवद्यति व्यावृत्त्यै बर्हिषदो यजति तमेव तद्यजत्यनु निष्क्राम न्त्याहैना नृतवो नव च। 9।)

❀ प्रतिपूरुष मेककपाला न्निर्वपति। जाता एव प्रजा रुद्रा न्निरवदयते। एक मतिरिक्तम्। जनिष्यमाणा एव प्रजा रुद्रा न्निरवदयते। एककपाला भवन्ति। एकधैव रुद्र न्निरवदयते। नाभि घारयति। यदभिघारयेत्। अन्तरवचारिण॰ रुद्रङ्कुर्यात्। एकोल्मुकेन यन्ति।। 72।।❀ तद्धि रुद्रस्य भागधेयम्। इमा न्दिशँ यन्ति। एषा वै रुद्रस्य दिक्। स्वाया मेव दिशि रुद्र न्निरवदयते। रुद्रो वा अपशुकाया आहुत्यै नातिष्ठत। 卐 असौ ते पशु- रिति निर्दिशे द्यन्द्विष्यात्। यमेव द्वेष्टि। तमस्मै पशु न्निर्दिशति। यदि न द्विष्यात्। 卐 आखुस्ते पशु- रिति ब्रूयात्।। 73।।❀ न ग्राम्या न्पशून् हिनस्ति। नाऽऽरण्यान्। चतुष्पथे जुहोति। एष वा अग्नीनां पड्बीशो नाम। अग्निवत्येव जुहोति। मध्यमेन पर्णेन जुहोति। स्रुग्घ्येषा। अथो खलु। अन्तमेनैव होतव्यम्। अन्तत एव रुद्र न्निरवदयते ।। 74।।❀ एष ते रुद्र भाग स्सह स्वस्राऽम्बिकयेत्याह। शरद्वा अस्याम्बिका स्वसा। तया वा एष हिनस्ति। य॰ हिनस्ति। तयैवैन॰ सह शमयति। भेषजङ्गव इत्याह। यावन्त

एव ग्राम्याः पशवः। तेभ्यो भेषजङ्करोति। अवाम्ब रुद्र मदिमहीत्याह। आशिष मेवैता माशास्ते।। 75।।❀ त्र्यम्बकँ यजामह इत्याह। मृत्यो र्मुक्षीय माऽमृतादिति वावैतदाह। उत्किरन्ति। भगस्य लीप्सन्ते। मूते कृत्वा सजन्ति। यथा जनँ यतेऽवस ङ्करोति। तादृगेव तत्। एष ते रुद्र भाग इत्याह निरवत्यै। अप्रतीक्ष मा यन्ति। अपः परिषिञ्चति। रुद्रस्यान्तर्हित्यै। प्र वा एतेऽस्मा ल्लोका च्च्यवन्ते। ये त्र्यम्बकै श्चरन्ति। आदित्य ञ्चरुं पुनरेत्य निर्वपति। इयँ वा अदितिः। अस्या मेव प्रति तिष्ठन्ति।। 76।। (यन्ति ब्रूया न्निरवदयते शास्ते सिञ्चति षट्च। 10।)

(अनुमत्यै वैश्वदेवेन तास्सृष्टा स्त्रिवृ त्प्रजापति स्सवितोत्तरस्या न्देवासुरा स्सोऽग्नि र्यत्पत्नी वैश्वदेवेन ता वरुणप्रघासै रग्नये देवेभ्यः प्रतिपूरुष न्दश। 10। अनुमत्यै प्रथमजो वथ्सो बहुरूपा हि पशव स्तस्मा त्पृथमात्रँ यदग्नयेऽनीकवत उद्धारं वा अग्नये देवेभ्य ऋतू नेव षट्थ्सप्ततिः। 76। अनुमत्यै प्रति तिष्ठन्ति।।)

## प्रथमाष्टके सप्तमः प्रपाठकः

### वै।का। राजसूय ब्राह्मणम् 1– 3(दशानुवाकाः 10)

❀ एतद्ब्राह्मणान्येव पञ्च हवीꣳषि। अथेन्द्राय शुनासीराय पुरोडाश न्द्वादशकपाल न्निर्वपति। सँवथ्सरो वा इन्द्राशुनासीरः। सँवथ्सरेणैवास्मा अन्न मव रुन्धे। वायव्यं पयो भवति। वायुर्वै वृष्ट्यै प्रदापयिता। स एवास्मै वृष्टिं प्र दापयति। सौर्य एककपालो भवति। सूर्येण वा अमुष्मि न्लोके वृष्टि र्धृता। स एवास्मै वृष्टि न्नियच्छति।। 1।।❀ द्वादशगवꣳ सीर न्दक्षिणा समृद्ध्यै। देवासुरा स्सँयत्ता आसन्न्। ते देवा अग्नि मब्रुवन्न्। त्वया वीरेणासुरा नभि भवामेति। सोऽब्रवीत्। त्रेधाऽह मात्मानँ वि करिष्य इति। स त्रेधाऽऽत्मानँ व्यकुरुत। अग्नि न्तृतीयम्। रुद्र न्तृतीयम्। वरुण न्तृतीयम्।। 2।।❀ सोऽब्रवीत्। क इद न्तुरीयमिति। अहमितीन्द्रोऽब्रवीत्। सन्तु सृजावहा इति। तौ समसृजेताम्। स इन्द्र स्तुरीय मभवत्। यदिन्द्र स्तुरीय मभवत्। तदिन्द्रतुरीय.स्येन्द्रतुरीयत्वम्। ततो वै देवा व्यजयन्त। यदिन्द्रतुरीय न्निरुप्यते विजित्यै।। 3।।❀ वहिनी धेनु र्दक्षिणा। यद्वहिनी। तेनाऽऽग्नेयी। यद्गौः। तेन रौद्री। यद्धेनुः। तेनैन्द्री। यथ्स्त्री सती दान्ता। तेन वारुणी समृद्ध्यै। प्रजापति र्यज्ञ मसृजत।। 4।।❀ तꣳ सृष्टꣳ

रक्षाꣳस्यजिघाꣳसन्न्। स एताः प्रजापति रात्मनो देवता निरमिमीत। ताभिर्वै स दिग्भ्यो रक्षाꣳसि प्राणुदत। यत्पञ्चावत्तीय ञ्जुहोति। दिग्भ्य एव तद्यजमानो रक्षाꣳसि प्रणुदते। समूढꣳ रक्ष स्सन्दग्धꣳ रक्ष इत्याह। रक्षाꣳस्येव सन्दहति। अग्नये रक्षोघ्ने स्वाहेत्याह। देवताभ्य एव विजिग्यानाभ्यो भागधेयङ्करोति। प्रष्टिवाही रथो दक्षिणा समृद्ध्यै।। 5।।❀ इन्द्रो वृत्रꣳ हत्वा। असुरा न्पराभाव्य। नमुचि मासुर न्नाऽलभत। तꣳ शच्याऽगृह्णात्। तौ समलभेताम्। सोऽस्मा दभिशुनतरोऽभवत्। सोऽब्रवीत्। सन्धाꣳ सन्दधावहै। अथ त्वाऽव स्रक्ष्यामि। न मा शुष्केण नाऽऽर्द्रेण हनः।। 6।।❀ न दिवा न नक्त मिति। स एत मपां फेन मसिञ्चत्। न वा एष शुष्को नाऽऽर्द्रो व्युष्टाऽऽसीत्। अनुदित स्सूर्यः। न वा एत द्दिवा न नक्तम्। तस्यै तस्मिन्लोके। अपां फेनेन शिर उदवर्तयत्। तदेन मन्ववर्तत। मित्रद्रुगिति।। 7।।❀ स एता नपामार्गा नजनयत्। तानजुहोत्। तैर्वै स रक्षाꣳस्यपाहत। यदपामार्गहोमो भवति। रक्षसा मपहत्यै। एकोल्मुकेन यन्ति। तद्धि रक्षसां भागधेयम्। इमा न्दिशँ यन्ति। एषा वै रक्षसा न्दिक्। स्वाया मेव दिशि रक्षाꣳसि हन्ति।। 8।।❀ स्वकृत इरिणे जुहोति प्रदरे वा। एतद्वै रक्षसा मायतनम्। स्व एवाऽऽयतने रक्षाꣳसि हन्ति। पर्णमयेन स्रुवेण जुहोति। ब्रह्म वै पर्णः। ब्रह्मणैव रक्षाꣳसि हन्ति। देवस्य त्वा सवितुः प्रसव इत्याह। सवितृप्रसूत एव रक्षाꣳसि हन्ति। हतꣳ रक्षोऽवधिष्म रक्ष इत्याह। रक्षसाꣳ स्तृत्यै। यद्वस्ते तद्दक्षिणा निरवत्यै। अप्रतीक्ष मा यन्ति। रक्षसा मन्तर्हित्यै।। 9।। (यच्छति वरुण न्तृतीयँ विजित्या असृजत समृद्ध्यै हनो मित्रद्रुगिति हन्ति स्तृत्यै त्रीणि च। 1।)

❀ धात्रे पुरोडाश न्द्वादशकपाल न्निर्वपति। सँवथ्सरो वै धाता। सँवथ्सरेणैवास्मै प्रजाः प्र जनयति। अन्वेवास्मा अनुमति र्मन्यते। राते राका। प्र सिनीवाली जनयति। प्रजास्वेव प्रजातासु कुह्वा वाच न्दधाति। मिथुनौ गावौ दक्षिणा समृद्ध्यै। आग्नावैष्णव मेकादशकपाल न्निर्वपति। ऐन्द्रावैष्णव मेकादशकपालम्।। 10।।❀ वैष्णव न्त्रिकपालम्। वीर्यँ वा अग्निः। वीर्य मिन्द्रः। वीर्यँ विष्णुः। प्रजा एव प्रजाता वीर्ये प्रतिष्ठापयति। तस्मा त्प्रजा वीर्यावतीः। वामन ऋषभो वही दक्षिणा। यद्वही। तेनाऽऽग्नेयः। यदृषभः।। 11।।❀ तेनैन्द्रः। यद्वामनः। तेन वैष्णव स्समृद्ध्यै। अग्नीषोमीय मेकादशकपाल न्निर्वपति। इन्द्रासोमीय मेकादशकपालम्। सौम्य ञ्चरुम्। सोमो वै

रेतोधाः। अग्निः प्रजानां प्रजनयिता। वृद्धाना मिन्द्रः प्रदापयिता। सोम एवास्मै रेतो दधाति।। 12।। ❀ अग्निः प्रजां प्र जनयति। वृद्धा मिन्द्रः प्र यच्छति। बभ्रु र्दक्षिणा समृद्ध्यै। सोमापौष्ण ञ्चरु न्निर्वपति। ऐन्द्रापौष्ण ञ्चरुम्। सोमो वै रेतोधाः। पूषा पशूनां प्रजनयिता। वृद्धाना मिन्द्रः प्रदापयिता। सोम एवास्मै रेतो दधाति। पूषा पशू न्प्र जनयति।। 13।। ❀ वृद्धा निन्द्रः प्र यच्छति। पौष्ण श्चरु र्भवति। इयँ वै पूषा। अस्यामेव प्रति तिष्ठति। श्यामो दक्षिणा समृद्ध्यै। बहु वै पुरुषो मेध्य मुप गच्छति। वैश्वानर न्द्वादशकपाल न्निर्वपति। सँवथ्सरो वा अग्नि र्वैश्वानरः। सँवथ्सरेणैवैनँ स्वदयति। हिरण्य न्दक्षिणा।। 14।। ❀ पवित्रँ वै हिरण्यम्। पुना त्येवैनम्। बहु वै राजन्योऽनृतङ्करोति। उपजाम्यै हरते। जिनाति ब्राह्मणम्। वद त्यनृतम्। अनृते खलु वै क्रियमाणे वरुणो गृह्णाति। वारुणँ यवमयञ्चरु न्निर्वपति। वरुणपाशा देवैनं मुञ्चति। अश्वो दक्षिणा। वारुणो हि देवतयाऽश्व स्समृद्ध्यै।। 15।। (ऐन्द्रावैष्णव मेकादशकपालँ यदृषभो दधाति पूषा पशू न्प्र जनयति हिरण्य न्दक्षिणा दक्षिणैकञ्च। 2।)

❀ रत्निना मेतानि हवीँषि भवन्ति। एते वै राष्ट्रस्य प्रदातारः। एतेऽपादातारः। य एव राष्ट्रस्य प्रदातारः। येऽपादातारः। त एवास्मै राष्ट्रं प्र यच्छन्ति। राष्ट्रमेव भवति। यथ्समाहृत्य निर्वपेत्। अरत्निनस्स्युः। यथायथ न्निर्वपति रत्नित्वाय।। 16।। ❀ यथ्सद्यो निर्वपेत्। यावती मेकेन हविषाऽऽशिष मवरुन्धे। तावती मव रुन्धीत। अन्वह न्निर्वपति। भूयसी मेवाऽऽशिष मवरुन्धे। भूयसो यज्ञक्रतू नुपैति। बार्हस्पत्य ञ्चरु न्निर्वपति ब्रह्मणो गृहे। मुखत एवास्मै ब्रह्म सँश्यति। अथो ब्रह्मन्नेव क्षत्र मन्वारम्भयति। शितिपृष्ठो दक्षिणा समृद्ध्यै।। 17।। ❀ ऐन्द्र मेकादशकपालँ राजन्यस्य गृहे। इन्द्रिय मेवाव रुन्धे। ऋषभो दक्षिणा समृद्ध्यै। आदित्य ञ्चरुं महिष्यै गृहे। इयँ वा अदितिः। अस्या मेव प्रति तिष्ठति। धेनु र्दक्षिणा समृद्ध्यै। भगाय चरुँ वावातायै गृहे। भग मेवास्मि न्दधाति। विचित्तगर्भा पष्ठौही दक्षिणा समृद्ध्यै।। 18।। ❀ नैर्ऋत ञ्चरुं परिवृक्त्यै गृहे कृष्णानाँ व्रीहीणा न्नखनिर्भिन्नम्। पाप्मान मेव निर्ऋति न्निरवदयते। कृष्णा कूटा दक्षिणा समृद्ध्यै। आग्नेय मष्टाकपालँ सेनान्यो गृहे। सेना मेवास्य सँश्यति। हिरण्य न्दक्षिणा समृद्ध्यै। वारुण न्दशकपालँ सूतस्य गृहे। वरुणसव मेवाव रुन्धे। महानिरष्टो दक्षिणा समृद्ध्यै। मारुतँ सप्तकपालङ्ग्रामण्यो गृहे।। 19।। ❀ अन्नँ वै मरुतः। अन्न मेवाव रुन्धे। पृश्ञि र्दक्षिणा समृद्ध्यै।

सावित्र न्द्वादशकपाल ङ्क्षत्तु गृहे प्रसूत्यै। उपध्वस्तो दक्षिणा समृध्यै। आश्विन न्द्विकपाल॰ सङ्ग्रहीतु गृहे। अश्विनौ वै देवानां भिषजौ। ताभ्या मेवास्मै भेषज ङ्करोति। सवात्यौ दक्षिणा समृध्यै। पौष्ण ञ्चरुं भागदुघस्य गृहे।। 20।। ❀ अन्नँ वै पूषा। अन्न मेवाव रुन्धे। श्यामो दक्षिणा समृध्यै। रौद्र ङ्गावीधुक ञ्चरु मक्षाऽऽवापस्य गृहे। अन्तत एव रुद्र न्निरवदयते। शबल उद्वारो दक्षिणा समृध्यै। द्वादशैतानि हवी॰षि भवन्ति। द्वादश मासा स्सँवथ्सरः। सँवथ्सरेणैवास्मै राष्ट्र मव रुन्धे। राष्ट्रमेव भवति।। 21।। ❀ यन्न प्रतिनिर्वपेत्। रत्निन आशिषोऽव रुन्धीरन्न्। प्रति निर्वपति। इन्द्राय सुत्राम्णे पुरोडाश मेकादशकपालम्। इन्द्राया॰होमुचे। आशिष एवाव रुन्धे। अयन्नो राजा वृत्रहा राजा भूत्वा वृत्रँ वध्या दित्याह। आशिष मेवैता मा शास्ते। मैत्राबारहस्पत्यं भवति। श्वेतायै श्वेतवथ्सायै दुग्धे।। 22।। ❀ बारहस्पत्ये मैत्र मपि दधाति। ब्रह्म चैवास्मै क्षत्रञ्च समीची दधाति। अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति। बारहस्पत्येन पूर्वेण प्र चरति। मुखत एवास्मै ब्रह्म स॰श्यति। अथो ब्रह्मन्नेव क्षत्र मन्वारम्भयति। स्वयङ्कृता वेदि र्भवति। स्वयन्दिनं बरहिः। स्वयङ्कृत इध्मः। अनभिजितस्याभिजित्यै। तस्मा द्राज्ञा मरण्य मभिजितम्। सैव श्वेता श्वेतवथ्सा दक्षिणा समृध्यै।। 23।। (रत्नित्वाय समृध्यै पष्ठौही दक्षिणा समृध्यै ग्रामण्यो गृहे भागदुघस्य गृहे भवति दुग्धेऽभिजित्यै द्वे च। 3।)

❀ देवसुवा मेतानि हवी॰षि भवन्ति। एतावन्तो वै देवाना॰ सवाः। त एवास्मै सवा न्प्र यच्छन्ति। त एन॰ सुवन्ते। अग्नि रेवैन ङ्गृहपतीना॰ सुवते। सोमो वनस्पतीनाम्। रुद्रः पशूनाम्। बृहस्पति र्वाचाम्। इन्द्रो ज्येष्ठानाम्। मित्र स्सत्यानाम्।। 24।। ❀ वरुणो धर्मपतीनाम्। एतदेव सर्वं भवति। सविता त्वा प्रसवाना॰ सुवता मिति हस्तङ्गृह्णाति प्रसूत्यै। ये देवा देवसुवस्स्थेत्याह। यथायजु रेवैतत्। महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह। आशिष मेवैता मा शास्ते। एष वो भरता राजा सोमोऽस्माकं ब्राह्मणाना॰ राजेत्याह। तस्मा थ्सोमराजानो ब्राह्मणाः। प्रति त्य न्नाम राज्य मधायीत्याह।। 25।। ❀ राज्य मेवास्मि न्प्रति दधाति। स्वा न्तनुवँ वरुणो अशिश्रेदित्याह। वरुणसव मेवाव रुन्धे। शुचे र्मित्रस्य व्रत्या अभूमेत्याह। शुचि मेवैनँ व्रत्यङ्करोति। अमन्महि महत ऋतस्य नामेत्याह। मनुत एवैनम्। सर्वे व्राता वरुणस्याभूव न्नित्याह। सर्वव्रात मेवैनङ्करोति। वि मित्र एवै रराति मतारी दित्याह।।

26।।❀ अराति मेवैन न्तारयति। असूषुदन्त यज्ञिया ऋतेनेत्याह। स्वदयत्येवैनम्। व्यु त्रितो जरिमाणन्न आनडित्याह। आयु रेवास्मि न्दधाति। द्वाभ्याँ विमृष्टे। द्विपा द्यजमानः प्रतिष्ठित्यै। अग्नीषोमीयस्य चैकादशकपालस्य देवसुवाञ्च हविषा मग्नये स्विष्टकृते समवद्यति। देवताभि रेवैन मुभयतः परिगृह्णाति। विष्णुक्रमा न्क्रमते। विष्णुरेव भूत्वेमा न्लोका नभि जयति।। 27।। (सत्याना मधायीत्याहातारी दित्याह क्रमत एकञ्च। 4।

❀ अर्थेतस्स्थेति जुहोति। आहुत्यैवैना निष्क्रीय गृह्णाति। अथो हविष्कृताना मेवाभिघृताना ङ्गृह्णाति। वहन्तीना ङ्गृह्णाति। एता वा अपाँ राष्ट्रम्। राष्ट्र मेवास्मै गृह्णाति। अथो श्रिय मेवैन मभि वहन्ति। अपां पति रसीत्याह। मिथुन मेवाकः। वृषास्यूर्मि रित्याह।। 28।।❀ ऊर्मिमन्त मेवैनङ्करोति। वृषसेनोऽसीत्याह। सेना मेवास्य सँश्यति। व्रजक्षित स्स्थेत्याह। एता वा अपाँ विशः। विश मेवास्मै पर्यूहति। मरुता मोजस्स्थेत्याह। अन्नँ वै मरुतः। अन्न मेवाव रुन्धे। सूर्यवर्चस स्स्थेत्याह।। 29।।❀ राष्ट्रमेव वर्चस्व्यकः। सूर्यत्वचस स्स्थेत्याह। सत्यँ वा एतत्। यद्वर्षति। अनृतँ यदातपति वर्षति। सत्यानृते एवाव रुन्धे। नैनँ सत्यानृते उदिते हिँस्तः। य एवँ वेद। मान्दा स्स्थेत्याह। राष्ट्र मेव ब्रह्मवर्चस्यकः।। 30।।❀ वाशा स्स्थेत्याह। राष्ट्रमेव वश्यकः। शक्करी स्स्थेत्याह। पशवो वै शक्करीः। पशू नेवाव रुन्धे। विश्वभृत स्स्थेत्याह। राष्ट्रमेव पयस्व्यकः। जनभृत स्स्थेत्याह। राष्ट्र मेवेन्द्रियाव्यकः। अग्ने स्तेजस्या स्स्थेत्याह।। 31।।❀ राष्ट्र मेव तेजस्व्यकः। अपा मोषधीनाँ रसस्स्थेत्याह। राष्ट्र मेव मधव्यमकः। सारस्वत ङ्ग्रह ङ्गृह्णाति। एषा वा अपां पृष्ठम्। यथ्सरस्वती। पृष्ठ मेवैनँ समानानाङ्करोति। षोडशभि र्गृह्णाति। षोडशकलो वै पुरुषः। यावानेव पुरुषः। तस्मिन्वीर्य न्दधाति। षोडशभि र्जुहोति षोडशभि र्गृह्णाति। द्वात्रिँश थ्सं पद्यन्ते। द्वात्रिँशदक्षराऽनुष्टुक्। वागनुष्टु.प्सर्वाणि छन्दाँसि। वाचैवैनँ सर्वेभि श्छन्दोभि रभिषिञ्चति।। 32।। (ऊर्मि रित्याह सूर्यवर्चस स्स्थेत्याह ब्रह्मवर्चस्यक स्तेजस्या स्स्थेत्याहैव पुरुष ष्षट्च। 5।)

❀ देवी राप स्सं मधुमती र्मधुमतीभि स्सृज्यध्व मित्याह। ब्रह्मणैवैना स्सँ सृजति। अनाधृष्टा स्सीदतेत्याह। ब्रह्मणैवैना स्सादयति। अन्तरा होतुश्च धिष्णियं ब्राह्मणाच्छँसिनश्च सादयति। आग्नेयो वै होता। ऐन्द्रो ब्राह्मणाच्छँसी। तेजसा चैवेन्द्रियेण चोभयतो राष्ट्रं परि गृह्णाति।

हिरण्येनोत्पुनाति। आहुत्यै हि पवित्राभ्या मुत्पुनन्ति व्यावृत्त्यै।। 33।।❀ शतमानं भवति। शता॒ऽयुः॒ पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। अनिभृष्ट मसीत्याह। अनिभृष्टꣳ ह्येतत्। वाचो बन्धु रित्याह। वाचो ह्येष बन्धुः। तपोजा इत्याह। तपोजा ह्येतत्। सोमस्य दात्र मसीत्याह।। 34।।❀ सोमस्य ह्येत द्दात्रम्। शुक्रा व श्शुक्रेणोत्पुनामीत्याह। शुक्रा ह्यापः। शुक्रꣳ हिरण्यम्। चन्द्रा श्चन्द्रेणेत्याह। चन्द्रा ह्यापः। चन्द्रꣳ हिरण्यम्। अमृता अमृतेनेत्याह। अमृता ह्यापः। अमृतꣳ हिरण्यम्।। 35।।❀ स्वाहा राजसूयायेत्याह। राजसूयाय ह्येना उत्पुनाति। सधमादो द्युम्निनी रूर्ज एता इति वारुण्यर्चा गृह्णाति। वरुणसव मेवाव रुन्धे। एकया गृह्णाति। एकधैव यजमाने वीर्य न्दधाति। क्षत्रस्योल्ब मसि क्षत्रस्य योनिरसीति तार्प्य ञ्चोष्णीषञ्च प्र यच्छति सयोनित्वाय। एकशतेन दर्भपुञ्जीलैः पवयति। शता॒ऽयुर्वै पुरुष श्शतवीर्यः। आत्मैकशतः।। 36।।❀ यावानेव पुरुषः। तस्मिन्वीर्य न्दधाति। दध्याशयति। इन्द्रिय मेवाव रुन्धे। उदुम्बर माशयति। अन्नाद्यस्यावरुद्ध्यै। शष्पाण्याशयति। सुराबलि मेवैनङ्करोति। आविद एता भवन्ति। आविद मेवैनङ्गमयन्ति।। 37।।❀ अग्नि रेवैन ङ्गार्हपत्येनावति। इन्द्र इन्द्रियेण। पूषा पशुभिः। मित्रावरुणौ प्राणापानाभ्याम्। इन्द्रो वृत्राय वज्र मुदयच्छत्। स दिव मलिखत्। सोऽर्यम्णः पन्था अभवत्। स आविन्ने द्यावापृथिवी धृतव्रते इति द्यावापृथिवी उपाधावत्। स आभ्या मेव प्रसूत इन्द्रो वृत्राय वज्रं प्राहरत्। आविन्ने द्यावापृथिवी धृतव्रते इति यदाह।। 38।।❀ आभ्या मेव प्रसूतो यजमानो वज्रं भ्रातृव्याय प्र हरति। आविन्ना देव्यदिति र्विश्वरूपीत्याह। इयँ वै देव्यदिति र्विश्वरूपी। अस्यामेव प्रति तिष्ठति। आविन्नोऽय मसा वामुष्यायणोऽस्याँ विश्यस्मि न्राष्ट्र इत्याह। विशैवैनꣳ राष्ट्रेण समर्धयति। महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह। आशिष मेवैता मा शास्ते। एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेत्याह। तस्मा थ्सोमराजानो ब्राह्मणाः।। 39।।❀ इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति धनुः प्र यच्छति विजित्यै। शत्रुबाधना स्स्थेतीषून्। शत्रू नेवास्य बाधन्ते। पात मा प्रत्यञ्चं पात मा तिर्यञ्च मन्वञ्चं मा पातेत्याह। तिस्रो वै शरव्याः। प्रतीची तिरश्च्यनूची। ताभ्य एवैनं पान्ति। दिग्भ्यो मा पातेत्याह। दिग्भ्य एवैनं पान्ति। विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्याह। अपरिमिता देवैनं पान्ति। हिरण्यवर्णा वुषसाँ विरोक इति त्रिष्टुभा बाहू उद्गृह्णाति।

इन्द्रियँ वै वीर्यं त्रिष्टुक्। इन्द्रिय मेव वीर्यं मुपरिष्टा दात्म न्धत्ते।। 40।। (व्यावृत्त्यै दात्र मसीत्याहामृत९ हिरण्य मेकशतो गमयन्त्याह ब्राह्मणा नाष्ट्राभ्य॰ पातेत्याह चत्वारि च। 6।)

दिशो व्यास्थापयति। दिशा मभिजित्यै। यदनुप्रक्रामेत्। अभि दिशो जयेत्। उत्तु माद्येत्। मनसाऽनु प्र क्रामति। अभि दिशो जयति। नोन्माद्यति। समिध मातिष्ठेत्याह। तेज एवाव रुन्धे।। 41।। उग्रा मातिष्ठेत्याह। इन्द्रिय मेवाव रुन्धे। विराज मातिष्ठेत्याह। अन्नाद्य मेवाव रुन्धे। उदीची मातिष्ठेत्याह। पशू नेवाव रुन्धे। ऊर्ध्वा मातिष्ठेत्याह। सुवर्गमेव लोक मभि जयति। अनूज्जिहीते। सुवर्गस्य लोकस्य समष्ट्यै।। 42।। मारुत एष भवति। अन्नँ वै मरुतः। अन्न मेवाव रुन्धे। एकवि९शतिकपालो भवति प्रतिष्ठित्यै। योऽरण्येऽनुवाक्यो गणः। तं मध्यत उप दधाति। ग्राम्यै रेव पशुभि रारण्या न्पशू न्परि गृह्णाति। तस्माद्ग्राम्यै॰ पशुभि रारण्या॰ पशव॰ परिगृहीताः। पृथि वैन्यः। अभ्यषिच्यत।। 43।। स राष्ट्र न्नाभवत्। स एतानि पार्थान्यपश्यत्। तान्यजुहोत्। तैर्वै स राष्ट्र मभवत्। यत्पार्थानि जुहोति। राष्ट्र मेव भवति। बार्हस्पत्यं पूर्वेषा मुत्तमं भवति। ऐन्द्र मुत्तरेषां प्रथमम्। ब्रह्म चैवास्मै क्षत्रञ्च समीची दधाति। अथो ब्रह्म न्नेव क्षत्रं प्रतिष्ठापयति।। 44।। षड्डुरस्ता दभिषेकस्य जुहोति। षडुपरिष्टात्। द्वादश सं पद्यन्ते। द्वादश मासा स्सँवथ्सरः। सँवथ्सर॰ खलु वै देवानां पूः। देवानामेव पुरं मध्यतो व्यवसर्पति। तस्य न कुतश्चनोपाऽव्याधो भवति। भूताना मवेष्टी र्जुहोति। अत्रात्र वै मृत्यु र्जायते। यत्रयत्रैव मृत्यु र्जायते। तत एवैन मव यजते। तस्मा द्राजसूयेनेजान स्सर्व मायुरेति। सर्वे ह्यस्य मृत्यवोऽ वेष्टाः। तस्मा द्राजसूयेनेजानो नाभिचरितवै। प्रत्यगेन मभिचार स्स्तृणुते।। 45।। (रुन्धे समष्ट्या असिच्यत स्थापयति जायते पञ्च च। 7।)

सोमस्य त्विषिरसि तवेव मे त्विषि र्भूयादिति शार्दूलचर्मोप स्पृणाति। यैव सोमे त्विषिः। या शार्दूले। तामेवाव रुन्धे। मृत्यो र्वा एष वर्णः। यच्छार्दूलः। अमृत९ हिरण्यम्। अमृतमसि मृत्योर्मा पाहीति हिरण्य मुपास्यति। अमृतमेव मृत्यो रन्त र्धत्ते। शतमानं भवति।। 46।। शताऽयु॰ पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। दिद्यो न्मा पाहीत्युपरिष्टादधि नि दधाति। उभयत एवास्मै शर्म दधाति। अवेष्टा दन्दशूका इति क्लीब९ सीसेन विध्यति। दन्दशूका नेवाव यजते। तस्मा त्क्लीब न्दन्दशूका द९शुकाः। निरस्त न्नमुचे श्शिर इति लोहितायस

न्निरस्यति। पाप्मान मेव नमुचि न्निरवदयते। प्राणा आत्मनः॒ पूर्वेऽभिषिच्या इत्याहुः।। 47।।❀ सोमो राजा वरुणः। देवा धर्मसुवश्च ये। ते ते वाचꣳ सुवन्ता न्ते ते प्राणꣳ सुवन्ता मित्याह। प्राणा नेवाऽऽत्मनः॒ पूर्वा नभिषिञ्चति। यद्ब्रूयात्। अग्नेस्त्वा तेजसाऽभि षिञ्चामीति। तेजस्व्येव स्यात्। दुश्चर्मा तु भवेत्। सोमस्य त्वा द्युम्नेनाभि षिञ्चामीत्याह। सौम्यो वै देवतया पुरुषः।। 48।।❀ स्वयैवैन न्देवतयाऽभिषिञ्चति। अग्ने स्तेजसेत्याह। तेज एवास्मि न्दधाति। सूर्यस्य वर्चसेत्याह। वर्च एवास्मि न्दधाति। इन्द्रस्येन्द्रियेणेत्याह। इन्द्रिय मेवास्मि न्दधाति। मित्रावरुणयो वीर्येणेत्याह। वीर्य मेवास्मि न्दधाति। मरुता मोजसेत्याह।। 49।।❀ ओज एवास्मि न्दधाति। क्षत्राणा ङ्क्षत्रपति रसीत्याह। क्षत्राणा मेवैन ङ्क्षत्रपति ङ्करोति। अति दिव स्पाहीत्याह। अत्यन्या न्पाहीति वावैतदाह। समाववृत्र न्नधरा गुदीची रित्याह। राष्ट्र मेवास्मि न्ध्रुव मकः। उच्छेषणेन जुहोति। उच्छेषणभागो वै रुद्रः। भागधेयेनैव रुद्र न्निरवदयते।। 50।।❀ उदङ्परेत्याग्नीध्रे जुहोति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्र न्निरवदयते। रुद्र यत्ते क्रयी पर न्नामेत्याह। यद्वा अस्य क्रयी पर न्नाम। तेन वा एष हिनस्ति। यꣳ हिनस्ति। तेनैवैनꣳ सह शमयति। तस्मै हुतमसि यमेष्टमसीत्याह। यमा देवास्य मृत्यु मव यजते।। 51।।❀ प्रजापते न त्वदेतान्यन्य इति तस्यै गृहे जुहुयात्। याङ्कामयेत राष्ट्र मस्यै प्रजा स्यादिति। राष्ट्र मेवास्यै प्रजा भवति। पर्णमयेनाध्वर्यु रभिषिञ्चति। ब्रह्मवर्चस मेवास्मि न्त्विषि न्दधाति। औदुम्बरेण राजन्यः। ऊर्ज मेवास्मि न्नन्नाद्य न्दधाति। आश्वत्थेन वैश्यः। विश मेवास्मि न्पुष्टि न्दधाति। नैयग्रोधेन जन्यः। मित्राण्येवास्मै कल्पयति। अथो प्रतिष्ठित्यै।। 52।।

(भवत्याहुः॒ पुरुष ओजसेत्याह निरवदयते यजते जन्यो द्वे च। 8।)

❀ इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथ मुपावहरति विजित्यै। मित्रावरुणयोस्त्वा प्रशास्त्रोः॒ प्रशिषा युनज्मीत्याह। ब्रह्मणैवैन न्देवताभ्याँ युनक्ति। प्रष्टिवाहिनँ युनक्ति। प्रष्टिवाही वै देवरथः। देवरथ मेवास्मै युनक्ति। त्रयोऽश्वा भवन्ति। रथ श्चतुर्थः। द्वौ सव्येष्ठसारथी। षट्थ्सं पद्यन्ते।। 53।।❀ षड्वा ऋतवः। ऋतुभि रेवैनँ युनक्ति। विष्णुक्रमा न्क्रमते। विष्णु रेव भूत्वेमा न्लोका नभि जयति। यः क्षत्रियः॒ प्रतिहितः। सोऽन्वारभते। राष्ट्र मेव भवति। त्रिष्टुभाऽन्वारभते। इन्द्रियँ वै त्रिष्टुक्। इन्द्रियमेव यजमाने दधाति।। 54।।❀ मरुतां प्रसवे जेष मित्याह। मरुद्भि रेव प्रसूत

उज्जयति। आप्तं मन इत्याह। यदेव मनसैप्सीत्। तदापत्। राजन्यञ्जिनाति। अनाक्रान्त एवाऽऽक्रमते। वि वा एष इन्द्रियेण वीर्येणर्ध्यते। यो राजन्यञ्जिनाति। समह मिन्द्रियेण वीर्येणेत्याह।। 55।। ❀ इन्द्रिय मेव वीर्य मात्म न्धत्ते। पशूनां मन्युरसि तवेव मे मन्यु र्भूयादिति वाराही उपानहा वुपमुञ्चते। पशूनाँ वा एष मन्युः। यद्वराहः। तेनैव पशूनां मन्यु मात्म न्धत्ते। अभि वा इय॰ सुषुवाण ङ्कामयते। तस्येश्वरेन्द्रियँ वीर्य मादातोः। वाराही उपानहा वुपमुञ्चते। अस्या एवान्त र्धत्ते। इन्द्रियस्य वीर्यस्यानात्यै।। 56।। ❀ नमो मात्रे पृथिव्या इत्याहाहि॰साये। इय दस्यायु रस्यायुर्मे धेहीत्याह। आयु रेवाऽऽत्म न्धत्ते। ऊर्गस्यूर्जं मे धेहीत्याह। ऊर्जं मेवाऽऽत्म न्धत्ते। युङ्ङसि वर्चोऽसि वर्चो मयि धेहीत्याह। वर्च एवाऽऽत्म न्धत्ते। एकधा ब्रह्मण उपहरति। एकधैव यजमान आयु रूर्जँ वर्चो दधाति। रथविमोचनीया जुहोति प्रतिष्ठित्यै।। 57।। ❀ त्रयोऽश्वा भवन्ति। रथश्चतुर्थः। तस्मा च्चतु र्जुहोति। यदुभौ सहावतिष्ठेताम्। समानँ लोक मियाताम्। सह सङ्ग्रहीत्रा रथवाहने रथ मा दधाति। सुवर्गा देवैनँ लोका दन्त र्दधाति। ह॰स श्शुचिष दित्या दधाति। ब्रह्मणैवैन मुपावहरति। ब्रह्मणाऽऽदधाति। अतिच्छन्दसाऽऽदधाति। अतिच्छन्दा वै सर्वाणि छन्दा॰सि। सर्वेभि रेवैनञ्छन्दोभि रा दधाति। वर्ष्म वा एषा छन्दसाम्। यदतिच्छन्दाः। यदतिच्छन्दसाऽऽदधाति। वर्ष्मैवैन॰ समानाना ङ्करोति।। 58।। (पद्यन्ते दधाति वीर्येणेत्याहानात्यै प्रतिष्ठित्यै ब्रह्मणाऽऽदधाति सप्त च। 9।)

❀ मित्रोऽसि वरुणोऽसीत्याह। मैत्रँ वा अहः। वारुणी रात्रिः। अहोरात्राभ्या मेवैन मुपावहरति। मित्रोऽसि वरुणोऽसीत्याह। मैत्रो वै दक्षिणः। वारुण स्सव्यः। वैश्वदेव्यामिक्षा। स्वमेवैनौ भागधेय मुपावहरति। समहँ विश्वै र्देवै रित्याह।। 59।। ❀ वैश्वदेव्यो वै प्रजाः। ता एवाऽऽद्याः कुरुते। क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसी त्यधीवास मास्तृणाति सयोनित्वाय। स्योना मा सीद सुषदा मा सीदेत्याह। यथायजु रेवैतत्। मा त्वा हि॰सी न्मा मा हि॰सी दित्याहाहि॰साये। निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतु रित्याह। साम्राज्य मेवैन॰ सुक्रतु ङ्करोति। ब्रह्मा '3'न्त्व॰ राज न्ब्रह्माऽसि सविताऽसि सत्यसव इत्याह। सवितार मेवैन॰ सत्यसव ङ्करोति।। 60।। ❀ ब्रह्मा '3' न्त्व॰ राज न्ब्रह्माऽसीन्द्रोऽसि सत्यौजा इत्याह। इन्द्र मेवैन॰ सत्यौजस ङ्करोति। ब्रह्मा '3' न्त्व॰ राज न्ब्रह्माऽसि मित्रोऽसि सुशेव इत्याह। मित्र

मेवैनꣳ सुशेव ङ्करोति। ब्रह्मा '3' न्त्वꣳ राज न्ब्रह्माऽसि वरुणोऽसि सत्यधर्मेत्याह। वरुण मेवैनꣳ सत्यधर्माण ङ्करोति। सविताऽसि सत्यसव इत्याह। गायत्री मेवैतेनाभिव्याहरति। इन्द्रोऽसि सत्यौजा इत्याह। त्रिष्टुभ मेवैतेनाभिव्याहरति।। 61।। ❀ मित्रोऽसि सुशेव इत्याह। जगती मेवैतेनाभिव्याहरति। सत्य मेता देवताः। सत्य मेतानि छन्दाꣳसि। सत्य मेवाव रुन्धे। वरुणोऽसि सत्यधर्मेत्याह। अनुष्टुभ मेवैतेनाभिव्याहरति। सत्यानृते वा अनुष्टुप्। सत्यानृते वरुणः। सत्यानृते एवाव रुन्धे।। 62।। ❀ नैनꣳ सत्यानृते उदिते हिꣳस्तः। य एवँ वेद। इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति स्फ्यं प्र यच्छति। वज्रो वै स्फ्यः। वज्रेणैवास्मा अवरपरꣳ रन्धयति। एवꣳ हि तच्छ्रेयः। यदस्मा एते रध्येयुः। दिशोऽभ्ययꣳ राजाऽभूदिति पञ्चाक्षा न्प्र यच्छति। एते वै सर्वेऽयाः। अपराजायिन मेवैन ङ्करोति।। 63।। ❀ ओदन मुद्बुवते। परमेष्ठी वा एषः। यदोदनः। परमा मेवैनꣳ श्रिय ङ्गमयति। सुश्लोकाँ '4' सुमङ्गलाँ '4' सत्यराजा '3' नित्याह। आशिष मेवैता मा शास्ते। शौनश्शेप मा ख्यापयते। वरुणपाशा देवैनं मुञ्चति। परश्शतं भवति। शताऽऽयुः पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। मारुतस्य चैकविꣳशतिकपालस्य वैश्वदेव्यै चाऽऽमिक्षाया अग्नये स्विष्टकृते समवद्यति। देवताभि रेवैन मुभयतः परिगृह्णाति। अपान्नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहेति तिस्र आहुती र्जुहोति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रति तिष्ठति।। 64।। (देवै रित्याह सत्यसव ङ्करोति त्रिष्टुभ मेवैतेनाभिव्याहरति सत्यानृते एवावरुन्धे करोति शतेन्द्रिय ष्षड्च। 10।)

(एतद्ब्राह्मणानि धात्रे रत्निना न्देवसुवा मर्थैतो देवी र्दिश स्सोमस्येन्द्रस्य मित्रो दश। 10। एतद्ब्राह्मणानि वैष्णव न्त्रिकपाल मन्नँ वै पूषा वाशास्स्थेत्याह दिशो व्यास्थापय त्युदञ्चरेत्य ब्रह्मा '4' त्वꣳ राजꣳ श्चतुष्षष्टिः। एतद्ब्राह्मणानि प्रति तिष्ठति।)

## प्रथमाष्टके अष्टमः प्रपाठकः

### वै।का। राजसूय ब्राह्मणम् 1– 4(चत्वारोऽनुवाकाः 4)

❀ वरुणस्य सुषुवाणस्य दशधेन्द्रियँ वीर्यं पराऽपतत्। तथ्सꣳसृद्भि रनु समसर्पत्। तथ्सꣳसृपाꣳ सꣳसृत्त्वम्। अग्निना देवेन प्रथमेऽह न्ननु प्रायुङ्क्त। सरस्वत्या वाचा द्वितीये। सवित्रा

प्रसवेन तृतीये। पूष्णा पशुभि श्चतुर्थे। बृहस्पतिना ब्रह्मणा पञ्चमे। इन्द्रेण देवेन षष्ठे। वरुणेन स्वया देवतया सप्तमे।। 1।। ❀ सोमेन राज्ञाऽष्टमे। त्वष्ट्रा रूपेण नवमे। विष्णुना यज्ञेनाऽऽप्नोत्। यथ्स॰सृपो भवन्ति। इन्द्रियमेव तद्वीर्यँ यजमान आप्नोति। पूर्वापूर्वा वेदि र्भवति। इन्द्रियस्य वीर्यस्यावरुद्ध्यै। पुरस्ता दुपसदा॰ सौम्येन प्र चरति। सोमो वै रेतोधाः। रेत एव तद्दधाति। अन्तरा त्वाष्ट्रेण। रेत एव हित न्त्वष्टा रूपाणि वि करोति। उपरिष्टा द्वैष्णवेन। यज्ञो वै विष्णुः। यज्ञ एवान्ततः प्रति तिष्ठति।। 2।। (सप्तमे दधाति पञ्च च। 1।)

❀ जामि वा एत त्कुर्वन्ति। यथ्सद्यो दीक्षयन्ति सद्य स्सोमङ्क्रीणन्ति। पुण्डरिस्रजां प्र यच्छ त्यजामित्वाय। अङ्गिरस स्सुवर्गँ लोकँ यन्तः। अफ्सु दीक्षातपसी प्रावेशयन्न्। तत्पुण्डरीक मभवत्। यत्पुण्डरिस्रजां प्रयच्छति। साक्षादेव दीक्षातपसी अव रुन्धे। दशभि र्वथ्सतरै स्सोम ङ्क्रीणाति। दशाक्षरा विराट्।। 3।। ❀ अन्नँ विराट्। विराजैवान्नाद्य मवरुन्धे। मुष्करा भवन्ति सेन्द्रत्वाय। दशपेयो भवति। अन्नाद्यस्यावरुद्ध्यै। शतं ब्राह्मणाः पिबन्ति। शताऽऽयुः पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। सप्तदशꣳ स्तोत्रं भवति। सप्तदशः प्रजापतिः ।। 4।। ❀ प्रजापते राप्त्यै। प्राकाशावध्वर्यवे ददाति। प्रकाश मेवैनङ्गमयति। स्रज मुद्गात्रे। व्येवास्मै वासयति। रुक्म॰ होत्रे। आदित्य मेवास्मा उन्नयति। अश्वं प्रस्तोतृ.प्रतिहर्तृभ्याम्। प्राजापत्यो वा अश्वः। प्रजापते राप्त्यै।। 5।। ❀ द्वादश पष्ठौही ब्रह्मणे। आयु रेवाव रुन्धे। वशां मैत्रावरुणाय। राष्ट्र मेव वश्यकः। ऋषभं ब्राह्मणाच्छ॰सिने। राष्ट्र मेवेन्द्रियाव्यकः। वाससी नेष्टापोतृभ्याम्। पवित्रे एवास्यैते। स्थूरि यवाचित मच्छावाकाय। अन्तत एव वरुण मव यजते।। 6।। ❀ अनड्वाह मग्नीधे। वह्नि र्वा अनड्वान्। वह्नि रग्नीत्। वह्निनैव वह्नि यज्ञस्याव रुन्धे। इन्द्रस्य सुषुवाणस्य त्रेधेन्द्रियँ वीर्यं पराऽपतत्। भृगु स्तृतीय मभवत्। श्रायन्तीय न्तृतीयम्। सरस्वती तृतीयम्। भार्गवो होता भवति। श्रायन्तीयं ब्रह्मसामं भवति। वारवन्तीय मग्निष्टोमसामम्। सारस्वती रपो गृह्णाति। इन्द्रियस्य वीर्यस्यावरुद्ध्यै। श्रायन्तीयं ब्रह्मसामं भवति। इन्द्रियमेवास्मिन्वीर्यꣳ श्रयति। वारवन्तीय मग्निष्टोमसामम्। इन्द्रिय मेवास्मिन्वीर्यँ वारयति।। 7।। (विराड्प्रजापति रश्वः प्रजापते राप्त्यै यजते ब्रह्मसामं भवति सप्त च। 2।)

ईश्वरो वा एष दिशोऽनून्मदितोः। यन्दिशोऽनु व्यास्थापयन्ति। दिशा मवेष्टयो भवन्ति। दिक्ष्वेव प्रति तिष्ठ त्यनुन्मादाय। पञ्च देवता यजति। पञ्च दिशः। दिक्ष्वेव प्रति तिष्ठति। हविषोहविष इष्ट्वा बार्हस्पत्य मभि घारयति। यजमानदेवत्यो वै बृहस्पतिः। यजमान मेव तेजसा समर्धयति।। 8।। आदित्यां मल्हा ङ्गर्भिणी मा लभते। मारुतीं पृश्निं पष्ठौहीम्। विशञ्चैवास्मै राष्ट्रञ्च समीची दधाति। आदित्यया पूर्वया प्रचरति। मारुत्योत्तरया। राष्ट्र एव विश मनु बध्नाति। उच्चै रादित्याया आ श्रावयति। उपाꣳशु मारुत्यै। तस्मा द्राष्ट्रँ विश मति वदति। गर्भिण्यादित्या भवति।। 9।। इन्द्रियँ वै गर्भः। राष्ट्र मेवेन्द्रियाव्यकः। अगर्भा मारुती। विड्वै मरुतः। विश मेव निरिन्द्रियामकः। देवासुरा स्सँयत्ता आसन्न्। ते देवा अश्विनोः पूषन्वाच स्सत्यꣳ सन्निधाय। अनृतेनासुरा नभ्यभवन्न्। तेऽश्विभ्यां पूष्णे पुरोडाश न्द्वादशकपाल न्निरवपन्न्। ततो वै ते वाच स्सत्य मवारुन्धत।। 10।। यदश्विभ्यां पूष्णे पुरोडाश न्द्वादशकपाल न्निर्वपति। अनृतेनैव भ्रातृव्यानभिभूय। वाच स्सत्य मव रुन्धे। सरस्वते सत्यवाचे चरुम्। पूर्व मेवोदितम्। उत्तरेणाभि गृणाति। सवित्रे सत्यप्रसवाय पुरोडाश न्द्वादशकपालं प्रसूत्यै। दूता न्प्र हिणोति। आविद एता भवन्ति। आविद मेवैन ङ्गमयन्ति। अथो दूतेभ्य एव न छिद्यते। तिसृधन्वꣳ शुष्कदृति र्दक्षिणा समृद्ध्यै।। 11।। (अर्धयति भवत्यरुन्धत गमयन्ति द्वे च। 3।)

आग्नेय मष्टाकपाल न्निर्वपति। तस्मा च्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति। सौम्य ञ्चरुम्। तस्मा द्वसन्तँ व्यवसाया दयन्ति। सावित्र न्द्वादशकपालम्। तस्मा त्पुरस्ता द्यवानाꣳ सवित्रा वि रुन्धते। बार्हस्पत्य ञ्चरुम्। सवित्रैव विरुध्य। ब्रह्मणा यवा ना दधते। त्वाष्ट्र मष्टाकपालम्।। 12।। रूपाण्येव तेन कुर्वते। वैश्वानर न्द्वादशकपालम्। तस्मा ज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति। सारस्वत ञ्चरु न्निर्वपति। तस्मा त्प्रावृषि सर्वा वाचो वदन्ति। पौष्णेन व्यवस्यन्ति। मैत्रेण कृषन्ते। वारुणेन विधृता आसते। क्षैत्रपत्येन पाचयन्ते। आदित्येना ऽऽदधते।। 13।। मासिमास्येतानि हवीꣳषि निरुप्याणीत्याहुः। तेनैवर्तू न्प्रयुङ्क्त इति। अथो खल्वाहुः। कस्सँवथ्सर ञ्जीविष्यतीति। षडेव पूर्वेद्यु र्निरुप्याणि। षडुत्तरेद्युः। तेनैवर्तू न्प्रयुङ्क्ते। दक्षिणो रथवाहनवाहः पूर्वेषा न्दक्षिणा। उत्तर उत्तरेषाम्। सँवथ्सरस्यैवान्तौ युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै।। 14।। (त्वाष्ट्र मष्टाकपाल न्दधते युनक्त्येकञ्च। 4।)

इन्द्रस्य सुषुवाणस्य दशधेन्द्रियँ वीर्यं पराऽपतत्। स यत्प्रथम न्निरष्ठीवत्। तत्कल मभवत्। यद्वितीयम्। तद्बदरम्। यत्तृतीयम्। तत्कर्कन्धु। यन्नस्तः। स सिꣳहः। यदक्ष्योः।। 15।। स शार्दूलः। यत्कर्णयोः। स वृकः। य ऊर्ध्वः। स सोमः। याऽवाची। सा सुरा। त्रया स्सक्तवो भवन्ति। इन्द्रिय.स्यावरुद्ध्यै। त्रयाणि लोमानि ।। 16।। त्विषि मेवाव रुन्धे। त्रयो ग्रहाः। वीर्य मेवाव रुन्धे। नाम्ना दशमी। नव वै पुरुषे प्राणाः। नाभि र्दशमी। प्राणा इन्द्रियँ वीर्यम्। प्राणा नेवेन्द्रियँ वीर्यँ यजमान आत्म न्धत्ते। सीसेन क्लीबा च्छष्पाणि क्रीणाति । न वा एत दयो न हिरण्यम्।। 17।। यथ्सीसम्। न स्त्री न पुमान्। यत्क्लीबः। न सोमो न सुरा। यथ्सौत्रामणी समृद्ध्यै। स्वाद्वीन्त्वा स्वादुनेत्याह। सोम मेवैना ङ्करोति। सोमो ऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पच्यते। तिस्र स्सꣳसृष्टा वसति।। 18।। तिस्रो हि रात्रीः क्रीत स्सोमो वसति। पुनातु ते परिस्रुत मिति यजुषा पुनाति व्यावृत्त्यै। पवित्रेण पुनाति। पवित्रेण हि सोमं पुनन्ति। वारेण शश्वता तनेत्याह। वारेण हि सोमं पुनन्ति। वायुः पूतः पवित्रेणेति नैतया पुनीयात्। व्यृद्धा ह्येषा। अतिपवितस्यैतया पुनीयात्। कुविदङ्ग त्यनिरुक्तया प्राजापत्यया गृह्णाति।। 19।। अनिरुक्तः प्रजापतिः। प्रजापते राप्त्यै। एकयर्चा गृह्णाति। एकधैव यजमाने वीर्य न्दधाति। आश्विन न्धूम्र मा लभते। अश्विनौ वै देवानां भिषजौ। ताभ्या मेवास्मै भेषज ङ्करोति। सारस्वतं मेषम्। वाग्वै सरस्वती। वाचैवैनं भिषज्यति। ऐन्द्र मृषभꣳ सेन्द्रत्वाय।। 20।। (अक्ष्यो र्लोमानि हिरण्यँ वसति गृह्णाति भिषज्य त्येक ञ्च। 5।)

यत्त्रिषु यूपेष्वालभेत। बहिर्धाऽस्मा दिन्द्रियँ वीर्य न्दध्यात्। भ्रातृव्य मस्मै जनयेत्। एकयूप आ लभते। एकधैवास्मि न्निन्द्रियँ वीर्य न्दधाति। नास्मै भ्रातृव्य ञ्जनयति। नैतेषां पशूनां पुरोडाशा भवन्ति। ग्रहपुरोडाशा ह्येते। युवꣳ सुराम मश्विनेति सर्वदेवत्ये याज्याऽनुवाक्ये भवतः। सर्वा एव देवताः प्रीणाति।। 21।। ब्राह्मणं परि क्रीणीया दुच्छेषणस्य पातारम्। ब्राह्मणो ह्याहुत्या उच्छेषणस्य पाता। यदि ब्राह्मणन्न विन्देत्। वल्मीकवपाया मव नयेत्। सैव ततः प्रायश्चित्तिः। यद्वै सौत्रामण्यै व्यृद्धम्। तदस्यै समृद्धम्। नानादेवत्याः पशवश्च पुरोडाशाश्च

भवन्ति समृद्ध्यै। ऐन्द्रꣳ पशूना मुत्तमो भवति। ऐन्द्रꣳ पुरोडाशानां प्रथमः।। 22।। ❀ इन्द्रिये एवास्मै समीची दधाति। पुरस्ता दनूयाजानां पुरोडाशैꣳ प्र चरति। पशवो वै पुरोडाशाः। पशू नेवाव रुन्धे। ऐन्द्र मेकादशकपाल न्निर्वपति। इन्द्रिय मेवाव रुन्धे। सावित्र न्द्वादशकपालं प्रसूत्यै। वारुण न्दशकपालम्। अन्तत एव वरुण मव यजते। वडबा दक्षिणा।। 23।। ❀ उत वा एषाऽश्वꣳ सूते। उताश्वतरम्। उत सोम उत सुरा। यथ्सौत्रामणी समृद्ध्यै। बार्हस्पत्यं पशुञ्चतुर्थ मतिपवितस्याऽऽलभते। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैव यज्ञस्य व्यृद्धमपि वपति। पुरोडाशवा नेष पशु र्भवति। न ह्येतस्य ग्रहङ्गृह्णन्ति। सोमप्रतीकाꣳ पितर स्तृण्णुतेति शताऽऽतृण्णायाꣳ समवनयति।। 24।। ❀ शताऽऽयुꣳ पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। दक्षिणेऽग्नौ जुहोति। पापवस्यसस्य व्यावृत्त्यै। हिरण्य मन्तरा धारयति। पूता मेवैनाञ्जुहोति। शतमानं भवति। शतायुꣳ पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। यत्रैव शताऽऽतृण्णा न्धारयति।। 25।। ❀ तन्नि दधाति प्रतिष्ठित्यै। पितॄन् वा एतस्येन्द्रियँ वीर्यङ्गच्छति। यꣳ सोमोऽतिपवते। पितृणाँ याज्याऽनुवाक्याभि रुप तिष्ठते। यदेवास्य पितृ निन्द्रियँ वीर्य ङ्गच्छति। तदेवाव रुन्धे। तिसृभि रुप तिष्ठते। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति। अथो त्रीणि वै यज्ञस्येन्द्रियाणि। अध्वर्युर् होता ब्रह्मा। त उपतिष्ठन्ते। यान्येव यज्ञस्येन्द्रियाणि। तैरेवास्मै भेषज ङ्करोति।। 26।। (प्रीणाति प्रथमो दक्षिणा समवनयति धारयतीन्द्रियाणि चत्वारि च। 6।)

### वै।का। राजसूय ब्राह्मणम् 1– 4(चत्वारोऽनुवाकाः 4)

❀ अग्निष्टोम मग्र आहरति। यज्ञमुखँ वा अग्निष्टोमः। यज्ञमुख मेवाऽऽरभ्य सव मा क्रमते। अथैषोऽभिषेचनीय श्चतुस्त्रिꣳशपवमानो भवति। त्रयस्त्रिꣳशद्वै देवताः। ता एवाऽऽप्नोति। प्रजापति श्चतुस्त्रिꣳशः। तमेवाऽऽप्नोति। सꣳशर एष स्तोमाना मयथापूर्वम्। यद्विषमा स्तोमाः।। 27।। ❀ एतावान् वै यज्ञः। यावा न्पवमानाः। अन्तश्श्लेषणन्त्वा अन्यत्। यथ्समाꣳ पवमानाः। तेनासꣳशरः। तेन यथापूर्वम्। आत्मनैवाग्निष्टोमेनर्ध्नोति। आत्मना पुण्यो भवति। प्रजा वा उक्थानि। पशव उक्थानि। यदुक्थ्यो भवत्यनु सन्तत्यै।। 28।। (स्तोमाꣳ पशव उक्थान्येकञ्च। 7।)

❀ 卐 उप त्वा जामयो गिर[1]❀ इति प्रतिपद्भवति। वाग्वै वायुः। वाच एवैषोऽभिषेकः। सर्वासा मेव प्रजाना॰ सूयते। सर्वा एनं प्रजा राजेति वदन्ति। 卐 एतमुत्य न्दश क्षिप[2]❀ - इत्याह। आदित्या वै प्रजाः। प्रजाना मेवैतेन सूयते। यन्ति वा एते यज्ञमुखात्। ये सम्भार्या अक्रन्न्।। 29।। ❀ यदाह 卐 पवस्व वाचो अग्रिय[3]❀-इति। तेनैव यज्ञमुखान्न यन्ति। अनुष्टु क्प्रथमा भवति। अनुष्टु गुत्तमा। वाग्वा अनुष्टुक्। वाचैव प्रयन्ति। वाचोद्यन्ति। उद्वती र्भवन्ति। उद्वद्वा अनुष्टुभो रूपम्। आनुष्टुभो राजन्यः।। 30।। ❀ तस्मा दुद्वती र्भवन्ति। सौर्यनुष्टु गुत्तमा भवति। सुवर्गस्य लोकस्य सन्तत्यै। यो वै सवादेति। नैन॰ सव उप नमति। यस्सामभ्य एति। पापीया न्थ्सुषुवाणो भवति। एतानि खलु वै सामानि। यत्पृष्ठानि। यत्पृष्ठानि भवन्ति।। 31।। ❀ तैरेव सवा न्नैति। यानि देवराजाना॰ सामानि। तैरमुष्मि न्लोक ऋध्नोति। यानि मनुष्यराजाना॰ सामानि। तैरस्मि न्लोक ऋध्नोति। उभयो रेव लोकयोर् ऋध्नोति। देवलोके च मनुष्यलोके च। एकवि॰शो ऽभिषेचनीयस्योत्तमो भवति। एकवि॰शः केशवपनीयस्य प्रथमः। सप्तदशो दशपेयः।। 32।। ❀ विड्वा एकवि॰शः। राष्ट्र॰ सप्तदशः। विश एवैतन्मध्यतो ऽभिषिच्यते। तस्माद्वा एष विशां प्रियः। विशो हि मध्यतोऽभिषिच्यते। यद्वा एन मदो दिशोऽनु व्यास्थापयन्ति। तथ्सुवर्गँ लोक मभ्यारोहति। यदिमँ लोकन्न प्रत्यवरोहेत्। अतिजनँ वेयात्। उद्वा माद्येत्। यदेष प्रतीचीन स्स्तोमो भवति। इम मेव तेन लोकं प्रत्यवरोहति। अथो अस्मिन्नेव लोके प्रति तिष्ठ त्यनुन्मादाय।। 33।। (अक्र न्राजन्यो भवन्ति दशपेयो माद्ये त्त्रीणि च। 8।)

❀ इयँ वै रजता। असौ हरिणी। यद्रुक्मौ भवतः। आभ्या मेवैन मुभयतः परि गृह्णाति। वरुणस्य वा अभिषिच्यमानस्याऽऽपः। इन्द्रियँ वीर्य न्निरघ्नन्न्। तथ्सुवर्ण॰ हिरण्य मभवत्। यद्रुक्म मन्तर्दधाति। इन्द्रियस्य वीर्यस्यानिर्घाताय। शतमानो भवति शतक्षरः। शताऽऽयुः पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। आयुर्वै हिरण्यम्। आयुष्या एवैन मभ्यति क्षरन्ति। तेजो वै हिरण्यम्। तेजस्या एवैन मभ्यति क्षरन्ति। वर्चो वै हिरण्यम्। वर्चस्या एवैन मभ्यति क्षरन्ति।। 34।। (शतक्षरोऽष्टौ च। 9।)

1

2

3

अप्रतिष्ठितो वा एष इत्याहुः। यो राजसूयेन यजत इति। यदा वा एष एतेन द्विरात्रेण यजते। अथ प्रतिष्ठा। अथ सँवथ्सर माप्नोति। यावन्ति सँवथ्सरस्याहोरात्राणि। तावती रेतस्य स्तोत्रीयाः। अहोरात्रेष्वेव प्रति तिष्ठति। अग्निष्टोमꣳ पूर्व मह भवति। अतिरात्र उत्तरम्।। 35।। नानैवाहोरात्रयोꣳ प्रति तिष्ठति। पौर्णमास्यां पूर्व मह भवति। व्यष्टकाया मुत्तरम्। नानैवार्धमासयोꣳ प्रति तिष्ठति। अमावास्यायां पूर्वमह भवति। उद्दृष्ट उत्तरम्। नानैव मासयोꣳ प्रति तिष्ठति। अथो खलु। ये एव समानपक्षे पुण्याहे स्याताम्। तयोꣳ कार्यं प्रतिष्ठित्यै।। 36।। अपशव्यो द्विरात्र इत्याहुः। द्वे ह्येते छन्दसी। गायत्रञ्च त्रैष्टुभञ्च। जगती मन्त यन्ति। न तेन जगती कृतेत्याहुः। यदेना न्तृतीयसवने कुर्वन्तीति। यदा वा एषाऽहीनस्याह भजते। साह्नस्य वा सवनम्। अथैव जगती कृता। अथ पशव्यः। व्युष्टिर्वा एष द्विरात्रः। य एवँ विद्वा न्द्विरात्रेण यजते। व्येवास्मा उच्छति। अथो तम एवाप हते। अग्निष्टोम मन्तत आ हरति। अग्नि स्सर्वा देवताः। देवतास्वेव प्रति तिष्ठति।। 37।। (उत्तरं प्रतिष्ठित्यै पशव्य स्सप्त च। 10।)

(वरुणस्य जामीश्वर आग्नेय मिन्द्रस्य यत्त्रिष्वग्निष्टोम मुप त्वेयँ वै रजताऽप्रतिष्ठितो दश। 10। वरुणस्य यदश्विभ्याँ यत्त्रिषु तस्मा दुद्वती स्सप्तत्रिꣳशत्। 37। वरुणस्य प्रति तिष्ठति।)

# द्वितीयाष्टकम्

## द्वितीयाष्टके प्रथमꣳ प्रपाठकः

### आ।का।अग्निहोत्र ब्राह्मणम् 3, मन्त्राश्च 1(एकादशानुवाकाः(

अङ्गिरसो वै सत्रमासत। तेषां पृश्ञि र्घर्मधु गासीत्। सर्जीषेणाजीवत्। तेऽब्रुवन्न्। कस्मै नु सत्र मास्महे। येऽस्या ओषधीर्न जनयाम इति। ते दिवो वृष्टि मसृजन्त। यावन्त स्स्तोका अवापद्यन्त। तावती रोषधयोऽजायन्त। ता जाताꣳ पितरो विषेणाऽलिम्पन्न् ।। 1।। तासाञ्जग्ध्वा रुप्यन्त्यैत्। तेऽब्रुवन्न्। क इद मित्थ मकरिति। वयं भागधेय मिच्छमाना इति पितरोऽब्रुवन्न्। किँ वो भागधेय मिति। अग्निहोत्र एव नोऽप्यस्त्वित्यब्रुवन्न्। तेभ्य एत द्भागधेयं प्रायच्छन्न्। यद्धुत्वा निमार्ष्टि। ततो वै त ओषधी रस्वदयन्न्। य एवँ वेद।। 2।। स्वदन्तेऽस्मा ओषधयः। ते वथ्स मुपावासृजन्न्। इदन्नो हव्यं प्रदापयेति। सोऽब्रवी द्वरँ वृणै। दश मा रात्री र्जात

न्न दोहन्न्। आसङ्गवं मात्रा सह चराणीति। तस्माद्वथ्स ञ्जात न्दश रात्री र्न दुहन्ति। आसङ्गवं मात्रा सह चरति। वारेवृतङ्ग् ह्यस्य। तस्मा द्वथ्सꣳ सꣳसृष्टधयꣳ रुद्रो घातुकः। अति हि सन्धा न्धयति।। 3।। (अलिम्पन्वेद् घातुक् एकञ्च। 1।)

☸❀ प्रजापति रग्नि मसृजत। तं प्रजा अन्वसृज्यन्त। तमभाग उपाऽऽस्त। सोऽस्य प्रजाभि रपाक्रामत्। तमवरुरुथ्समानोऽन्वैत्। तमवरुध न्नाशक्नोत्। स तपोऽतप्यत। सोऽग्नि रुपारम.तातापि वै स्य प्रजापति रिति। स रराटा दुदमृष्ट।ꣲ। 4।। ❀ तद्घृत मभवत्। तस्मा द्यस्य दक्षिणतꣳ केशा उन्मृष्टाः। ताञ्ज्येष्ठलक्ष्मी प्राजापत्येत्याहुः। यद्रराटा दुदमृष्ट। तस्मा द्रराटे केशा न सन्ति। तदग्नौ प्रागृह्णात्। तद्व्यचिकिथ्सत्। जुहवानी ‘3’ मा हौषा ‘3’ मिति। तद्विचिकिथ्सायै जन्म। य एवँ विद्वान् विचिकिथ्सति।। 5।। ❀ वसीय एव चेतयते। तँ वागभ्यवद् जुहुधीति। सोऽब्रवीत्। कस्त्व मसीति। स्वैव ते वागि त्यब्रवीत्। सोऽजुहो ꣳत्स्वाहे-ति।। तथ्स्वाहाकारस्य जन्म। य एवङ्ग् स्वाहाकारस्य जन्म वेद। करोति स्वाहाकारेण वीर्यम्। यस्यैवँ विदुष स्स्वाहाकारेण जुह्वति।। 6।। ❀ भोगायैवास्य हुतं भवति। तस्या आहुत्यै पुरुष मसृजत। द्वितीय मजुहोत्। सोऽश्व मसृजत। तृतीय मजुहोत्। स गा मसृजत। चतुर्थ मजुहोत्। सोऽवि मसृजत। पञ्चम मजुहोत्। सोऽजा मसृजत।। 7।। ❀ सोऽग्नि रबिभेत्। आहुतीभिर्वै माऽऽप्नोतीति। स प्रजापतिं पुनꣳ प्राविशत्। तं प्रजापति रब्रवीत्। जायस्वेति। सोऽब्रवीत्। किं भागधेय मभि जनिष्य इति। तुभ्य मेवेदꣳ हूयाता इत्यब्रवीत्। स एत द्भागधेय मभ्यजायत। यदग्निहोत्रम्।। 8।। ❀ तस्मा दग्निहोत्र मुच्यते। तद्धूयमान मादित्योऽब्रवीत्। मा हौषीः। उभयोर्वै नावेत दिति। सोऽग्नि रब्रवीत्। कथ न्नौ होष्यन्तीति। साय मेव तुभ्यञ्जुहवन्न्। प्रात र्मह्य मित्यब्रवीत्। तस्मा दग्नये सायꣳ हूयते। सूर्याय प्रातः।। 9।। ❀ आग्नेयी वै रात्रिः। ऐन्द्र महः। यदनुदिते सूर्ये प्रात र्जुहुयात्। उभय मेवाऽऽग्नेयङ्ग् स्यात्। उदिते सूर्ये प्रात र्जुहोति। तथाऽग्नये सायꣳ हूयते। सूर्याय प्रातः। रात्रिँ वा अनु प्रजाꣳ प्र जायन्ते। अह्ना प्रति तिष्ठन्ति। यथ्सायञ्जुहोति।। 10।। ❀ प्रैव तेन जायते। उदिते सूर्ये प्रात र्जुहोति। प्रत्येव तेन तिष्ठति। प्रजापति रकामयत प्रजायेयेति। स एत दग्निहोत्रं मिथुन मपश्यत्। तदुदिते सूर्येऽजुहोत्। यजुषाऽन्यत्। तूष्णी मन्यत्। ततो वै स प्राजायत। यस्यैवँ विदुष उदिते सूर्येऽग्निहोत्र ञ्जुह्वति।। 11।। ❀ प्रैव जायते। अथो यथा दिवा

प्रजान न्नेति। तादृगेव तत्। अथो खल्वाहुः। यस्य वै द्वौ पुण्यौ गृहे वसतः। यस्तयो रन्यꣳ राधय त्यन्यन्न। उभौ वाव स तावृच्छतीति। अग्निँ वावाऽऽदित्य स्सायं प्र विशति। तस्मा दग्नि र्दूरा न्नक्त न्ददृशे। उभे हि तेजसी सम्पद्येते।। 12।।❀ उद्यन्तँ वावाऽऽदित्य मग्नि रनु समारोहति। तस्मा द्धूम एवाग्ने र्दिवा ददृशे। यदग्नये सायञ्जुहुयात्। आ सूर्याय वृश्च्येत। यथ्सूर्याय प्रात र्जुहुयात्। आऽग्नये वृश्च्येत। देवताभ्य स्समद न्दध्यात्। 卐 अग्नि र्ज्योति र्ज्योति स्सूर्य स्स्वाहे-त्येव सायꣳ होतव्यम्। 卐 सूर्यो ज्योति र्ज्योति रग्नि स्स्वाहे-ति प्रातः। तथोभाभ्याꣳ सायꣳ हूयते।। 13।।❀ उभाभ्यां प्रातः। न देवताभ्य स्समद न्दधाति। अग्नि र्ज्योति रित्याह। अग्निर्वै रेतोधाः। 卐 प्रजा ज्योति - रित्याह। प्रजा एवास्मै प्रजनयति। सूर्यो ज्योति रित्याह। प्रजास्वेव प्रजातासु रेतो दधाति। ज्योति रग्नि स्स्वाहेत्याह। प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति।। 14।।❀ तूष्णी मुत्तरा माहुतिञ्जुहोति। मिथुनत्वाय प्रजात्यै। यदुदिते सूर्ये प्रात र्जुहुयात्। यथाऽतिथये प्रद्रुताय शून्यायावसथायाऽऽहार्यꣳ हरन्ति। तादृगेव तत्। क्वाह तत स्तद्भवतीत्याहुः। यथ्स न वेद। यस्मै तद्धरन्तीति। तस्मा द्यदौषस ञ्जुहोति। तदेव सम्प्रति। अथो यथा प्रार्थ मौषसं परिवेवेष्टि। तादृगेव तत्।। 15।। (अमृष्ट विचिकित्सति जुह्वत्यजा मसृजताग्निहोत्रꣳ सूर्याय प्रात र्जुहोति जुह्वति सम्पद्येते हूयते स्थापयति सम्प्रति द्वे च। 2।)

❀ रुद्रो वा एषः। यदग्निः। पत्नी स्थाली। यन्मध्येऽग्ने रधिश्रयेत्। रुद्राय पत्नी मपि दध्यात्। प्रमायुका स्यात्। उदीचोऽङ्गारा न्निरूह्याधि श्रयति। पत्नियै गोपीथाय। व्यन्ता न्करोति। तथा पत्न्यप्रमायुका भवति।। 16।।❀ घर्मो वा एषोऽशान्तः। अहरहꣳ प्रवृज्यते। यदग्निहोत्रम्। प्रतिषिञ्चे त्पशुकामस्य। शान्त मिव हि पशव्यम्। न प्रतिषिञ्चे द्ब्रह्मवर्चसकामस्य। समिद्ध मिव हि ब्रह्मवर्चसम्। अथो खलु। प्रतिषिच्यमेव। यत्प्रतिषिञ्चति।। 17।।❀ तत्पशव्यम्। यज्जुहोति। तद्ब्रह्मवर्चसि। उभय मेवाकः। प्रच्युतँ वा एत दस्मा ल्लोकात्। अगत न्देवलोकम्। यच्छृतꣳ हवि रनभिघारितम्। अभि द्योतयति। अभ्येवैन द्धारयति। अथो देवत्रैवैन द्गमयति।। 18।।❀ पर्यग्नि करोति। रक्षसा मपहत्यै। त्रिꣳपर्यग्नि करोति। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय। यत्प्राचीन मुद्वासयेत्। यजमानꣳ शुचाऽर्पयेत्। यद्दक्षिणा। पितृदेवत्यꣳ स्यात्। यत्प्रत्यक्।। 19।।❀ पत्नीꣳ शुचाऽर्पयेत्। उदीचीन मुद्वासयति। एषा वै देवमनुष्याणाꣳ शान्ता दिक्। तामेवैन

दनूद्वासयति शान्त्यै। वर्त्म करोति। यज्ञस्य सन्तत्यै। निष्टपति। उपैव तथ्स्तृणाति। चतु रुन्नयति। चतुष्पादः पशवः।। 20।। ❀ पशू नेवाव रुन्धे। सर्वा न्पूर्णा नुन्नयति। सर्वे हि पुण्या राद्धाः। अनूच उन्नयति। प्रजाया अनूचीनत्वाय। अनूच्येवास्य प्रजाऽर्धुका भवति। सं मृशति व्यावृत्त्यै। नाहोष्य न्नुप सादयेत्। यदहोष्य न्नुपसादयेत्। यथाऽन्यस्मा उपनिधाय।। 21।। ❀ अन्यस्मै प्रयच्छति। तादृगेव तत्। आऽस्मै वृश्च्येत। यदेव गार्हपत्येऽधिश्रयति। तेन गार्हपत्यं प्रीणाति। अग्नि रबिभेत्। आहुतयो माऽत्येष्यन्तीति। स एताꣳ समिध मपश्यत्। तामाऽधत्त। ततो वा अग्ना वाहुतयोऽध्रियन्त।। 22।। ❀ यदेनꣳ समयच्छत्। तथ्समिध स्समित्त्वम्। समिध मा दधाति। समेवैनँ यच्छति। आहुतीना न्धृत्यै। अथो अग्निहोत्र मेवेध्मव त्करोति। आहुतीनां प्रतिष्ठित्यै। ब्रह्मवादिनो वदन्ति। यदेकाꣳ समिध माधाय द्वे आहुती जुहोति। अथ कस्याꣳ समिधि द्वितीया माहुतिञ्जुहोतीति ।। 23।। ❀ यद्वे समिधा वादध्यात्। भ्रातृव्य मस्मै जनयेत्। एकाꣳ समिध माधाय। यजुषाऽन्या माहुति ञ्जुहोति। उभे एव समिद्वती आहुती जुहोति। नास्मै भ्रातृव्यञ्जनयति। आदीप्ताया ञ्जुहोति। समिद्ध मिव हि ब्रह्मवर्चसम्। अथो यथाऽतिथि ञ्ज्योतिष्कृत्वा परिवेवेष्टि। तादृगेव तत्। चतु रुन्नयति। द्विर्जुहोति। तस्माद्द्विपा च्चतुष्पाद मत्ति। अथो द्विपद्येव चतुष्पदः प्रतिष्ठापयति।। 24।। (भवति प्रतिषिञ्चति गमयति प्रत्य क्पशव उपनिधायाध्रियन्तेति तच्चत्वारि च। 3।)

❀ उत्तरावतीँ वै देवा आहुति मजुहवुः। अवाची मसुराः। ततो देवा अभवन्न्। पराऽसुराः। यङ्कामयेत वसीयान्थ्स्यादिति। कनीय स्तस्य पूर्वꣳ हुत्वा। उत्तरं भूयो जुहुयात्। एषा वा उत्तरावत्याहुतिः। तान्देवा अजुहवुः। ततस्तेऽभवन्न्।। 25।। ❀ यस्यैव ञ्जुह्वति। भवत्येव। यङ्कामयेत पापीया न्थ्स्यादिति। भूय स्तस्य पूर्वꣳ हुत्वा। उत्तरङ्कनीयो जुहुयात्। एषा वा अवाच्याहुतिः। तामसुरा अजुहवुः। ततस्ते पराऽभवन्न्। यस्यैवञ्जुह्वति। परैव भवति।। 26।। ❀ हुत्वोपसादय त्यजामित्वाय। अथो व्यावृत्त्यै। गार्हपत्यं प्रतीक्षते। अननुध्यायिन मेवैनङ्करोति। अग्निहोत्रस्य वै स्थाणु रस्ति। तँ य ऋच्छेत्। यज्ञस्थाणु मृच्छेत्। एष वा अग्निहोत्रस्य स्थाणुः। यत्पूर्वाऽऽहुतिः। ताँ यदुत्तरयाऽभिजुहुयात्।। 27।। ❀ यज्ञस्थाणु मृच्छेत्। अतिहाय पूर्वा माहुति ञ्जुहोति। यज्ञस्थाणु मेव परि वृणक्ति। अथो भ्रातृव्य मेवाऽऽस्वाऽति क्रामति। अवाचीनꣳ

साय मुप मार्ष्टि। रेत एव तद्दधाति। ऊर्ध्वं प्रातः। प्रजनय त्येव तत्। ब्रह्मवादिनो वदन्ति। चतु रुन्नयति।। 28।।❀ द्विर्जुहोति। अथ क्व द्वे आहुती भवत इति। अग्नौ वैश्वानर इति ब्रूयात्। एष वा अग्नि वैश्वानरः। यद्ब्राह्मणः। हुत्वा द्विः प्राश्ञ्जाति। अग्नावेव वैश्वानरे द्वे आहुती जुहोति। द्विर्जुहोति। द्विर्निमार्ष्टि। द्विः प्राश्ञ्जाति ।। 29।।❀ षट्थ्सं पद्यन्ते। षड्वा ऋतवः। ऋतू नेव प्रीणाति। ब्रह्मवादिनो वदन्ति। किन्देवत्य मग्निहोत्र मिति। वैश्वदेव मिति ब्रूयात्। यद्यजुषा जुहोति। तदैन्द्राग्नम्। यत्तूष्णीम्। तत्प्राजापत्यम्।। 30।।❀ यन्निमार्ष्टि। तदोषधीनाम्। यद्द्वितीयम्। तत्पितृणाम्। यत्प्राश्ञ्जाति। तद्गर्भाणाम्। तस्मा द्गर्भा अनश्ञ्जन्तो वर्धन्ते। यदाचामति। तन्मनुष्याणाम्। उदङ्पर्यावृत्याऽऽ चामति।। 31।।❀ आत्मनो गोपीथाय। निर्णेनेक्ति शुद्ध्यै। निष्टपति स्वगाकृत्यै। उद्दिशति। सप्तर्षी नेव प्रीणाति। दक्षिणा पर्यावर्तते। स्वमेव वीर्य मनु पर्यावर्तते। तस्मा द्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरः। अथो आदित्यस्यैवाऽऽवृत मनु पर्यावर्तते। हुत्वोप समिन्धे।। 32।।❀ ब्रह्मवर्चसस्य समिद्ध्यै। न बर्हि रनु प्र हरेत्। असङ्स्थितो वा एष यज्ञः। यदग्निहोत्रम्। यदनुप्रहरेत्। यज्ञँ विच्छिन्द्यात्। तस्मा न्नानुप्रहृत्यम्। यज्ञस्य सन्तत्यै। अपो नि नयति। अवभृथस्यैव रूप मकः।। 33।। (अभव न्भवति जुहुया न्नयति मार्ष्टि द्विः प्राश्ञ्जाति प्राजापत्य माचामतीन्धेऽकः। 4।)

❀ ब्रह्मवादिनो वदन्ति। अग्निहोत्रप्रायणा यज्ञाः। किंप्रायण मग्निहोत्र मिति। वथ्सो वा अग्निहोत्रस्य प्रायणम्। अग्निहोत्रँ यज्ञानाम्। तस्य पृथिवी सदः। अन्तरिक्ष माग्नीध्रम्। द्यौर् हविर्धानम्। दिव्या आपः प्रोक्षणयः। ओषधयो बर्हिः।। 34।।❀ वनस्पतय इध्मः। दिशः परिधयः। आदित्यो यूपः। यजमानः पशुः। समुद्रोऽवभृथः। सँवथ्सर स्स्वगाकारः। तस्मा दाहिताग्ने स्सर्व मेव बर्हिष्य न्दत्तं भवति। यथ्सायञ्जुहोति। रात्रि मेव तेन दक्षिण्याङ्कुरुते। यत्प्रातः।। 35।।❀ अह रेव तेन दक्षिण्यङ्कुरुते। यत्ततो ददाति। सा दक्षिणा। यावन्तो वै देवा अहुत मादन्न्। ते पराऽभवन्न्। त एत दग्निहोत्रँ सर्वस्यैव समवदायाजुहवुः। तस्मादाहुः। अग्निहोत्रँ वै देवा गृहाणा न्निष्कृति मपश्य न्निति। यथ्सायञ्जुहोति। रात्रिया एव तद्धुताद्याय।। 36।।❀ यजमानस्यापराभावाय। यत्प्रातः। अह्न एव तद्धुताद्याय। यजमान.स्यापराभावाय। यत्ततोऽश्ञ्जाति। हुत मेव तत्। द्वयोः पयसा जुहुया त्पशुकामस्य। एतद्वा अग्निहोत्रं मिथुनम्। य

एवँ वेद। प्र प्रजया पशुभि र्मिथुनै र्जायते।। 37।।❀ इमा मेव पूर्वया दुहे। अमू मुत्तरया। अधिश्रित्योत्तर मा नयति। योना वेव तद्रेत स्सिञ्चति प्रजनने। आज्येन जुहुया त्तेजस्कामस्य। तेजो वा आज्यम्। तेजस्व्येव भवति। पयसा पशुकामस्य। एतद्वै पशूना९ रूपम्। रूपेणैवास्मै पशू नव रुन्धे।। 38।।❀ पशुमा नेव भवति। दध्नेन्द्रियकामस्य। इन्द्रियँ वै दधि। इन्द्रियाव्येव भवति। यवाग्वा ग्रामकामस्यौषधा वै मनुष्याः। भागधेयेनैवास्मै सजाता नव रुन्धे। ग्राम्येव भवति। अयज्ञो वा एषः। योऽसामा।Ω। 39।।❀ चतु रुन्नयति। चतुरक्षर९ रथन्तरम्। रथन्तरस्यैष वर्णः। उपरीव हरति। अन्तरिक्षँ वामदेव्यम्। वामदेव्य स्यैष वर्णः। द्विर्जुहोति। द्व्यक्षरं बृहत्। बृहत एष वर्णः। अग्निहोत्र मेव तथ्सामन्व त्करोति।। 40।।❀ यो वा अग्निहोत्र स्योपसदो वेद। उपैन मुपसदो नमन्ति। विन्दत उपसत्तारम्। उन्नीयोप सादयति। पृथिवी मेव प्रीणाति। होष्य न्नुप सादयति। अन्तरिक्ष मेव प्रीणाति। हुत्वोप सादयति। दिव मेव प्रीणाति। एता वा अग्निहोत्र स्योपसदः।। 41।।❀ य एवँ वेद। उपैन मुपसदो नमन्ति। विन्दत उपसत्तारम्। यो वा अग्निहोत्रस्याऽऽश्रावितं प्रत्याश्रावित९ होतारं ब्रह्माणँ वषट्कारँ वेद। तस्य त्वेव हुतम्। प्राणो वा अग्निहोत्रस्याऽऽश्रावितम्। अपानः प्रत्याश्रावितम्। मनो होता। चक्षु र्ब्रह्मा। निमेषो वषट्कारः।। 42।।❀ य एवँ वेद। तस्य त्वेव हुतम्। सायँयावानश्च वै देवाः प्रातर्यावाण श्चाग्निहोत्रिणो गृह मा गच्छन्ति। तान् यन्न तर्पयेत्। प्रजयाऽस्य पशुभि र्वि तिष्ठेरन्न्। यत्तर्पयेत्। तृप्ता एनं प्रजया पशुभि स्तर्पयेयुः। 卐 सजू र्देवै स्सायँ यावभि[1]❁ -रिति साय९ सं मृशति। 卐 सजू र्देवैः प्रातर्यावभि[2]❁- रिति प्रातः। ये चैव देवा स्सायँयावानो ये च प्रातर्यावाणः।। 43।।❀ तानेवोभया९ स्तर्पयति। त एन न्तृप्ताः प्रजया पशुभि स्तर्पयन्ति। अरुणो ह स्माऽऽहौपवेशिः। अग्निहोत्र एवाह९ सायंप्रात र्वज्रँ भ्रातृव्येभ्यः प्र हरामि। तस्मा न्मत्पापीया९सो भ्रातृव्या इति। चतु रुन्नयति। द्वि र्जुहोति। समिथ्सप्तमी। सप्तपदा शक्करी। शाक्करो वज्रः। अग्निहोत्र एव तथ्सायँप्रात र्वज्रँ यजमानो भ्रातृव्याय प्र हरति। भव त्यात्मना।

1

2

परा॒ऽस्य भ्रातृ॑व्यो भवति।। 44।। (बर्हिः प्रातर् हुताद्याय जायते रुन्धेऽसामा करो त्येता वा अग्निहोत्रस्योपसदो वषट्कारश्च प्रातर्यावाणो वज्र स्त्रीणि च। 5।)

प्रजाप॑ति रकामयताऽऽत्मन्वन्मे जायेतेति। सोऽजुहोत्। तस्याऽऽत्मन्व दजायत। अग्नि र्वायु रादित्यः। तेऽब्रुवन्न्। प्रजाप॑ति रहौषी दात्मन्वन्मे जायेतेति। तस्य वय मजनिष्महि। जायतान्न आत्मन्व दिति तेऽजुहवुः। प्राणाना मग्निः। तनुवै वायुः।। 45।। चक्षुष आदित्यः। तेषाꣳ हुता दजायत गौरेव। तस्यै पयसि व्यायच्छन्त। मम हुता दजनि ममेति। ते प्रजापतिं प्रश्ञ्न मायन्न्। स आदित्योऽग्नि मब्रवीत्। यतरो नौ जयात्। तन्नौ सहासदिति। कस्यैकोऽहौषी दिति प्रजाप॑ति रब्रवी त्कस्यैक इति। प्राणाना मह मित्यग्निः।। 46।। तनुवा अह मिति वायुः। चक्षुषोऽह मित्यादित्यः। य एव प्राणाना महौषीत्। तस्य हुता दजनीति। अग्नेर् हुता दजनीति। तदग्निहोत्र स्याग्निहोत्रत्वम्। गौर्वा अग्निहोत्रम्। य एवँ वेद गौ रग्निहोत्र मिति। प्राणापानाभ्या मेवाग्निꣳ समर्धयति। अव्यर्धुकः प्राणापानाभ्यां भवति।। 47।। य एवँ वेद। तौ वायु रब्रवीत्। अनु मा भजत मिति। यदेव गार्हपत्येऽधिश्रित्याऽऽहवनीय मभ्युद्द्रवान्। तेन त्वां प्रीणा नित्यब्रूताम्। तस्माद्य द्गार्हपत्येऽधिश्रित्याऽऽहवनीय मभ्युद्द्रवति। वायु मेव तेन प्रीणाति। प्रजाप॑ति र्देवता स्सृजमानः। अग्नि मेव देवतानां प्रथम मसृजत। सोऽन्य दालम्भ्य मवित्वा।। 48।। प्रजाप॑ति मभि पर्यावर्तत। स मृत्यो रबिभेत्। सोऽमु मादित्य मात्मनो निरमिमीत। तꣳ हुत्वा पराङ्पर्यावर्तत। ततो वै स मृत्यु मपाजयत्। अपमृत्यु ञ्जयति। य एवँ वेद। तस्मा द्यस्यैवँविदुषः। उतैकाह मुत द्व्यहन्न जुह्वति। हुत मेवास्य भवति। असौ ह्यादित्योऽग्निहोत्रम्।। 49।। (तनुवै वायु रग्नि र्भवत्यवित्वा भवत्येकञ्च। 6।)

रौद्र ङ्गवि। वायव्य मुपसृष्टम्। आश्विन न्दुह्यमानम्। सौम्य न्दुग्धम्। वारुण मधिश्रितम्। वैश्वदेवा भिन्दवः। पौष्ण मुदन्तम्। सारस्वतँ विष्यन्दमानम्। मैत्रꣳ शरः। धातु रुद्वासितम्। बृहस्पते रुन्नीतम्। सवितुः प्रक्रान्तम्। द्यावापृथिव्यꣳ ह्रियमाणम्। ऐन्द्राग्न मुपसन्नम्। अग्नेः पूर्वाऽऽहुतिः। प्रजापते रुत्तरा। ऐन्द्रꣳ हुतम्।। 50।। (उद्वासितꣳ सप्त च। 7।)

दक्षिणत उप सृजति। पितृलोक मेव तेन जयति। प्राची मावर्तयति। देवलोक मेव तेन जयति। उदीची मावृत्य दोग्धि। मनुष्यलोक मेव तेन जयति। पूर्वौ दुह्या ज्ज्येष्ठस्य ज्यैष्ठिनेयस्य।

यो वा गतश्री स्स्यात्। अपरौ दुह्या त्कनिष्ठस्य कानिष्ठिनेयस्य। यो वा बुभूषेत्।। 51।। ❀ न सं मृशति। पापवस्यसस्य व्यावृत्त्यै। वायव्यँ वा एत दुपसृष्टम्। आश्विन न्दुह्यमानम्। मैत्र न्दुग्धम्। अर्यम्ण उद्वास्यमानम्। त्वाष्ट्र मुन्नीयमानम्। बृहस्पते रुन्नीतम्। सवितुः प्रक्रान्तम्। द्यावापृथिव्यँ ह्रियमाणम्।। 52।। ❀ ऐन्द्राग्न मुपसादितम्। सर्वाभ्यो वा एष देवताभ्यो जुहोति। योऽग्निहोत्र ञ्जुहोति। यथा खलु वै धेनु न्तीर्थे तर्पयति। एव मग्निहोत्री यजमान न्तर्पयति। तृप्यति प्रजया पशुभिः। प्र सुवर्गँ लोक ञ्जानाति। पश्यति पुत्रम्। पश्यति पौत्रम्। प्र प्रजया पशुभि र्मिथुनै र्जायते। यस्यैवँविदुषो ऽग्निहोत्रञ्जुह्वति। य उ चैन देवँ वेद।। 53।।

(बुभूषेद्ध्रियमाण ञ्जायते द्वे च। 8।)

❀ त्रयो वै प्रैय्यमेधा आसन्न्। तेषा न्त्रिरेकोऽग्निहोत्र मजुहोत्। द्विरेकः। सकृदेकः। तेषाँ यस्त्रि रजुहोत्। स ऋचाऽजुहोत्। यो द्विः। स यजुषा। यस्सकृत्। स तूष्णीम्।। 54।। ❀ यश्च यजुषाऽजुहो द्यश्च तूष्णीम्। तावुभा वार्ध्नुताम्। तस्मा द्यजुषाऽऽहुतिः पूर्वा होतव्या। तूष्णी मुत्तरा। उभे एवर्द्धी अव रुन्धे। 卐 अग्नि ज्योति ज्योति रग्नि स्स्वाहे-ति सायञ्जुहोति। रेत एव तद्दधाति। 卐 सूर्यो ज्योति ज्योंति स्सूर्य स्स्वाहे-ति प्रातः। रेत एव हितं प्र जनयति। रेतो वा एतस्य हित न्न प्र जायते।। 55।। ❀ यस्याग्निहोत्र महुतँ सूर्योऽभ्युदेति। यद्यन्ते स्यात्। उन्नीय प्राङुदाद्रवेत्। स उपसाद्याऽऽतमितो रासीत। स यदा ताम्येत्। अथ- 卐भूस्स्वाहे-ति जुहुयात्। प्रजापति र्वै भूतः। तमेवोपासरत्। स एवैन न्तत उन्नयति। नाऽऽर्ति मार्च्छति यजमानः।। 56।।

(तूष्णीञ्जायते यजमानः। 9।)

❀ यदग्नि मुद्धरति। वसव स्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। वसुष्वेवा.स्याग्निहोत्रँ हुतं भवति। निहितो धूपायञ्छेते। रुद्रा स्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। रुद्रेष्वेवा.स्याग्निहोत्रँ हुतं भवति। प्रथम मिध्म मर्चि रा लभते। आदित्या स्तर्ह्यग्निः।। 57।। ❀ तस्मिन् यस्य तथाविधे जुह्वति। आदित्येष्वेवा.स्याग्निहोत्रँ हुतं भवति। सर्व एव सर्वश इध्म आदीप्तो भवति। विश्वे देवा स्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। विश्वेष्वेवास्य देवेष्वग्निहोत्रँ हुतं भवति। नितरा मर्चि रुपावैति लोहिनीकेव भवति। इन्द्र स्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। इन्द्र एवा.स्याग्निहोत्रँ हुतं भवति।। 58।। ❀ अङ्गारा भवन्ति।

तेभ्योऽङ्गारेभ्योऽर्चि रुदेति। प्रजापति स्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। प्रजापता वेवा.स्याग्निहोत्र॰ हुतं भवति। शरोऽङ्गारा अध्यूहन्ते। ब्रह्म तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। ब्रह्मन्नेवा.स्याग्निहोत्र॰ हुतं भवति। वसुषु रुद्रेष्वादित्येषु विश्वेषु देवेषु। इन्द्रे प्रजापतौ ब्रह्मन्न्। अपरिवर्ग मेवा.स्यैतासु देवतासु हुतं भवति। यस्यैवँविदुषो ऽग्निहोत्र ञ्जुह्वति। य उ चैन देवँ वेद।। 59।। (आदित्या स्तर्ह्यग्नि रिन्द्र एवास्याग्निहोत्र॰ हुतं भवति देवेषु चत्वारि च। 10। यदग्नि न्निहितः प्रथम॰ सर्व एव नितरा मङ्गारा श्शरोऽङ्गारा ब्रह्म वसुष्वष्टौ।)

❀ ऋतन्त्वा सत्येन परिषिञ्चामी-ति सायं परिषिञ्चति। सत्य न्त्वर्तेन परिषिञ्चामी-ति प्रातः। अग्नि र्वा ऋतम्। असावादित्य स्सत्यम्। अग्नि मेव तदादित्येन सायं परिषिञ्चति। अग्निनाऽऽदित्यं प्रात स्सह। याव दहोरात्रे भवतः। ताव दस्य लोकस्य। नाऽऽर्ति र्न रिष्टिः। नान्तो न पर्यन्तोऽस्ति। यस्यैवँविदुषो ऽग्निहोत्रञ्जुह्वति। य उ चैनदेवँ वेद।। 60।। (अस्ति द्वे च। 11।)

(अङ्गिरसः प्रजापति रग्नि॰ रुद्र उत्तरावतीं ब्रह्मवादिनोऽग्निहोत्रप्रायणा यज्ञाः प्रजापति रकामयताऽऽत्मन्व द्रौद्र ङ्गवि दक्षिणत स्त्रयो वै यदग्नि मृत न्त्वा सत्येनैकादश। 11। अङ्गिरसः प्रैव तेन पशू नेव यन्निमार्ष्टि यो वा अग्निहोत्रस्योपसदो दक्षिणत ष्षष्टिः। 60। अङ्गिरसो य उ चैन देवँ वेद।)

## द्वितीयाष्टके द्वितीयः प्रपाठकः

### प्रा।का। - होतृ ब्राह्मणम् 31 11एकादशानुवाकाः ))

❀ प्रजापति रकामयत प्रजास्सृजेयेति। स एत न्दशहोतार मपश्यत्। तं मनसाऽनुद्रुत्य दर्भस्तम्बेऽजुहोत्। ततो वै स प्रजा असृजत। ता अस्माथ्सृष्टा अपाक्रामन्न्। ता ग्रहेणागृह्णात्। तद्ग्रहस्य ग्रहत्वम्। यः कामयेत प्र जायेयेति। स दशहोतारं मनसाऽनुद्रुत्य दर्भस्तम्बे जुहुयात्। प्रजापतिर्वै दशहोता।। 1।। ❀ प्रजापति रेव भूत्वा प्रजायते। मनसा जुहोति। मन इव हि प्रजापतिः। प्रजापते राप्त्यै। पूर्णया जुहोति। पूर्ण इव हि प्रजापतिः। प्रजापते राप्त्यै। न्यूनया जुहोति। न्यूनाद्धि प्रजापतिः प्रजा असृजत। प्रजाना॰ सृष्ट्यै।। 2।। ❀ दर्भस्तम्बे जुहोति। एतस्माद्वै योनेः प्रजापतिः प्रजा असृजत। यस्मादेव योनेः प्रजापतिः प्रजा असृजत। तस्मादेव

योने॑ प्रजायते। ब्राह्मणो दक्षिणत उपाऽऽस्ते। ब्राह्मणो वै प्रजाना मुपद्रष्टा। उपद्रष्टु मत्येव प्र जायते। ग्रहो भवति। प्रजाना॑ सृष्टाना न्धृत्यै। यं ब्राह्मणँ विद्याँ विद्वा॑सँ यशो नर्च्छेत्।। 3।।❀ सोऽरण्यं परेत्य। दर्भस्तम्ब मुद्ग्रथ्य। ब्राह्मण न्दक्षिणतो निषाद्य। चतुर्होतॄ न्व्याचक्षीत। एतद्वै देवानां परमङ्गुह्यं ब्रह्म। यच्चतुर्होतारः। तदेव प्रकाश ङ्गमयति। तदेनं प्रकाशङ्गतम्। प्रकाशं प्रजाना ङ्गमयति। दर्भस्तम्ब मुद्ग्रथ्य व्याचष्टे।। 4।।❀ अग्निवान् वै दर्भस्तम्बः। अग्निवत्येव व्याचष्टे। ब्राह्मणो दक्षिणत उपाऽऽस्ते। ब्राह्मणो वै प्रजाना मुपद्रष्टा। उपद्रष्टु मत्येवैनँ यश ऋच्छति। ईश्वर न्तँ यशोऽर्तोरित्याहुः। यस्यान्ते व्याचष्ट इति। वर स्तस्मै देयः। यदेवैन न्तत्रोपनमति। तदेवाव रुन्धे।। 5।।❀ अग्नि मादधानो दशहोत्राऽरणि मव दध्यात्। प्रजात मेवैन मा धत्ते। तेनैवोद्धृत्याऽग्निहोत्र ञ्जुहुयात्। प्रजात मेवैन ञ्जुहोति। हविर्निर्वप्स्य न्दशहोतारँ व्याचक्षीत। प्रजात मेवैन न्निर्वपति। सामिधेनी रनुवक्ष्य न्दशहोतारँ व्याचक्षीत। सामिधेनी रेव सृष्ट्वाऽऽरभ्य प्र तनुते। अथो यज्ञो वै दशहोता। यज्ञ मेव तनुते।। 6।।❀ अभिचर न्दशहोतार ञ्जुहुयात्। नव वै पुरुषे प्राणाः। नाभि र्दशमी। सप्राण मेवैन मभि चरति। एतावद्वै पुरुषस्य स्वम्। यावत्प्राणाः। यावदेवास्यास्ति। तदभि चरति। स्वकृत इरिणे जुहोति प्रदरे वा। एतद्वा अस्यै निर्ऋतिगृहीतम्। निर्ऋतिगृहीत एवैन न्निर्ऋत्या ग्राहयति। यद्वाच॑ क्रूरम्। तेन वषट्करोति। वाच एवैनङ्क्रूरेण प्रवृश्चति। ताजगार्ति मार्च्छति।। 7।। (दशहोता सृष्ट्या ऋच्छेद्व्याचष्टे रुन्ध एव तनुते निर्ऋतिगृहीतं पञ्च च। 1।)

❀ प्रजापतिरकायत दर्शपूर्णमासौ सृजेयेति। स एत ञ्चतुर्होतार मपश्यत्। तं मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत्। ततो वै स दर्शपूर्णमासा वसृजत। तावस्माथ्सृष्टा वपाक्रामताम्। तौ ग्रहेणागृह्णात्। तद्ग्रहस्य ग्रहत्वम्। दर्शपूर्णमासा वालभमानः। चतुर्होतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहुयात्। दर्शपूर्णमासावेव सृष्ट्वाऽऽरभ्य प्र तनुते।। 8।।❀ ग्रहो भवति। दर्शपूर्णमासयो स्सृष्टयो र्धृत्यै। सोऽकामयत चातुर्मास्यानि सृजेयेति। स एतं पञ्चहोतार मपश्यत्। तं मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत्। ततो वै स चातुर्मास्यान्यसृजत। तान्यस्माथ्सृष्टा न्यपाक्रामन्न्। तानि ग्रहेणागृह्णात्। तद्ग्रहस्य ग्रहत्वम्। चातुर्मास्यान्यालभमानः।। 9।।❀ पञ्चहोतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहुयात्। चातुर्मास्यान्येव सृष्ट्वाऽऽरभ्य प्र तनुते। ग्रहो

भवति। चातुर्मास्याना९ सृष्टाना न्धृत्यै। सोऽकामयत पशुबन्ध९ सृजेयेति। स एत९ षड्ढोतार मपश्यत्। तं मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत्। ततो वै स पशुबन्ध मसृजत। सोऽस्माथ्सृष्टो ऽपाक्रामत्। तङ्ग्रहेणागृह्णात्।। 10।।❀ तद्ग्रहस्य ग्रहत्वम्। पशुबन्धेन यक्ष्यमाणः। षड्ढोतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहुयात्। पशुबन्धमेव सृष्ट्वाऽऽरभ्य प्र तनुते। ग्रहो भवति। पशुबन्धस्य सृष्टस्य धृत्यै। सोऽकामयत सौम्य मध्वर९ सृजेयेति। स एत९ सप्तहोतार मपश्यत्। तं मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत्। ततो वै स सौम्य मध्वर मसृजत।। 11।।❀ सोऽस्माथ्सृष्टोऽपाक्रामत्। तङ्ग्रहेणागृह्णात्। तद्ग्रहस्य ग्रहत्वम्। दीक्षिष्यमाणः। सप्तहोतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहुयात्। सौम्य मेवाध्वर९ सृष्ट्वाऽऽरभ्य प्र तनुते। ग्रहो भवति। सौम्यस्याध्वरस्य सृष्टस्य धृत्यै। देवेभ्यो वै यज्ञो न प्राभवत्। तमेतावच्छ स्समभरन्न्।। 12।।❀ यथ्सम्भाराः। ततो वै तेभ्यो यज्ञ॰ प्राभवत्। यथ्सम्भारा भवन्ति। यज्ञस्य प्रभूत्यै। आतिथ्य मासाद्य व्याचष्टे। यज्ञमुखँ वा आतिथ्यम्। मुखत एव यज्ञ९ सम्भृत्य प्रतनुते। अयज्ञो वा एषः। योऽपत्नीकः। न प्रजा॰ प्रजायेरन्न्। पत्नी र्व्याचष्टे। यज्ञ मेवाकः। प्रजानां प्रजननाय। उपसथ्सु व्याचष्टे। एतद्वै पत्नीना मायतनम्। स्व एवैना आयतनेऽव कल्पयति।। 13।। (तनुत आलभमानोऽगृह्णा दसृजताभर न्जायेर'2'न्थषट्च। 2।)

❀ प्रजापति रकामयत प्रजायेयेति। स तपोऽप्यत। स त्रिवृत॰ स्तोम मसृजत। तं पञ्चदशस्तोमो मध्यत उदतृणत्। तौ पूर्वपक्ष श्चापरपक्ष श्चाभवताम्। पूर्वपक्ष न्देवा अन्वसृज्यन्त। अपरपक्ष मन्वसुराः। ततो देवा अभवन्न्। पराऽसुराः। यङ्कामयेत वसीयान्थ्स्यादिति।। 14।।❀ तं पूर्वपक्षे याजयेत्। वसीयानेव भवति। यङ्कामयेत पापीयान्थ्स्यादिति। तमपरपक्षे याजयेत्। पापीयानेव भवति। तस्मा त्पूर्वपक्षोऽपरपक्षा त्करुण्यतरः। प्रजापति र्वै दशहोता। चतुर्होता पञ्चहोता। षड्ढोता सप्तहोता। ऋतव स्सँवथ्सरः।। 15।।❀ प्रजा॰ पशव इमे लोकाः। य एवं प्रजापतिं बहो र्भूया९सँ वेद। बहो रेव भूया न्भवति। प्रजापति र्देवासुरा नसृजत। स इन्द्रमपि नासृजत। तन्देवा अब्रुवन्न्। इन्द्रन्नो जनयेति। सोऽब्रवीत्। यथाऽहँ युष्मा९ स्तपसाऽसृक्षि। एव मिन्द्रञ्जनयध्व मिति।। 16।।❀ ते तपोऽतप्यन्त। त आत्म न्निन्द्र मपश्यन्न्। तमब्रुवन्न्। जायस्वेति। सोऽब्रवीत्। किं भागधेय मभि जनिष्य इति।

ऋतून्थ्सँवथ्सरम्। प्रजा॰ पशून्। इमा न्लोका नित्यब्रुवन्न्। तँ वै माऽऽहुत्या प्रजनयतेत्यब्रवीत्।। 17।। ❀ तञ्चतुर्होत्रा प्राजनयन्न्। य॰ कामयेत वीरो म आजायेतेति। स चतुर्होतार ञ्जुहुयात्। प्रजापतिर्वै चतुर्होता। प्रजापति रेव भूत्वा प्र जायते। जजन दिन्द्र मिन्द्रियाय स्वाहेति ग्रहेण जुहोति। आऽस्य वीरो जायते। वीर॰ हि देवा एतयाऽऽहुत्या प्राजनयन्न्। आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त। वयं पूर्वे सुवर्गँ लोक मियाम वयं पूर्व इति।। 18।। ❀ त आदित्या एतं पञ्चहोतार मपश्यन्न्। तं पुरा प्रातरनुवाका दाग्नीध्रेऽजुहवुः। ततो वै ते पूर्वे सुवर्गँ लोक मायन्न्। य स्सुवर्गकामस्स्यात्। स पञ्चहोतारं पुरा प्रातरनुवाका दाग्नीध्रे जुहुयात्। सँवथ्सरो वै पञ्चहोता। सँवथ्सर स्सुवर्गो लोकः। सँवथ्सर एवर्तुषु प्रतिष्ठाय। सुवर्गँ लोक मेति। तेऽब्रुव न्नङ्गिरस आदित्यान्।। 19।। ❀ क्व स्थ। क्व व स्सद्भ्यो हव्यँ वक्ष्याम इति। छन्दस्स्वित्यब्रुवन्न्। गायत्रिया न्त्रिष्टुभि जगत्यामिति। तस्मा च्छन्दस्सु सद्भ्य आदित्येभ्यः। आङ्गीरसी॰ प्रजा हव्यँ वहन्ति। वहन्त्यस्मै प्रजा बलिम्। ऐन मप्रतिख्यात ङ्गच्छति। य एवँ वेद। द्वादश मासा॰ पञ्चर्तवः। त्रय इमे लोकाः। असा वादित्य एकवि॰शः। एतस्मिन्वा एष श्रितः। एतस्मि न्प्रतिष्ठितः। य एव मेतङ् श्रितं प्रतिष्ठितँ वेद। प्रत्येव तिष्ठति।।20 ।। (स्यादिति सँवथ्सरो जनयध्व मिती त्यब्रवी त्पूर्व इत्यादित्या नृतव ष्षड्। 3।)

❀ प्रजापति रकामयत प्रजायेयेति। स एत न्दशहोतार मपश्यत्। तेन दशधाऽऽत्मानँ विधाय। दशहोत्राऽतप्यत। तस्य चित्ति स्स्रुगासीत्। चित्त माज्यम्। तस्यैतावत्येव वागासीत्। एतावान् यज्ञक्रतुः। स चतुर्होतार मसृजत। सोऽनन्दत्।। 21।। ❀ असृक्षि वा इम मिति। तस्य सोमो हवि रासीत्। स चतुर्होत्राऽतप्यत। सोऽताम्यत्। स भू- रिति व्याहरत्। स भूमि मसृजत। अग्निहोत्र न्दर्शपूर्णमासौ यजू॰षि। स द्वितीय मतप्यत। सोऽताम्यत्। स भुव- इति व्याहरत्।। 22।। ❀ सोऽन्तरिक्ष मसृजत। चातुर्मास्यानि सामानि। स तृतीय मतप्यत। सोऽताम्यत्। स सुव- रिति व्याहरत्। स दिव मसृजत। अग्निष्टोम मुक्थ्य मतिरात्र मृचः। एता वै व्याहृतय इमे लोकाः। इमा न्खलु वै लोका ननु प्रजा॰ पशव श्छन्दा॰सि प्राजायन्त। य एव मेता॰ प्रजापते॰ प्रथमा व्याहृती॰ प्रजाता वेद।। 23।। ❀ प्र प्रजया पशुभि र्मिथुनै र्जायते। स पञ्चहोतार मसृजत। स हवि र्नाविन्दत। तस्मै सोम स्तनुवं प्रायच्छत्। एतत्ते हविरिति। स

पञ्चहोत्रा ऽतप्यत। सोऽताम्यत्। स प्रत्यङ्ङबाधत। सोऽसुरा नसृजत। तदस्याप्रियमासीत्।। 24।।❀ तद्दुर्वर्ण॑ हिरण्य मभवत्। तद्दुर्वर्णस्य हिरण्यस्य जन्म। स द्वितीय मतप्यत। सोऽताम्यत्। स प्राङबाधत। स देवा नसृजत। तदस्य प्रिय मासीत्। तथ्सुवर्ण॑ हिरण्य मभवत्। तथ्सुवर्णस्य हिरण्यस्य जन्म। य एव॑ सुवर्णस्य हिरण्यस्य जन्म वेद।। 25।।❀ सुवर्ण आत्मना भवति। दुर्वर्णोऽस्य भ्रातृव्यः। तस्माथ्सुवर्ण॑ हिरण्यं भार्यम्। सुवर्ण एव भवति। ऐनं प्रिय ङ्गच्छति नाप्रियम्। स सप्तहोतार मसृजत। स सप्तहोत्रैव सुवर्गँ लोकमैत्। त्रिणवेन स्तोमेनैभ्यो लोकेभ्योऽसुरा न्प्राणुदत। त्रयस्त्रि॑शेन प्रत्यतिष्ठत्। एकवि॑शेन रुच मधत्त।। 26।।❀ सप्तदशेन प्राजायत। य एवँ विद्वा न्थ्सोमेन यजते। सप्तहोत्रैव सुवर्गँ लोकमेति। त्रिणवेन स्तोमेनैभ्यो लोकेभ्यो भ्रातृव्या न्प्रणुदते। त्रयस्त्रि॑शेन प्रति तिष्ठति। एकवि॑शेन रुचन्धत्ते। सप्तदशेन प्रजायते। तस्माथ्सप्तदशस्स्तोमो न निरूहृत्यः। प्रजापतिर्वै सप्तदशः। प्रजापति मेव मध्यतो धत्ते प्रजात्यै।। 27।। (अनन्द ङ्ध्रुव इति व्याहर द्वेदाऽऽसी द्वेदाधत्त प्रजात्यै। 4।)

❀ देवा वै वरुण मयाजयन्न्। स यस्यैयस्यै देवतायै दक्षिणा मनयत्। तामव्लीनात्। तेऽब्रुवन्न्। व्यावृत्य प्रति गृह्णाम। तथा नो दक्षिणा न व्लेष्यतीति। ते व्यावृत्य प्रत्यगृह्णन्न्। ततो वै तान्दक्षिणा नाव्लीनात्। य एवँ विद्वा न्व्यावृत्य दक्षिणां प्रतिगृह्णाति। नैन न्दक्षिणा व्लीनाति।। 28।।❀ राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्य मित्याह। आग्नेयँ वै हिरण्यम्। स्वयैवैन द्देवतया प्रति गृह्णाति। सोमाय वास इत्याह। सौम्यँ वै वासः। स्वयैवैन द्देवतया प्रति गृह्णाति। रुद्राय गामित्याह। रौद्री वै गौः। स्वयैवैना न्देवतया प्रति गृह्णाति। वरुणायाश्व मित्याह।। 29।।❀ वारुणो वा अश्वः। स्वयैवैन न्देवतया प्रति गृह्णाति। प्रजापतये पुरुष मित्याह। प्राजापत्यो वै पुरुषः। स्वयैवैन न्देवतया प्रति गृह्णाति। मनवे तल्प मित्याह। मानवो वै तल्पः। स्वयैवैन न्देवतया प्रति गृह्णाति। उत्तानायाङ्गीरसायान इत्याह। इयँ वा उत्तान आङ्गीरसः।। 30।।❀ अनयैवैन त्प्रति गृह्णाति। वैश्वानर्यर्चा रथं प्रतिगृह्णाति। वैश्वानरो वै देवतया रथः। स्वयैवैन न्देवतया प्रति गृह्णाति। तेनामृतत्व मश्या मित्याह। अमृत मेवाऽऽत्मन्धत्ते। वयो दात्र इत्याह। वय एवैनङ्कृत्वा। सुवर्गँ लोकङ्गमयति। मयो मह्य मस्तु प्रतिग्रहीत्र इत्याह।। 31।।❀ यद्वै

शिवम्। तन्मयः। आत्मन एवैषा परीत्तिः। क इदङ्कस्मा अदादित्याह। प्रजापतिर्वै कः। स प्रजापतये ददाति। कामꣳ कामायेत्याह। कामेन हि ददाति। कामेन प्रतिगृह्णाति। कामो दाता कामꣳ प्रतिग्रहीतेत्याह।। 32।।❀ कामो हि दाता। कामꣳ प्रतिग्रहीता। कामꣳ समुद्र माविशेत्याह। समुद्र इव हि कामः। नेव हि कामस्यान्तोऽस्ति। न समुद्रस्य। कामेन त्वा प्रति गृह्णामीत्याह। येन कामेन प्रतिगृह्णाति। स एवैन ममुष्मिन्लोके काम आ गच्छति। कामैतत्त एषा ते काम दक्षिणेत्याह। काम एव तद्यजमानोऽमुष्मि न्लोके दक्षिणा मिच्छति। न प्रतिग्रहीतरि। य एवँ विद्वा न्दक्षिणां प्रतिगृह्णाति। अनृणा मेवैनां प्रति गृह्णाति।। 33।। (व्रीना त्यश्व मित्याहाऽऽङ्गीरसꣳ प्रतिग्रहीत्र इत्याह प्रतिग्रहीतेत्याह दक्षिणेत्याह चत्वारि च। 5।)

❀ अन्तो वा एष यज्ञस्य। यद्दशम महः। दशमेऽह न्थ्सर्पराज्ञिया ऋग्भि स्स्तुवन्ति। यज्ञस्यैवान्त ङ्गत्वा। अन्नाद्य मव रुन्धते। तिसृभि स्स्तुवन्ति। त्रय इमे लोकाः। एभ्य एव लोकेभ्योऽन्नाद्य मव रुन्धते। पृश्निवती भवन्ति। अन्नँ वै पृश्नि।। 34।।❀ अन्न मेवाव रुन्धते। मनसा प्र स्तौति। मनसोद्गायति। मनसा प्रति हरति। मन इव हि प्रजापतिः। प्रजापते राप्त्यै। देवा वै सर्पाः। तेषा मियꣳ राज्ञी। यथ्सर्पराज्ञिया ऋग्भिस्स्तुवन्ति। अस्या मेव प्रति तिष्ठन्ति।। 35।।❀ चतुर्होतॄन् होता व्याचष्टे। स्तुत मनु शꣳसति शान्त्यै। अन्तो वा एष यज्ञस्य। यद्दशम महः। एतत्खलु वै देवानां परम ङ्गुह्यं ब्रह्म। यच्चतुर्होतारः। दशमेऽहꣳ श्चतुर्होतॄ न्व्याचष्टे। यज्ञस्यैवान्त ङ्गत्वा। परम न्देवाना ङ्गुह्यं ब्रह्माव रुन्धे। तदेव प्रकाश ङ्गमयति।। 36।।❀ तदेनं प्रकाश ङ्गतम्। प्रकाशं प्रजाना ङ्गमयति। वाचँ यच्छति। यज्ञस्य धृत्यै। यजमानदेवत्यँ वा अहः। भ्रातृव्यदेवत्या रात्रिः। अह्ना रात्रि न्ध्यायेत्। भ्रातृव्यस्यैव तल्लोकँ वृङ्क्ते। यद्दिवा वाचँ विसृजेत्। अह भ्रातृव्यायोच्छिꣳषेत्। यन्नक्तँ विसृजेत्। रात्रिं भ्रातृव्यायोच्छिꣳषेत्। अधिवृक्षसूर्ये वाचँ विसृजति। एतावन्त मेवास्मै लोक मुच्छिꣳषति। यावदादित्योऽस्तमेति।। 37।। (पृश्नि तिष्ठन्ति गमयति शिꣳषेत्पञ्च च। 6।)

❀ प्रजापतिꣳ प्रजा असृजत। ता स्सृष्टा स्समश्लिष्यन्न्। ता रूपेणानु प्राविशत्। तस्मादाहुः। रूपँ वै प्रजापति रिति। ता नाम्नाऽनु प्राविशत्। तस्मादाहुः। नाम वै प्रजापति रिति। तस्मादप्यामित्रौ सङ्गत्य। नाम्ना चेद्ध्वयेते।। 38।।❀ मित्रमेव भवतः। प्रजापति र्देवासुरा

नसृजत। स इन्द्र मपि नासृजत। तन्देवा अब्रुवन्न्। इन्द्रन्नो जनयेति। स आत्म न्निन्द्र मपश्यत्। तमसृजत। तन्त्रिष्टुग्वीर्यं भूत्वाऽनु प्राविशत्। तस्य वज्रः पञ्चदशो हस्त आऽपद्यत। तेनोदय्यासुरा नभ्यभवत्।। 39।।❀ य एवँ वेद। अभि भ्रातृव्या न्भवति। ते देवा असुरै र्विजित्य। सुवर्गँ लोक मायन्न्। तेऽमुष्मि न्लोके व्यक्षुध्यन्न्। तेऽब्रुवन्न्। अमुतःप्रदानँ वा उप जिजीविमेति। ते सप्तहोतारँ यज्ञँ विधायायास्यम्। आङ्गीरसं प्राहिण्वन्न्। एतेनामुत्र कल्पयेति।। 40।।❀ तस्य वा इयं क्लृप्तिः। यदिदङ्किञ्च। य एवँ वेद। कल्पतेऽस्मै। स वा अयं मनुष्येषु यज्ञ स्सप्तहोता। अमुत्रसद्भ्यो देवेभ्यो हव्यँ वहति। य एवँ वेद। उपैनँ यज्ञो नमति। सोऽमन्यत। अभि वा इमेऽस्मा ल्लोका दमुँ लोकङ्कमिष्यन्त इति। स वाचस्पते हृदिति व्याहरत्। तस्मात्पुत्रो हृदयम्। तस्मा दस्मा ल्लोका दमुँ लोक न्नाभि कामयन्ते। पुत्रो हि हृदयम्।। 41।। (ह्वयेते अभव त्कल्पयेतीति चत्वारि च। 7।)

❀ देवा वै चतुर्होतृभि र्यज्ञ मतन्वत। ते वि पाप्मना भ्रातृव्येणाजयन्त। अभि सुवर्गँ लोक मजयन्न्। य एवँ विद्वा९ श्चतुर्होतृभि र्यज्ञ न्तनुते। वि पाप्मना भ्रातृव्येण जयते। अभि सुवर्गँ लोक ञ्जयति। षड्ढोत्रा प्रायणीय मा सादयति। अमुष्मै वै लोकाय षड्ढोता। घ्नन्ति खलु वा एतथ्सोमम्। यदभिषुण्वन्ति।। 42।।❀ ऋजुधैवैन ममुँ लोक ङ्गमयति। चतुर्होत्राऽऽतिथ्यम्। यशो वै चतुर्होता। यश एवाऽऽत्म न्धत्ते। पञ्चहोत्रा पशु मुप सादयति। सुवर्ग्यो वै पञ्चहोता। यजमानः पशुः। यजमान मेव सुवर्गँ लोक ङ्गमयति। ग्रहा न्गृहीत्वा सप्तहोतारञ्जुहोति। इन्द्रियँ वै सप्तहोता।। 43।।❀ इन्द्रिय मेवाऽऽत्म न्धत्ते। यो वै चतुर्होतृ ननुसवन न्तर्पयति। तृप्यति प्रजया पशुभिः। उपैन९ सोमपीथो नमति। बहिष्पवमाने दशहोतारँ व्याचक्षीत। माध्यन्दिने पवमाने चतुर्होतारम्। आर्भवे पवमाने पञ्चहोतारम्। पितृयज्ञे षड्ढोतारम्। यज्ञायज्ञियस्य स्तोत्रे सप्तहोतारम्। अनुसवन मेवैना९ स्तर्पयति।। 44।।❀ तृप्यति प्रजया पशुभिः। उपैन९ सोमपीथो नमति। देवा वै चतुर्होतृभि स्सत्र मासत। ऋद्धिपरिमितँ यशस्कामाः। तेऽब्रुवन्न्। यन्नः प्रथमँ यश ऋच्छात्। सर्वेषान्न स्तथ्सहासदिति। सोम श्चतुर्होत्रा। अग्निः पञ्चहोत्रा। धाता षड्ढोत्रा।। 45।।❀ इन्द्र स्सप्तहोत्रा। प्रजापति र्दशहोत्रा। तेषा९ सोम९ राजानँ यश आर्च्छत्। तन्न्यकामयत। तेनापाक्रामत्। तेन प्रलाय मचरत्। तन्देवाः प्रैषैः प्रैष मैच्छन्न्। तत्प्रैषाणां

प्रैषत्वम्। निविद्भि र्न्यवेदयन्न्। तन्निविदा न्निवित्त्वम्।। 46।। ❀ आप्रीभि राप्नुवन्न्। तदाप्रीणा माप्रित्वम्। तमघ्नन्न्। तस्य यशो व्यगृह्णत। ते ग्रहा अभवन्न्। तद्ग्रहाणा ङ्ग्रहत्वम्। यस्यैवँविदुषो ग्रहा गृह्यन्ते। तस्य त्वेव गृहीताः। तेऽब्रुवन्न्। यो वै नश्श्रेष्ठोऽभूत्।। 47।। ❀ तमवधिष्म। पुनरिमꣳ सुवामहा इति। तञ्छन्दोभि रसुवन्त। तच्छन्दसा ञ्छन्दस्त्वम्। साम्ना समानयन्न्। तथ्साम्न स्सामत्वम्। उक्थै रुदस्थापयन्न्। तदुक्थाना मुक्थत्वम्। य एवँ वेद। प्रत्येव तिष्ठति।। 48।। ❀ सर्व मायु रेति। सोमो वै यशः। य एवँ विद्वा न्थ्सोम मागच्छति। यश एवैन मृच्छति। तस्मादाहुः। यश्चैवँ वेद यश्चन। तावुभौ सोम मा गच्छतः। सोमो हि यशः। तन्त्वाव यश ऋच्छतीत्याहुः। यस्सोमे सोमं प्राऽऽहेति। तस्मा थ्सोमे सोमः प्रोच्यः। यश एवैन मृच्छति।। 49।। (अभिषुण्वन्ति सप्तहोता तर्पयति षड्ढोत्रा निवित्त्व मभू त्तिष्ठति प्राऽऽहेति द्वे च। 8।)

❀ इदँ वा अग्रे नैव किञ्चनाऽऽसीत्। न द्यौ रासीत्। न पृथिवी। नान्तरिक्षम्। तदसदेव सन्मनोऽकुरुत स्या मिति। तदतप्यत। तस्मा त्तेपाना द्धूमोऽजायत। तद्भूयोऽतप्यत। तस्मा त्तेपाना दग्नि रजायत। तद्भूयोऽतप्यत।। 50।। ❀ तस्मा त्तेपाना ज्ज्योति रजायत। तद्भूयोऽतप्यत। तस्मा त्तेपाना दर्चि रजायत। तद्भूयोऽतप्यत। तस्मा त्तेपाना न्मरीचयोऽजायन्त। तद्भूयोऽतप्यत। तस्मा त्तेपाना दुदारा अजायन्त। तद्भूयोऽतप्यत। तदभ्र मिव समहन्यत। तद्वस्ति मभिनत्।। 51।। ❀ स समुद्रोऽभवत्। तस्माथ्समुद्रस्य न पिबन्ति। प्रजनन मिव हि मन्यन्ते। तस्मा त्पशो र्जायमाना दापः पुरस्ता द्यन्ति। तद्दशहोता ऽन्वसृज्यत। प्रजापतिर्वै दशहोता। य एव न्तपसो वीर्यँ विद्वाꣳ स्तप्यते। भवत्येव। तद्वा इदमाप स्सलिल मासीत्। सोऽरोदी त्प्रजापतिः।। 52।। ❀ स कस्मा अज्ञि। यद्यस्या अप्रतिष्ठाया इति। यदप्स्ववापद्यत। सा पृथिव्यभवत्। यद्व्यमृष्ट। तदन्तरिक्ष मभवत्। यदूर्ध्व मुदमृष्ट। सा द्यौरभवत्। यदरोदीत्। तदनयो रोदस्त्वम्।। 53।। ❀ य एवँ वेद। नास्य गृहे रुदन्ति। एतद्वा एषाँ लोकानाञ्जन्म। य एव मेषाँ लोकानाञ्जन्म वेद। नैषु लोकेष्वार्ति मार्च्छति। स इमां प्रतिष्ठा मविन्दत। स इमां प्रतिष्ठाँ वित्त्वाऽकामयत प्र जायेयेति। स तपोऽतप्यत। सोऽन्तर्वा नभवत्। स जघना दसुरा नसृजत।। 54।। ❀ तेभ्यो मृन्मये पात्रेऽन्न मदुहत्। याऽस्य सा तनू रासीत्। तामपाहत। सा तमिस्राऽभवत्। सोऽकामयत प्र जायेयेति। स तपोऽतप्यत। सोऽन्तर्वा नभवत्।

स प्रजननं देव प्रजा असृजत। तस्मा दिमा भूयिष्ठाः। प्रजननं ह्येना असृजत।। 55।।❀
ताभ्यो दारुमये पात्रे पयोऽदुहत्। याऽस्य सा तनू रासीत्। तामपाहत। सा ज्योत्स्नाऽभवत्।
सोऽकामयत प्र जायेयेति। स तपोऽतप्यत। सोऽन्तर्वा नभवत्। स उपपक्षाभ्या मेवर्तू नसृजत।
तेभ्यो रजते पात्रे घृत मदुहत्। याऽस्य सा तनू रासीत्।। 56।।❀ तामपाहत। सोऽहोरात्रयो
स्सन्धि रभवत्। सोऽकामयत प्र जायेयेति। स तपोऽतप्यत। सोऽन्तर्वा नभवत्। स मुखा द्देवा
नसृजत। तेभ्यो हरिते पात्रे सोम मदुहत्। याऽस्य सा तनू रासीत्। तामपाहत। तदह रभवत्।।
57।।❀ एते वै प्रजापते र्दोहाः। य एवँ वेद। दुह एव प्रजाः। दिवा वै नोऽभूदिति। तद्देवाना
न्देवत्वम्। य एवँ देवाना न्देवत्वँ वेद। देववानेव भवति। एतद्वा अहोरात्राणाञ्जन्म। य एव
महोरात्राणा ञ्जन्म वेद। नाहोरात्रेष्वार्ति मार्च्छति।। 58।।❀ असतोऽधि मनोऽसृज्यत। मनꣳ
प्रजापति मसृजत। प्रजापतिꣳ प्रजा असृजत। तद्वा इदं मनस्येव परमं प्रतिष्ठितम्। यदिदङ्किञ्च।
तदेत च्छ्वोवस्यस न्नाम ब्रह्म। व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसीवस्यसी व्युच्छति। प्र जायते
प्रजया पशुभिः। प्र परमेष्ठिनो मात्रा माप्नोति। य एवँ वेद।। 59।। (अग्नि रजायत
तद्भूयोऽतप्यताभिन दरोदी त्प्रजापती रोदस्त्व मसृजतासृजत घृत मदुह द्याऽस्य सा तनू रासी
दह रभव दृच्छति वेद। 9। इद न्धूमोऽग्नि र्ज्योति रर्चि र्मरीचय उदारा स्तदभ्रꣳ स जघना थ्सा
तमिस्रा स प्रजनना थ्सा जोथ्स्ना स उपपक्षाभ्याꣳ सोऽहोरात्रयो स्सन्धि स्स मुखा त्तदह र्देववा
न्मृन्मये दारुमये रजते हरिते तेभ्य स्ताभ्यो द्वे तेऽन्नं पयो घृतꣳ सोमम्।)
❀ प्रजापति रिन्द्र मसृजतानुजावर न्देवानाम्। तं प्राहिणोत्। परेहि। एतेषा न्देवाना
मधिपति रेधीति। तन्देवा अब्रुवन्न्। कस्त्वमसि। वयँ वै त्वच्छ्रेयाꣳसस्स्म इति। सोऽब्रवीत्।
कस्त्वमसि वयँ वै त्वच्छ्रेयाꣳसस्स्म इति मा देवा अवोचन्निति। अथ वा इद न्तर्हि प्रजापतौ हर
आसीत्।। 60।।❀ यदस्मि न्नादित्ये। तदेन मब्रवीत्। एतन्मे प्र यच्छ। अथाह मेतेषा न्देवाना
मधिपति र्भविष्यामीति। कोऽहꣳस्या मित्यब्रवीत्। एतत्प्रदायेति। एतथ्स्या इत्यब्रवीत्।
यदेतद्ब्रवीषीति। को ह वै नाम प्रजापतिः। य एवँ वेद ।। 61।।❀ विदु रेन न्नाम्ना। तदस्मै
रुक्मङ्कृत्वा प्रत्यमुञ्चत्। ततो वा इन्द्रो देवाना मधिपति रभवत्। य एवँ वेद। अधिपति रेव
समानानां भवति। सोऽमन्यत। किङ्किँ वा अकरमिति। स चन्द्रं म आ हरेति प्रालपत्।

तच्चन्द्रमस श्चन्द्रमस्त्वम्। य एवँ वेद।। 62।। ❀ चन्द्रवानेव भवति। तन्देवा अब्रुवन्न्। सुवीर्यो मर्या यथा गोपायत इति। तथ्सूर्यस्य सूर्यत्वम्। य एवँ वेद। नैन न्दभ्नोति। कश्चनास्मिन्वा इदमिन्द्रियं प्रत्यस्था दिति। तदिन्द्रस्येन्द्रत्वम्। य एवँ वेद। इन्द्रियाव्येव भवति।। 63।। ❀ अयँ वा इदं परमोऽभूदिति। तत्परमेष्ठिनः परमेष्ठित्वम्। य एवँ वेद। परमा मेव काष्ठाङ्गच्छति। तन्देवा स्समन्तं पर्यविशन्न्। वसवः पुरस्तात्। रुद्रा दक्षिणतः। आदित्याः पश्चात्। विश्वे देवा उत्तरतः। अङ्गिरसः प्रत्यञ्चम्।। 64।। ❀ साध्याः पराञ्चम्। य एवँ वेद। उपैनँ समाना स्सँ विशन्ति। स प्रजापति रेव भूत्वा प्रजा आऽवयत्। ता अस्मै नातिष्ठन्तान्नाद्याय। ता मुखं पुरस्ता त्पश्यन्तीः। दक्षिणतः पर्यायन्न्। स दक्षिणतः पर्यवर्तयत। ता मुखं पुरस्ता त्पश्यन्तीः। मुख न्दक्षिणतः।। 65।। ❀ पश्चा त्पर्यायन्न्। स पश्चा त्पर्यवर्तयत। ता मुखं पुरस्ता त्पश्यन्तीः। मुख न्दक्षिणतः। मुखं पश्चात्। उत्तरतः पर्यायन्न्। स उत्तरतः पर्यवर्तयत। ता मुखं पुरस्ता त्पश्यन्तीः। मुख न्दक्षिणतः। मुखं पश्चात्।। 66।। ❀ मुख मुत्तरतः। ऊर्ध्वा उदायन्न्। स उपरिष्टा न्न्यवर्तयत। ता स्सर्वतोमुखो भूत्वाऽवयत्। ततो वै तस्मै प्रजा अतिष्ठन्तान्नाद्याय। य एवँ विद्वा न्परि च वर्तयते नि च। प्रजापति रेव भूत्वा प्रजा अत्ति। तिष्ठन्तेऽस्मै प्रजा अन्नाद्याय। अन्नाद एव भवति।। 67।। (आसी द्वेद चन्द्रमस्त्वँ य एवँ वेदेन्द्रियाव्येव भवति प्रत्यञ्चं मुखं न्दक्षिणतो मुखं पश्चा न्नव च। 10।)

❀ प्रजापति रकामयत बहो र्भूयान्थ्स्यामिति। स एत न्दशहोतार मपश्यत्। तं प्रायुङ्क्त। तस्य प्रयुक्ति बहो र्भूया नभवत्। यः कामयेत बहो र्भूयान्थ्स्यामिति। स दशहोतारं प्र युञ्जीत। बहो रेव भूया न्भवति। सोऽकामयत वीरो म आजायेतेति। स दशहोतु श्चतुर्होतार न्निरमिमीत। तं प्रायुङ्क्त।। 68।। ❀ तस्य प्रयुक्तीन्द्रोऽजायत। यः कामयेत वीरो म आ जायेतेति। स चतुर्होतारं प्र युञ्जीत। आऽस्य वीरो जायते। सोऽकामयत पशुमा न्थ्स्यामिति। स चतुर्होतुः पञ्चहोतार न्निरमिमीत। तं प्रायुङ्क्त। तस्य प्रयुक्ति पशुमा नभवत्। यः कामयेत पशुमा न्थ्स्यामिति। स पञ्चहोतारं प्र युञ्जीत।। 69।। ❀ पशुमा नेव भवति। सोऽकामयतर्तवो मे कल्पेर न्निति। स पञ्चहोतु ष्षड्ढोतार न्निरमिमीत। तं प्रायुङ्क्त। तस्य प्रयुक्त्यृतवोऽस्मा अकल्पन्त। यः कामयेतर्तवो मे कल्पेरन्निति। स षड्ढोतारं प्र युञ्जीत। कल्पन्तेऽस्मा ऋतवः। सोऽकामयत

सोमप स्सोमयाजी स्याम्। आ मे सोमप स्सोमयाजी जायेतेति।। 70।।❀ स षड्ढोतु स्सप्तहोतार न्निरमिमीत। तं प्रायुङ्क्त। तस्य प्रयुक्ति सोमप स्सोमया.ज्यभवत्। आऽस्य सोमप स्सोमया.ज्यजायत। यः कामयेत सोमप स्सोमयाजी स्याम्। आ मे सोमप स्सोमयाजी जायेतेति। स सप्तहोतारं प्र युञ्जीत। सोमप एव सोमयाजी भवति। आऽस्य सोमप स्सोमयाजी जायते। स वा एष पशुः पञ्चधा प्रति तिष्ठति।। 71।।❀ पद्भि मुखेन। ते देवाः पशून् वित्त्वा। सुवर्गँ लोक मायन्न्। तेऽमुष्मिन्लोके व्यक्षुध्यन्न्। तेऽब्रुवन्न्। अमुतःप्रदानँ वा उप जिजीविमेति। ते सप्तहोतारँ यज्ञँ विधायायास्यम्। आङ्गीरसं प्राहिण्वन्न्। एतेनामुत्र कल्पयेति। तस्य वा इयं क्लृप्तिः।। 72।।❀ यदिदङ्किञ्च। य एवँ वेद। कल्पतेऽस्मै। स वा अयं मनुष्येषु यज्ञ स्सप्तहोता। अमुत्रसद्भ्यो देवेभ्यो हव्यँ वहति। य एवँ वेद। उपैनँ यज्ञो नमति। यो वै चतुर्होतृणा न्निदानँ वेद। निदानवा न्भवति। अग्निहोत्रं वै दशहोतु र्निदानम्। दर्शपूर्णमासौ चतुर्होतुः। चातुर्मास्यानि पञ्चहोतुः। पशुबन्ध ष्षड्ढोतुः। सौम्योऽध्वर स्सप्तहोतुः। एतद्वै चतुर्होतृणा न्निदानम्। य एवँ वेद। निदानवा न्भवति।। 73।। (अमिमीत तं प्रायुङ्क्त पञ्चहोतारं प्र युञ्जीत जायेतेति तिष्ठति क्लृप्ति र्दशहोतु र्निदानः सप्त च। 11।)

(प्रजापति रकामयत प्रजा स्सृजेयेति प्रजापति रकामयत दर्शपूर्णमासौ सृजेयेति प्रजापति रकामयत प्रजायेयेति स तप स्स त्रिवृतं प्रजापति रकामयत दशहोतार न्तेन दशधाऽऽत्मान न्देवा वै वरुण मन्तो वै प्रजापति स्ता स्सृष्टा स्समश्लिष्य न्देवा वै चतुर्होतृभि रिदँ वा अग्रे प्रजापति रिन्द्रं प्रजापति रकामयत बहो र्भूया नेकादश। 11। प्रजापति स्तद्ब्रहस्य प्रजापति रकामयतानयैवैन त्तस्य वा इयं क्लृप्ति स्तस्मा त्तेपाना ज्ज्योति र्यदस्मि न्नादित्ये स षड्ढोतु स्सप्तहोतार न्त्रिसप्ततिः। 73। प्रजापति रकामयत निदानवा न्भवति।)

## द्वितीयाष्टके तृतीयः प्रपाठकः

### प्रा।का। - होतृ ब्राह्मणम् 32 11एकादशानुवाकाः ))

❀ ब्रह्मवादिनो वदन्ति। किञ्चतुर्होतृणा ञ्चतुर्होतृत्वमिति। यदेवैषु चतुर्धा होतारः। तेन चतुर्होतारः। तस्माच्चतुर्होतार उच्यन्ते। तच्चतुर्होतृणा ञ्चतुर्होतृत्वम्। सोमो वै चतुर्होता।

अग्निः॒ पञ्चहोता। धाता षड्ढोता।। 1।। ❀ इन्द्र स्सप्तहोता।। 1।। ❀ प्र॒जाप॑ति॒ र्दश॑होता। य एवञ्चतु॑र्होतृ॒णा मृद्धिं वेद॑। ऋध्नोत्येव। य ए॒षामे॒वं बन्धुता॒ं वेद॑। बन्धु॑मा न्भवति। य ए॒षा मे॒व क्लृप्तिं वेद॑। कल्प॑तेऽस्मै। य ए॒षा मे॒व मा॒यत॑नं वेद॑। आ॒यत॑नवा न्भवति। य ए॒षा मे॒वं प्र॒तिष्ठां वेद॑।। 2।। ❀ प्रत्ये॒व ति॑ष्ठति। ब्र॒ह्म॒वा॒दिनो॑ वदन्ति। दश॑होता च॒तुर्हो॑ता। पञ्च॑होता॒ षड्ढो॑ता स॒प्तहो॑ता। अथ॒ कस्मा॒ च्चतु॑र्होतार उच्यन्त॒ इति॑। इन्द्रो॒ वै चतु॑र्होता। इन्द्रः॒ खलु॒ वै श्रेष्ठो॑ दे॒वता॑ना मु॒प॒दे॒शना॑त्। य ए॒व मिन्द्रं॒ श्रेष्ठ न्दे॒वता॑ना मु॒प॒दे॒शना॒ द्वेद॑। वसि॑ष्ठ स्समा॒नानां॑ भवति। तस्मा॒ च्छ्रेष्ठ मा॒यन्तं॑ प्रथ॒मेनै॒वानु॑ बुध्यन्ते। अ॒य मा॒गन्न्। अ॒य म॑वासा॒दिति॑। की॒र्ति॑ र॑स्य॒ पूर्वाऽऽग॑च्छति जन॒ता मा॒यत॑ः। अथो॑ ए॒नं प्र॑थ॒मेनै॒वानु॑ बुध्यन्ते। अ॒य मा॒गन्न्। अ॒य म॑वासा॒दिति॑।। 3।।
(स॒प्तहो॑ता प्र॒तिष्ठां वेद॑ बुध्यन्ते॒ षट्च।। 1।)

❀ दक्षिणां प्रतिग्रहीष्य'2'न्थ्सप्तदशकृत्वोऽपान्यात्। आ॒त्मान॑मे॒व स॒मिन्धे। तेज॑से वी॒र्या॑य। अथो॑ प्र॒जाप॑ति रे॒वैनां॑ भू॒त्वा प्रति॑ गृह्णाति। आ॒त्मनोऽना॑र्त्यै। यद्ये॒न॒ मा॒र्त्विज्या द्भू॒तं सन्त न्नि॒र्ह॒रे॑रन्न्। आ॒ग्नी॒ध्रे जु॑हु॒या द्दश॑होतारम्। च॒तु॒र्गृ॒ही॒तेना॑ऽऽज्ये॑न। पु॒रस्ता॑ त्प्र॒त्यङ्क्ति॑ष्ठन्न्। प्र॒ति॒लो॒मं वि॒ग्राह॑म्।। 4।। ❀ प्रा॒णा ने॒वास्योप॑ दासयति। यद्ये॒नं॒ पुन॑ रुपशि॒क्षेयुः। आ॒ग्नी॒ध्र ए॒व जु॑हु॒या द्दश॑होतारम्। च॒तु॒र्गृ॒ही॒तेना॑ऽऽज्ये॑न। प॒श्चा त्प्रा॒ङासी॑नः। अ॒नु॒लो॒म म॑वि॒ग्राह॑म्। प्रा॒णाने॒वास्मै॑ कल्पयति। प्राय॑श्चित्ती॒ वाग्घो॒ते त्यृ॑तुमु॒खऋ॑तुमुखे जुहोति। ऋ॒तू ने॒वास्मै॑ कल्पयति। कल्प॑न्तेऽस्मा ऋ॒तवः॑।। 5।। ❀ क्लृ॒प्ता अ॑स्मा ऋ॒तव॒ आय॑न्ति। षड्ढो॑ता॒ वै भू॒त्वा प्र॒जाप॑ति रि॒दं सर्वं॑ मसृजत। स मनो॑ऽसृजत। म॒नसोऽधि॑ गा॒य॒त्री म॑सृजत। तद्गा॑य॒त्रीं यश॑ आर्च्छत्। तामाऽल॑भत। गा॒य॒त्रि॒या अधि॒ छन्दा॒ंस्य॑सृजत। छन्दो॒भ्योऽधि॒ साम॑। तथ्साम॒ यश॑ आर्च्छत्। तदाऽल॑भत।। 6।। ❀ साम्नोऽधि॒ यजू॒ंष्य॑सृजत। यजु॑र्भ्योऽधि॒ विष्णु॑म्। तद्विष्णुं॒ यश॑ आर्च्छत्। तमाऽल॑भत। विष्णो॑ र॒ध्योष॑धी रसृजत। ओष॑धीभ्योऽधि॒ सोम॑म्। तथ्सोमं॒ यश॑ आर्च्छत्। तमाऽल॑भत। सोमा॒ दधि॑ प॒शू न॑सृजत। प॒शुभ्योऽधीन्द्र॑म्।। 7।। ❀ तदिन्द्रं॒ यश॑ आर्च्छत्। तदे॑न॒ न्नाति॒ प्राच्य॑वत। इन्द्र॑ इव यश॒स्वी भ॑वति। य ए॒वं वेद॑। नैनं॒ यशोऽति॒ प्र च्य॑वते। यद्वा इ॒दङ्किञ्च॑। तथ्सर्वं॒ मु॒त्तान॒ ए॒वाङ्गी॒रसः॒ प्रत्य॑गृह्णात्। तदे॑नं॒ प्रति॑गृहीत॒ न्नाहि॑नत्। यत्किञ्च॑ प्रति॒गृ॒ह्णी॒यात्। तथ्सर्वं॑ मु॒त्तानस्त्वाऽऽङ्गी॒रसः॒ प्रति॑ गृह्णा॒त्वित्ये॒व प्रति॑ गृह्णी॒यात्। इ॒यं वा उ॒त्तान॒

आङ्गीरसः। अनयैवैन त्प्रति गृह्णाति। नैनं॰ हिनस्ति। बर्हिषा प्रतीया द्गाँ वाऽश्वँ वा। एतद्वै पशूनां प्रिय न्धाम। प्रियेणैवैन न्धाम्ना प्रत्येति।। 8।। (विग्राह मृतव स्तदाऽलभतेऽन्द्र ङ्गृह्णीयात्षद्व। 2।)

☸❀ यो वा अविद्वा न्निवर्तयते। विशीर्षा स पाप्माऽमुष्मि न्लोके भवति। अथ यो विद्वा न्निवर्तयते। सशीर्षा विपाप्माऽमुष्मिन्लोके भवति। देवता वै सप्त पुष्टिकामा न्यवर्तयन्त। अग्निश्च पृथिवी च। वायु श्चान्तरिक्षञ्च। आदित्यश्च द्यौश्च चन्द्रमाः। अग्नि र्न्यवर्तयत। स साहस्र मपुष्यत्।। 9।।❀ पृथिवी न्यवर्तयत। सौषधीभि र्वनस्पतिभि रपुष्यत्। वायु र्न्यवर्तयत। स मरीचीभि रपुष्यत्। अन्तरिक्ष न्न्यवर्तयत। तद्वयोभि रपुष्यत्। आदित्यो न्यवर्तयत। स रश्मिभि रपुष्यत्। द्यौर्न्यवर्तयत। सा नक्षत्रै रपुष्यत्। चन्द्रमा न्यवर्तयत। सोऽहोरात्रै रर्धमासै र्मासैर् ऋतुभि स्सँवथ्सरेणापुष्यत्। तान्पोषा न्पुष्यति। या॰स्तेऽपुष्यन्न्। य एवँ विद्वा न्नि च वर्तयते परि च।। 10।। (अपुष्य न्नक्षत्रै रपुष्य त्पञ्च च। 3।)

☸❀ तस्य वा अग्नेर् हिरण्यं प्रतिजग्रहुषः। अर्ध मिन्द्रियस्यापाक्रामत्। तदेतेनैव प्रत्यगृह्णात्। तेन वै सोऽर्ध मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्त। अर्ध मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्ते। य एवँ विद्वान् हिरण्यं प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। अर्ध मस्येन्द्रियस्याप क्रामति। तस्य वै सोमस्य वासः॰ प्रतिजग्रहुषः। तृतीय मिन्द्रियस्यापाक्रामत्।। 11।।❀ तदेतेनैव प्रत्यगृह्णात्। तेन वै स तृतीय मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्त। तृतीय मिन्द्रियस्याऽऽत्म न्नुऽऽपाधत्ते। य एवँ विद्वान् वासः॰ प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। तृतीय मस्येन्द्रियस्याप क्रामति। तस्य वै रुद्रस्य गां प्रतिजग्रहुषः। चतुर्थ मिन्द्रियस्यापाक्रामत्। तामेतेनैव प्रत्यगृह्णात्। तेन वै स चतुर्थ मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्त।। 12।।❀ चतुर्थ मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्ते। य एवँ विद्वान्गां प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। चतुर्थ मस्येन्द्रियस्याप क्रामति। तस्य वै वरुणस्याश्वं प्रतिजग्रहुषः। पञ्चम मिन्द्रियस्यापाक्रामत्। तमेतेनैव प्रत्यगृह्णात्। तेन वै स पञ्चम मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्त। पञ्चम मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्ते। य एवँ विद्वा नश्वं प्रतिगृह्णाति।। 13।।❀ अथ योऽविद्वान् प्रतिगृह्णाति। पञ्चम मस्येन्द्रियस्याप क्रामति। तस्य वै प्रजापतेः॰ पुरुषं प्रतिजग्रहुषः। षष्ठ मिन्द्रियस्यापाक्रामत्। तमेतेनैव प्रत्यगृह्णात्। तेन वै स षष्ठ

मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्त। षष्ठ मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्ते। य एवँ विद्वा न्पुरुषं प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। षष्ठ मस्येन्द्रियस्याप क्रामति।। 14।।❀ तस्य वै मनो स्तल्पं प्रतिजग्रहुषः। सप्तम मिन्द्रियस्यापाक्रामत्। तमेतेनैव प्रत्यगृह्णात्। तेन वै स सप्तम मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्त। सप्तम मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्ते। य एवँ विद्वाꣳ स्तल्पं प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। सप्तम मस्येन्द्रियस्याप क्रामति। तस्य वा उत्तानस्याङ्गीरसस्याप्राण त्प्रतिजग्रहुषः। अष्टम मिन्द्रियस्यापाक्रामत्।। 15।।❀ तदेतेनैव प्रत्यगृह्णात्। तेन वै सोऽष्टम मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्त। अष्टम मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्ते। य एवँ विद्वा नप्राणत्प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। अष्टम मस्येन्द्रियस्याप क्रामति। यद्वा इदङ्किञ्च। तथ्सर्वमुत्तान एवाङ्गीरसः प्रत्यगृह्णात्। तदेनं प्रतिगृहीत न्नाहिनत्। यत्किञ्च प्रतिगृह्णीयात्। तथ्सर्व मुत्तान स्त्वाऽङ्गीरसः प्रति गृह्णा त्वित्येव प्रति गृह्णीयात्। इयँ वा उत्तान आङ्गीरसः। अनयैवैन त्प्रतिगृह्णाति। नैनꣳ हिनस्ति।। 16।।
(तृतीय मिन्द्रियस्यापाक्राम च्चतुर्थ मिन्द्रियस्याऽऽत्म न्नुपाऽऽधत्ताश्वं प्रतिगृह्णाति षष्ठ मस्येन्द्रियस्याप क्रामत्यष्टम मिन्द्रियस्यापाक्राम त्प्रतिगृह्णीया च्चत्वारि च। 4।)
(तस्य वा अग्नेर् हिरण्यꣳ सोमस्य वास स्तदेतेन, रुद्रस्य गा न्तामेतेन, वरुणस्याश्वं प्रजापतेः पुरुषं मनो स्तल्प न्तमेते,नोत्तानस्य तदेतेनाप्राण द्यद्वै। अर्ध न्तृतीय मष्टम न्तच्चतुर्थ न्तां पञ्चमꣳ षष्ठꣳ सप्तम न्तम्। तदेतेन द्वे तामेतेनैक न्तमेतेन त्रीणि तदेतेनैकम्। )

❀ ब्रह्मवादिनो वदन्ति।

卐 यद्दशहोतार स्सत्रमासत। केन ते गृहपतिनाऽऽर्ध्नुवन्न्। केन प्रजा असृजन्ते-ति।। 卐 प्रजापतिना वै ते गृहपतिनाऽऽर्ध्नुवन्न्। तेन प्रजा असृजन्त।

卐 यच्चतुर्होतार स्सत्र मासत। केन ते गृहपतिनाऽऽर्ध्नुवन्न्। केनौषधी रसृजन्ते-ति।।

卐 सोमेन वै ते गृहपतिनाऽऽर्ध्नुवन्न्।। 17।।❀ तेनौषधी रसृजन्त।

卐 यत्पञ्चहोतार स्सत्रमासत। केन ते गृहपतिनाऽऽर्ध्नुवन्न्। केनैभ्यो लोकेभ्योऽसुरा न्प्राणुदन्त। केनैषां पशू नवृञ्जते-ति।।

卐 अग्निना वै ते गृहपतिनाऽऽर्ध्नुवन्न्। तेनैभ्यो लोकेभ्योऽसुरा न्प्राणुदन्त। तेनैषां पशू नवृञ्जत।

卐 यथ्षड्ढोतार स्सत्र मासत। केन ते गृहपतिनाऽर्ध्नुवन्न्।। 18।। ❀ केनर्तू नकल्पयन्ते-ति।।
卐 धात्रा वै ते गृहपतिनाऽर्ध्नुवन्न्। तेनर्तू नकल्पयन्त।
卐 यथ्सप्तहोतार स्सत्र मासत। केन ते गृहपतिनाऽर्ध्नुवन्न्। केन सुवरायन्न्। केनेमा न्लोका न्थ्समतन्व-न्निति।
卐 अर्यम्णा वै ते गृहपतिनाऽर्ध्नुवन्न्। तेन सुवरायन्न्। तेनेमा न्लोका न्थ्समतन्व-न्निति।। 19।।
❀ एते वै देवा गृहपतयः। तान् य एवँ विद्वान्। अप्यन्यस्य गारहपते दीक्षते। अवान्तरमेव सत्रिणा मृध्नोति। यो वा अर्यमणँ वेद। दानकामा अस्मै प्रजा भवन्ति। यज्ञो वा अर्यमा। आर्याऽवसतिरिति वै तमाहु र्यं प्रशꣳसन्ति। आर्याऽवसति र्भवति। य एवँ वेद।। 20।। ❀ यद्वा इदङ्किञ्च। तथ्सर्व ञ्चतुरहोतारः। चतुरहोतृभ्योऽधि यज्ञो निर्मितः। स य एवँ विद्वान् विवदेत। अह मेव भूयो वेद। यश्चतुरहोतृन् वेदेति। स ह्येव भूयो वेद। यश्चतुरहोतृन् वेद। यो वै चतुरहोतृणाꣳ होतृन् वेद। सर्वासु प्रजास्वन्न मत्ति।। 21।। ❀ सर्वा दिशोऽभि जयति। प्रजापतिर्वै दशहोतृणाꣳ होता। सोम श्चतुरहोतृणाꣳ होता। अग्निः पञ्चहोतृणाꣳ होता। धाता षड्ढोतृणाꣳ होता। अर्यमा सप्त होतृणाꣳ होता। एते वै चतुरहोतृणाꣳ होतारः। तान् य एवँ वेद। सर्वासु प्रजास्वन्न मत्ति। सर्वा दिशोऽभि जयति।। 22।। (आर्ध्नुव न्नार्ध्नुव न्नित्येवँ वेदात्ति सर्वा दिशोऽभि जयति। 5। वै तेन सत्रङ्केन।)
❀ प्रजापतिः प्रजा स्सृष्ट्वा व्यस्रꣳसत। स हृदयं भूतोऽशयत्। आत्मन् हा '3' इत्यह्वयत्। आपः प्रत्यश्रृण्वन्न्। ता अग्निहोत्रेणैव यज्ञक्रतुनोप पर्यावर्तन्त। ताः कुसिन्ध मुपौहन्न्। तस्मा दग्निहोत्रस्य यज्ञक्रतोः। एक ऋत्विक्। चतुष्कृत्वोऽह्वयत्। अग्नि र्वायु रादित्य श्चन्द्रमाः।। 23।। ❀ ते प्रत्यश्रृण्वन्न्। ते दरशपूर्णमासाभ्या मेव यज्ञक्रतुनोप पर्यावर्तन्त। त उपौहꣳ श्चत्वार्यङ्गानि। तस्मा द्दरशपूर्णमासयो र्यज्ञक्रतोः। चत्वार ऋत्विजः। पञ्चकृत्वोऽह्वयत्। पशवः प्रत्यश्रृण्वन्न्। ते चातुर्मास्यै रेव यज्ञक्रतुनोप पर्यावर्तन्त। त उपौह न्लोमछवीं माꣳस मस्थि मज्जानम्। तस्मा च्चातुर्मास्यानाँ यज्ञक्रतोः।। 24।। ❀ पञ्चर्त्विजः। षड्कृत्वोऽह्वयत्। ऋतवः प्रत्यश्रृण्वन्न्। ते पशुबन्धेनैव यज्ञक्रतुनोप पर्यावर्तन्त। त उपौह'2'न्थ्स्तना वाण्डौ शिश्ञ मवाञ्चं प्राणम्। तस्मा त्पशुबन्धस्य यज्ञक्रतोः। षड्वृत्विजः। सप्तकृत्वोऽह्वयत्। होत्राः प्रत्यश्रृण्वन्न्। ता

स्सौम्येनैवाध्वरेण यज्ञक्रतुनोप पर्यावर्तन्त।। 25।। ❀ ता उपौह'2'न्थ्सप्त शीर्षण्या न्प्राणान्।
तस्मा थ्सौम्यस्याध्वरस्य यज्ञक्रतोः। सप्त होत्राः प्राची वषट्कुर्वन्ति। दशकृत्वोऽह्वयत्। तपः
प्रत्यश्रृणोत्। तत्कर्मणैव सँवथ्सरेण सर्वौ यज्ञक्रतुभि रुप पर्यावर्तत। तथ्सर्व मात्मान मपरिवर्ग
मुपौहत्। तस्माथ्सँवथ्सरे सर्वे यज्ञक्रतवोऽवरुध्यन्ते। तस्मा द्दशहोता चतुर्होता। पञ्चहोता
षड्ढोता सप्तहोता। एकहोत्रे बलिꣳ हरन्ति। हरन्त्यस्मै प्रजा बलिम्। ऐन मप्रतिख्यातङ्गच्छति। य
एवँ वेद।। 26।। (चन्द्रमा श्चातुर्मास्यानाँ यज्ञक्रतो रध्वरेण यज्ञक्रतुनोप पर्यावर्तन्त सप्तहोता
चत्वारि च। 6।)

❀ प्रजापतिः पुरुष मसृजत। सोऽग्नि रब्रवीत्। ममाय मन्न मस्त्विति। सोऽबिभेत्। सर्वँ वै
माऽयं प्रधक्ष्यतीति। स एताꣳ श्चतुर्होतृ नात्मस्परणा नपश्यत्। तानजुहोत्। तैर्वै स आत्मान
मस्पृणोत्। यदग्निहोत्र ञ्जुहोति। एकहोतार मेव तद्यज्ञक्रतु माप्नो त्यग्निहोत्रम्।। 27।। ❀ कुसिन्ध
ञ्चाऽऽत्मन स्स्पृणोति। आदित्यस्य च सायुज्यङ्गच्छति। चतु रुन्नयति। चतुर्होतारमेव तद्यज्ञक्रतु
माप्नोति दर्शपूर्णमासौ। चत्वारि चाऽऽत्मनोऽङ्गानि स्पृणोति। आदित्यस्य च सायुज्य ङ्गच्छति।
चतु रुन्नयति। समि त्पञ्चमी। पञ्चहोतार मेव तद्यज्ञक्रतु माप्नोति चातुर्मास्यानि। लोम छवीं
माꣳस मस्थि मज्जानम्।। 28।। ❀ तानि चाऽऽत्मन स्स्पृणोति। आदित्यस्य च
सायुज्यङ्गच्छति। चतु रुन्नयति। द्विर्जुहोति। षड्ढोतार मेव तद्यज्ञक्रतु माप्नोति पशुबन्धम्। स्तना
वाण्डौ शिश्ञ्ञ मवाञ्चं प्राणम्। तानि चाऽऽत्मन स्स्पृणोति। आदित्यस्य च सायुज्यङ्गच्छति। चतु
रुन्नयति। द्विर्जुहोति।। 29।। ❀ समिथ्सप्तमी। सप्तहोतार मेव तद्यज्ञक्रतु माप्नोति सौम्य
मध्वरम्। सप्त चाऽऽत्मन श्शीर्षण्या न्प्राणान्थ्स्पृणोति। आदित्यस्य च सायुज्य ङ्गच्छति। चतु
रुन्नयति। द्विर्जुहोति। द्विर्निमार्ष्टि। द्विः प्राश्ञाति। दशहोतार मेव तद्यज्ञक्रतु माप्नोति सँवथ्सरम्।
सर्वञ्चाऽऽत्मान मपरिवर्गꣳ स्पृणोति। आदित्यस्य च सायुज्यङ्गच्छति।। 30।। (अग्निहोत्रं
मज्जान न्द्विर्जुहो त्यपरिवर्गꣳ स्पृणो त्येकञ्च। 7।)

❀ प्रजापति रकामयत प्र जायेयेति। स तपोऽतप्यत। सोऽन्तर्वा नभवत्। स
हरितश्यावोऽभवत्। तस्मा थ्स्त्र्यन्तर्वत्नी। हरिणी सती श्यावा भवति। स विजायमानो
गर्भेणाताम्यत्। स तान्तः कृष्ण श्श्यावोऽभवत्। तस्मात्तान्तः कृष्ण श्श्यावो भवति। तस्यासु

रेवाजीवत्।। 31।। ❀ तेनासुनाऽसुरा नसृजत। तदसुराणा मसुरत्वम्। य एव मसुराणा मसुरत्वँ वेद। असुमानेव भवति। नैन मसु र्जहाति। सोऽसुरान्थ्सृष्ट्वा पितेवामन्यत। तदनु पितृ नसृजत। तत्पितृणां पितृत्वम्। य एवं पितृणां पितृत्वँ वेद। पितेवैव स्वानां भवति।। 32।। ❀ यन्त्यस्य पितरो हवम्। स पितृ न्थ्सृष्ट्वाऽमनस्यत्। तदनु मनुष्या नसृजत। तन्मनुष्याणां मनुष्यत्वम्। य एवं मनुष्याणां मनुष्यत्वँ वेद। मनस्व्येव भवति। नैनं मनु र्जहाति। तस्मै मनुष्या न्थ्ससृजानाय। दिवा देवत्राऽभवत्। तदनु देवा नसृजत। तद्देवाना न्देवत्वम्। य एव न्देवाना न्देवत्वँ वेद। दिवा हैवास्य देवत्रा भवति। तानि वा एतानि चत्वार्यम्भाꣳसि। देवा मनुष्याः पितरोऽसुराः। तेषु सर्वेष्वम्भो नभ इव भवति। य एवँ वेद।। 33।। (अजीवथ्स्वानां भवति देवा नसृजत सप्त च। 8।)

❀ ब्रह्मवादिनो वदन्ति। यो वा इमँ विद्यात्। यतोऽयं पवते। यदभिपवते। यदभिसम्पवते। सर्व मायु रियात्। न पुराऽऽयुषः प्र मीयेत। पशुमान्थ्स्यात्। विन्देत प्रजाम्। यो वा इमँ वेद।। 34।। ❀ यतोऽयं पवते। यदभिपवते। यदभिसम्पवते। सर्व मायुरेति। न पुराऽऽयुषः प्र मीयते। पशुमा न्भवति। विन्दते प्रजाम्। अद्भ्यः पवते। अपोऽभि पवते। अपोऽभि सं पवते।। 35।। ❀ अस्याः पवते। इमा मभि पवते। इमा मभि सं पवते। अग्नेः पवते। अग्नि मभि पवते। अग्नि मभि सं पवते। अन्तरिक्षा त्पवते। अन्तरिक्ष मभि पवते। अन्तरिक्ष मभि सं पवते। आदित्या त्पवते।। 36।। ❀ आदित्य मभि पवते। आदित्य मभि सं पवते। द्योः पवते। दिव मभि पवते। दिव मभि सं पवते। दिग्भ्यः पवते। दिशोऽभि पवते। दिशोऽभि सं पवते। स यत्पुरस्ताद्वाति। प्राण एव भूत्वा पुरस्ताद्वाति।। 37।। ❀ तस्मा त्पुरस्ता द्वान्तम्। सर्वाः प्रजाः प्रति नन्दन्ति। प्राणो हि प्रियः प्रजानाम्। प्राण इव प्रियः प्रजानां भवति। य एवँ वेद। स वा एष प्राण एव। अथ यद्दक्षिणतो वाति। मातरिश्वैव भूत्वा दक्षिणतो वाति। तस्मा द्दक्षिणतो वान्तँ विद्यात्। सर्वा दिश आ वाति।। 38।। ❀ सर्वा दिशोऽनु वि वाति। सर्वा दिशोऽनु सँवातीति। स वा एष मातरिश्वैव। अथ यत्पश्चाद्वाति। पवमान एव भूत्वा पश्चाद्वाति। पूत मस्मा आ हरन्ति। पूत मुप हरन्ति। पूतमश्नाति। य एवँ वेद। स वा एष पवमान एव।। 39।। ❀ अथ यदुत्तरतो वाति। सवितैव भूत्वोत्तरतो वाति। सवितेव स्वानां भवति। य एवँ वेद। स वा एष सवितैव। ते य एनं पुरस्ता

दायन्त मुपवदन्ति। य एवास्य पुरस्ता त्पाप्मानः। ता॒स्तेऽप घ्नन्ति। पुरस्ता दितरा न्पाप्मन स्सचन्ते। अथ य एन न्दक्षिणत आयन्त मुपवदन्ति।। 40।। ❀ य एवास्य दक्षिणतः॑ पाप्मानः। ता॒स्तेऽप घ्नन्ति। दक्षिणत इतरा न्पाप्मन स्सचन्ते। अथ य एनं पश्चा दायन्त मुपवदन्ति। य एवास्य पश्चा त्पाप्मानः। ता॒स्तेऽप घ्नन्ति। पश्चा दितरा न्पाप्मन स्सचन्ते। अथ य एन मुत्तरत आयन्त मुपवदन्ति। य एवास्योत्तरतः॑ पाप्मानः। ता॒स्तेऽप घ्नन्ति।। 41।। ❀ उत्तरत इतरा न्पाप्मन स्सचन्ते। तस्मादेवँ विद्वान्। वीव नृत्येत्। प्रेव चलेत्। व्यस्येवाक्ष्यौ भाषेत। मण्टयेदिव। क्राथयेदिव। शृङ्गायेतेव। उत मोप वदेयुः। उत मे पाप्मान मप हन्युरिति। स या न्दिश॒ सनि मेष्य'2'न्थ्स्यात्। यदा तान्दिशँ वातो वायात्। अथ प्र वेयात्। प्र वा धावयेत्। सातमेव रदितँ व्यूढङ्गन्ध मभि प्र च्यवते। आऽस्य त ञ्जनपदं पूर्वा कीर्ति र्गच्छति। दानकामा अस्मै प्रजा भवन्ति। य एवँ वेद।। 42।। (वेद् सं पवत आदित्या त्पवते वात्या वात्येष पवमान एव दक्षिणत आयन्त मुपवद न्त्युत्तरतः॑ पाप्मान स्ता॒स्तेऽप घ्नन्तीत्यष्टौ च। 9।)

❀ प्रजापति स्सोम॒ राजान मसृजत। तन्त्रयो वेदा अन्वसृज्यन्त। तान् हस्तेऽकुरुत। अथ ह सीता सावित्री। सोम॒ राजानञ्चकमे। श्रद्धामु स चकमे। सा ह पितरं प्रजापति मुपससार। त॒ होवाच। नमस्ते अस्तु भगवः। उप त्वाऽऽयानि।। 43।। ❀ प्र त्वा पद्ये। सोमँ वै राजानङ्कामये। श्रद्धा मु स कामयत इति। तस्या उ ह स्थागर मलङ्कार कल्पयित्वा। दशहोतारँ पुरस्ताद्व्याख्याय। चतुर्होतार न्दक्षिणतः। पञ्चहोतारं पश्चात्। षड्ढोतार मुत्तरतः। सप्तहोतार मुपरिष्टात्। सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य।। 44।। ❀ आऽस्याधँ वव्राज। ता॒ होदीक्ष्योवाच। उप माऽऽवर्तस्वेति। त॒ होवाच। भोग न्तु म आ चक्ष्व। एतन्म आ चक्ष्व। यत्ते पाणाविति। तस्या उ ह त्रीन् वेदा न्प्रददौ। तस्मा दु ह स्त्रियो भोगमैव हारयन्ते। स यः॑ कामयेत प्रिय स्स्यामिति।। 45।। ❀ यँ वा कामयेत प्रिय स्स्यादिति। तस्मा एत॒ स्थागर मलङ्कारङ्कल्पयित्वा। दशहोतारं पुरस्ताद्व्याख्याय। चतुर्होतार न्दक्षिणतः। पञ्चहोतारं पश्चात्। षड्ढोतार मुत्तरतः। सप्तहोतार मुपरिष्टात्। सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य। आऽस्याधँ व्रजेत्। प्रियो हैव भवति।। 46।। (अया न्यलङ्कृत्य स्यामिति भवति। 10।)

ब्रह्मा॑ऽऽत्मन्व॑ दसृजत। तद॑कामयत। समा॒त्मना॑ पद्ये॒येति॑। आत्म॒ न्नात्म॒ न्नित्या॑ऽमन्त्रयत। तस्मै॑ दश॒मꣳ हूतः॑ प्रत्य॑शृणोत्। स दश॑हूतोऽभवत्। दश॑हूतो ह॒ वै नामै॒षः। तँ वा ए॒त न्दश॑हूत॒ꣳ सन्त॑म्। दश॑होते॒त्या च॑क्षते प॒रोऽक्षे॑ण। प॒रोऽक्ष॑प्रिया इव॒ हि दे॒वाः।। 47।। आत्म॒ न्नात्म॒ न्नित्या॑ऽमन्त्रयत। तस्मै॑ सप्त॒मꣳ हूतः॑ प्रत्य॑शृणोत्। स स॒प्तहू॑तोऽभवत्। स॒प्तहू॑तो ह॒ वै नामै॒षः। तँ वा ए॒तꣳ स॒प्तहू॑त॒ꣳ सन्त॑म्। स॒प्तहो॑ते॒त्या च॑क्षते प॒रोऽक्षे॑ण। प॒रोऽक्ष॑प्रिया इव॒ हि दे॒वाः। आत्म॒ न्नात्म॒ न्नित्या॑ऽमन्त्रयत। तस्मै॑ ष॒ष्ठꣳ हूतः॑ प्रत्य॑शृणोत्। स षड्ढू॑तोऽभवत्।। 48।। षड्ढू॑तो ह॒ वै नामै॒षः। तँ वा ए॒तꣳ षड्ढू॑त॒ꣳ सन्त॑म्। षड्ढो॑ते॒त्या च॑क्षते प॒रोऽक्षे॑ण। प॒रोऽक्ष॑प्रिया इव॒ हि दे॒वाः। आत्म॒ न्नात्म॒ न्नित्या॑ऽमन्त्रयत। तस्मै॑ पञ्च॒मꣳ हूतः॑ प्रत्य॑शृणोत्। स पञ्च॑हूतोऽभवत्। पञ्च॑हूतो ह॒ वै नामै॒षः। तँ वा ए॒तं पञ्च॑हूत॒ꣳ सन्त॑म्। पञ्च॑हो॒ते॒त्या च॑क्षते प॒रोऽक्षे॑ण।। 49।। प॒रोऽक्ष॑प्रिया इव॒ हि दे॒वाः। आत्म॒ न्नात्म॒ न्नित्या॑ऽमन्त्रयत। तस्मै॑ चतु॒र्थꣳ हूतः॑ प्रत्य॑शृणोत्। स चतु॑र्हूतोऽभवत्। चतु॑र्हूतो ह॒ वै नामै॒षः। तँ वा ए॒त ञ्चतु॑र्हूत॒ꣳ सन्त॑म्। चतु॑र्होते॒त्या च॑क्षते प॒रोऽक्षे॑ण। प॒रोऽक्ष॑प्रिया इव॒ हि दे॒वाः। तम॑ब्रवीत्। त्वँ वै मे॒ नेदि॑ष्ठꣳ हूतः॑ प्रत्य॑श्रौषीः। त्वयै॑ना नाख्याता॒र इति॑। तस्मा॒ न्नु हैना॒ꣳ श्चतु॑र्होता॒र इत्या च॑क्षते। तस्मा॑च्छुश्रू॒षुः पु॒त्राणा॒ꣳ हृद्य॑तमः। नेदि॑ष्ठो हृद्य॑तमः। नेदि॑ष्ठो॒ ब्रह्म॑णो भवति। य ए॒वँ वेद॑।। 50।। (दे॒वा ष्षड्ढू॑तोऽभव॒ त्पञ्च॑हो॒ते॒त्या च॑क्षते प॒रोक्षे॑णाश्रौषी ष्षट्च॑। 11।)

(ब्र॒ह्म॒वा॒दिनः॑ किन्द॑क्षिणाँ यो वा अवि॑द्वा न्त॒स्य॒ वै ब्र॑ह्मवादि॒नो यद्द॑शहोतारः॑ प्र॒जाप॑ति॒ र्व्य॑स्त्रं प्र॒जाप॑तिः॒ पुरु॑षं प्र॒जाप॑ति रकामय॒त स तप॒ स्सोऽन्त॑र्वा न्ब्र॑ह्मवादि॒नो यो वा इ॒मँ वि॒द्या त्प्र॒जाप॑ति॒ स्सोम॒ꣳ राजा॑नं ब्रह्मा॑ऽऽत्मन्व॒ दे॑कादश। 11। ब्र॒ह्म॒वा॒दि॒न॒ स्तस्य॒ वा अ॒ग्ने र्य॑द्वा इ॒दङ्कि॑ञ्च प्र॒जाप॑ति रकामय॒त य ए॒वास्य॑ दक्षि॒ण॒तः पञ्चा॑शत्। 50। ब्र॒ह्म॒वा॒दि॒नो य ए॒वँ वेद॑।)

## द्वितीयाष्टके चतुर्थः प्रपाठकः

### वै।का। 1उपहोम मन्त्राः 8(अष्टावनुवाका: 8)

ॐ जुष्टो॒ दमू॑ना॒ अति॑थि र्दुरो॒णे। इ॒मन्नो॑ य॒ज्ञ मुप॑ याहि वि॒द्वान्। विश्वा॑ अग्नेऽभि॒युजो॑ वि॒हत्य॑। श॒त्रू॒य॒ता माभ॑रा॒ भोज॑नानि।।

卐 अग्ने शर्ध महते सौभगाय। तव द्युम्ना न्युत्तमानि सन्तु। सञ्जास्पत्यꣳ सुयम मा कृणुष्व। शत्रूयता मभि तिष्ठा महाꣳसि।।

卐 अग्ने यो नोऽभितो जनः। वृको वारो जिघाꣳसति।। 1।।❀ ताꣳस्त्वँ वृत्रह न्जहि। वस्वस्मभ्य मा भर।।

卐 अग्ने यो नोऽभिदासति। समानो यश्च निष्ट्यः। इध्मस्येव प्रक्षायतः। मा तस्योच्छेषि किञ्चन।।

卐 त्वमिन्द्राभिभू रसि। देवो विज्ञातवीर्यः। वृत्रहा पुरुचेतनः।।

卐 अप प्राच इन्द्र विश्वाꣳ अमित्रान्।। 2।।❀ अपापाचो अभिभूते नुदस्व। अपोदीचो अप शूराधराच ऊरौ। यथा तव शर्म न्मदेम।।

卐 तमिन्द्रँ वाजयामसि। महे वृत्राय हन्तवे। स वृषा वृषभोऽभुवत्।।

卐 युजे रथ ङ्गवेषणꣳ हरिभ्याम्। उप ब्रह्माणि जुजुषाण मस्थुः। विबाधिष्टास्य रोदसी महित्वा। इन्द्रो वृत्राण्यप्रती जघन्वान्।। 3।।

❀ 卐 हव्यवाह मभिमातिषाहम्। रक्षोहणं पृतनासु जिष्णुम्। ज्योतिष्मन्त न्दीद्यतं पुरन्धिम्। अग्निꣳ स्विष्टकृत माहुवेम।।

卐 स्विष्टमग्ने अभि तत्पृणाहि। विश्वा देव पृतना अभिष्य। उरुन्नः पन्थां प्रदिशन्विभाहि। ज्योतिष्म द्धेह्यजरन्न आयुः।।

卐 त्वामग्ने हविष्मन्तः। देवं मर्तास ईडते।। 4।।❀ मन्ये त्वा जातवेदसम्। स हव्यावक्ष्यानुषक्।।

卐 विश्वानि नो दुर्गहा जातवेदः। सिन्धुन्न नावा दुरिताऽति पर्षि। अग्ने अत्रिव न्मनसा गृणानः। अस्माकं बोध्यविता तनूनाम्।।

卐 पूषा गा अन्वेतु नः। पूषा रक्ष त्वर्वतः। पूषा वाजꣳ सनोतु नः।।

卐 पूषेमा आशा अनु वेद सर्वाः।।5।।❀ सो अस्माꣳ अभयत मेन नेषत्। स्वस्तिदा अघृणि स्सर्ववीरः। अप्रयुच्छ न्पुर एतु प्रजानन्न्।।

卐 त्वमग्ने सप्रथा असि। जुष्टो होता वरेण्यः। त्वया यज्ञँ वि तन्वते।।

卐 अग्नी रक्षाꣳसि सेधति। शुक्रशोचि रमर्त्यः। शुचिः पावक ईड्यः।।

卐 अग्ने रक्षाणो अꣳहसः।। 6।। ❀ प्रतिष्म देव रीषतः। तपिष्ठै रजरो दह।।
卐 अग्ने हꣳसि न्यत्त्रिणम्। दीद्य न्मर्त्येष्वा। स्वे क्षये शुचिव्रत।।
卐 आ वात वाहि भेषजम्। वि वात वाहि यद्रपः। त्वꣳ हि विश्वभेषजः। देवाना न्दूत ईयसे।।
卐 द्वाविमौ वातौ वातः।। 7।। ❀ आ सिन्धो रा परावतः। दक्षं मे अन्य आवातु। पराऽन्यो वातु यद्रपः।।
卐 यददो वात ते गृहे। अमृतस्य निधिर् हितः। ततो नो देहि जीवसे। ततो नो धेहि भेषजम्। ततो नो मह आ वह।।
卐 वात आ वातु भेषजम्। शम्भू मयोभू नों हृदे।। 8।। ❀ प्र ण आयूꣳषि तारिषत्।।
卐 त्वमग्ने अयासि। अया सन्मनसा हितः। अया सन् हव्य मूहिषे। अया नो धेहि भेषजम्।।
卐 इष्टो अग्नि राहुतः। स्वाहाकृतꠂ पिपर्तु नः। स्वगा देवेभ्य इद न्नमः।।
卐 कामो भूतस्य भव्यस्य। सम्राडेको विराजति।। 9।। ❀ स इदं प्रति पप्रथे। ऋतू नुथ्सृजते वशी।।
卐 काम स्तदग्रे समवर्तताधि। मनसो रेतꠂ प्रथमँ यदासीत्। सतो बन्धु मसति निरविन्दन्न्। हृदि प्रतीष्या कवयो मनीषा।।
卐 त्वया मन्यो सरथ मारुजन्तः। हर्षमाणासो धृषता मरुत्वः। तिग्मेषव आयुधा सꣳशिशानाः। उप प्रयन्ति नरो अग्निरूपाः।। 10।।
❀ 卐 मन्यु र्भगो मन्यु रेवाऽऽस देवः। मन्युर् होता वरुणो विश्ववेदाः। मन्युँ विश ईडते देवयन्तीः। पाहि नो मन्यो तपसा श्रमेण।।
卐 त्वमग्ने व्रतभृ च्छुचिः। देवाꣳ आ सादया इह। अग्ने हव्याय वोढवे।।
卐 व्रता नु बिभ्रद्व्रतपा अदाभ्यः। यजानो देवाꣳ अजर स्सुवीरः। दध द्रत्नानि सुविदानो अग्ने। गोपाय नो जीवसे जातवेदः।। 11।। (जिघाꣳसत्यमित्रा न्जघन्वा नीडते सर्वा अꣳहसो वातो हृदे राज त्यग्निरूपा स्सुविदानो अग्न एकञ्च। 1।)
❀ 卐 चक्षुषो हेते मनसो हेते। वाचो हेते ब्रह्मणो हेते। यो माऽघायु रभिदासति। तमग्ने मेन्या मेनि ङ्कृणु।।

卐 यो मा चक्षुषा यो मनसा। यो वाचा ब्रह्मणाऽघायु रभिदासति। तयाऽग्ने त्वं मेन्या। अमु मम्मेनिङ्कृणु।।

卐 यत्किञ्चासौ मनसा यच्च वाचा। यज्ञै र्जुहोति यजुषा हविर्भिः।। 12।। ❀ तन्मृत्यु र्निरृत्या सँविदानः। पुरा दिष्टा दाहुती रस्य हन्तु।।

卐 यातुधाना निरृतिति रादु रक्षः। ते अस्य घ्नन्त्वनृतेन सत्यम्। इन्द्रेषिता आज्य मस्य मथ्नन्तु। मा तथ्समृद्धि यदसौ करोति।।

卐 हन्मि तेऽहङ्कृत॰ हविः। यो मे घोर मचीकृतः। अपाञ्चौ त उभौ बाहू। अप नह्या म्यास्यम्।। 13।।

❀ 卐 अप नह्यामि ते बाहू। अप नह्या म्यास्यम्। अग्ने र्देवस्य ब्रह्मणा। सर्वन्तेऽवधिष ङ्कृतम्।।

卐 पुराऽमुष्य वषट्कारात्। यज्ञ न्देवेषु न स्कृधि। स्विष्ट मस्माकं भूयात्। माऽस्मा न्प्राप न्नरातयः।।

卐 अन्ति दूरे सतो अग्ने। भ्रातृव्य.स्याभिदासतः।। 14।। ❀ वषट्कारेण वज्रेण। कृत्या॰ हन्मि कृता महम्।।

卐 यो मा नक्त न्दिवा सायम्। प्रातश्चाह्नो निपीयति। अद्या तमिन्द्र वज्रेण। भ्रातृव्यं पादयामसि।।

卐 इन्द्रस्य गृहोऽसि तन्त्वा। प्र पद्ये सगु स्साश्वः। सह यन्मे अस्ति तेन।।

卐 ईडे अग्निँ विपश्चितम्।। 15।। ❀ गिरा यज्ञस्य साधनम्। श्रुष्टीवान न्धितावानम्।।

卐 अग्ने शकेम ते वयम्। यम न्देवस्य वाजिनः। अति द्वेषा॰सि तरेम।।

卐 अवतं मा समनसौ समोकसौ। सचेतसौ सरेतसौ। उभौ मामवत ञ्जातवेदसौ। शिवौ भवत मद्य नः।।

卐 स्वयङ्कृण्वान स्सुग मप्रयावम्।। 16।। ❀ तिग्मश्शृङ्गो वृषभ श्शोशुचानः। प्रत्न॰ सधस्थ मनु पश्यमानः। आ तन्तु मग्नि र्दिव्य न्ततान।।

卐 त्वन्न स्तन्तु रुत सेतुरग्ने। त्वं पन्था भवसि देवयानः। त्वयाऽग्ने पृष्ठं वय मा रुहेम। अथा देवै स्सधमादं मदेम।।

卐 उदुत्तमं मुमुग्धि नः। वि पाशं मध्यमञ्चृत। अवाधमानि जीवसे।। 17।।
❀ 卐 वय९ सोम व्रते तव। मन स्तनूषु बिभ्रतः। प्रजावन्तो अशीमहि।।
卐 इन्द्राणी देवी सुभगा सुपत्नी। उद९शेन पतिविद्ये जिगाय। त्रि९श दस्या जघनँ योजनानि। उपस्थ इन्द्र९ स्थविरं बिभर्ति।।
卐 सेना ह नाम पृथिवी धनञ्जया। विश्वव्यचा अदिति स्सूर्यत्वक्। इन्द्राणी देवी प्रासहा ददाना।। 18।। ❀ सा नो देवी सुहवा शर्म यच्छतु।।
卐 आ त्वाऽहार्‌ष मन्त रभूः। ध्रुव स्तिष्ठाविचाचलिः। विशस्त्वा सर्वा वाञ्छन्तु। मा त्व द्राष्ट्र मधि भ्रशत्।।
卐 ध्रुवा द्यौ र्ध्रुवा पृथिवी। ध्रुवँ विश्व मिदञ्जगत्। ध्रुवा ह पर्वता इमे। ध्रुवो राजा विशा मयम्।।
卐 इहैवैधि मा व्यथिष्ठाः।। 19।। ❀ पर्वत इवाविचाचलिः। इन्द्र इवेह ध्रुव स्तिष्ठ। इह राष्ट्रमु धारय।।
卐 अभि तिष्ठ पृतन्यतः। अधरे सन्तु शत्रवः। इन्द्र इव वृत्रहा तिष्ठ। अपः~ क्षेत्राणि सञ्जयन्न्।।
卐 इन्द्र एण मदीधरत्। ध्रुव न्ध्रुवेण हविषा। तस्मै देवा अधि ब्रवन्न्। अयञ्च ब्रह्मणस्पतिः।। 20।। (हविर्भि रास्य मभिदासतो विपश्चित मप्रयाव ञ्जीवसे ददाना व्यथिष्ठा ब्रवन्नेकञ्च। 2।)
❀ 卐 जुष्टी नरो ब्रह्मणा वः पितृणाम्। अक्ष मव्यय न्न किला रिषाथ। यच्छक्करीषु बृहता रवेण। इन्द्रे शुष्म मदधाथा वसिष्ठाः।।
卐 पावका न स्सरस्वती। वाजेभि र्वाजिनीवती। यज्ञँ वष्टु धिया वसुः।।
卐 सरस्वत्यभि नो नेषि वस्यः। मा पस्फरीः पयसा मा न आधक्। जुषस्व न स्सख्या वेश्या च।। 21।। ❀ मा त्वत्क्षेत्रा.ण्यरणानि गन्म।।
卐 वृञ्जे हवि र्नमसा बर्‌हि रग्नौ। अयामि स्रुग्घृतवती सुवृक्तिः। अम्यक्षि सद्म सदने पृथिव्याः। अश्रायि यज्ञ स्सूर्ये न चक्षुः।।
卐 इहार्वाञ्च मति ह्वये। इन्द्र ञ्जैत्राय जेतवे। अस्माक मस्तु केवलः।।
卐 अर्वाञ्च मिन्द्र ममुतो हवामहे। यो गोजि द्धनजि दश्वजिद्यः।। 22।। ❀ इमन्नो यज्ञँ विहवे जुषस्व। अस्य कुर्मो हरिवो मेदिनन्त्वा।।

卐 असम्मृष्टो जायसे मातृवो श्शुचिः। मन्द्रः कवि रुदतिष्ठो विवस्वतः। घृतेन त्वा वर्धय न्नग्न आहुत। धूमस्ते केतु रभव द्दिवि श्रितः।।

卐 अग्नि रग्रे प्रथमो देवतानाम्। सँयाताना मुत्तमो विष्णु रासीत्। यजमानाय परिगृह्य देवान्। दीक्षयेद॰ हवि रागच्छतन्नः।। 23।।

❀ 卐 अग्निश्च विष्णो तप उत्तमं महः। दीक्षापालेभ्यो वनत॰ हि शक्रा। विश्वै र्देवै र्यज्ञियै स्सँविदानौ। दीक्षा मस्मै यजमानाय धत्तम्।।

卐 प्र तद्विष्णु स्स्तवते वीर्याय। मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेषु। अधि क्षियन्ति भुवनानि विश्वा।।

卐 नू मर्तो दयते सनिष्यन् यः। विष्णव उरुगायाय दाशत्।। 24।।❀ प्र य स्सत्राचा मनसा यजातै। एतावन्त न्नर्य माविवासात्।।

卐 विचक्रमे पृथिवी मेष एताम्। क्षेत्राय विष्णु र्मनुषे दशस्यन्न्। ध्रुवासो अस्य कीरयो जनासः। उरुक्षिति॰ सुजनिमा चकार।।

卐 त्रिर्देवः पृथिवी मेष एताम्। विचक्रमे शतर्चसं महित्वा। प्र विष्णुरस्तु तवस स्तवीयान्। त्वेषꣳ ह्यस्य स्थविरस्य नाम।। 25।।

❀ 卐 होतार ञ्चित्ररथ मध्वरस्य। यज्ञस्ययज्ञस्य केतु॰ रुशन्तम्। प्रत्यर्धि न्देवस्यदेवस्य मह्ना। श्रिया त्वग्नि मतिथि ञ्जनानाम्।।

卐 आ नो विश्वाभि रूतिभि स्सजोषाः। ब्रह्म जुषाणो हर्यश्व याहि। वरीवृज थ्स्थविरेभि स्सुशिप्र। अस्मे दध द्वृषण॰ शुष्म मिन्द्र।।

卐 इन्द्र स्सुवर्षा जनय न्नहानि। जिगायोशिग्भिः पृतना अभिश्रीः।। 26।।❀ प्रारोचय न्मनवे केतु मह्नाम्। अविन्द ज्ज्योति र्बृहते रणाय।।

卐 अश्विना ववसे निह्वये वाम्। आ नूनँ यात॰ सुकृताय विप्रा। प्रातर्युक्तेन सुवृता रथेन। उपागच्छत मवसाऽऽगतन्नः।।

卐 अविष्ट न्धीष्वश्विना न आसु। प्रजाव द्रेतो अह्वयन्नो अस्तु। आवा न्तोके तनये तूतुजानाः। सुरत्नासो देववीतिङ्गमेम।। 27।।

❀ 卐 त्वꣳ सोम क्रतुभि स्सुक्रतु र्भूः। त्वन्दक्षै स्सुदक्षो विश्ववेदाः। त्वँ वृषा वृषत्वेभि र्महित्वा। द्युम्नेभि र्द्युम्न्यभवो नृचक्षाः।।

卐 अषाढँ युत्सु पृतनासु पप्रिम्। सुवर्षा मफ्स्वाँ वृजनस्य गोपाम्। भरेषुजाꣳ सुक्षितिꣳ सुश्रवसम्। जयन्त न्त्वा मनु मदेम सोम।।

卐 भवा मित्रो न शेव्यो घृतासुतिः। विभूतद्युम्न एवया उ सप्रथाः।। 28।। ❀ अधा ते विष्णो विदुषा चिदृध्यः। स्तोमो यज्ञस्य राध्यो हविष्मतः।।

卐 यः पूर्व्याय वेधसे नवीयसे। सुमज्जानये विष्णवे ददाशति। यो जात मस्य महतो महि ब्रवात्। सेदु श्रवोभि र्युज्य श्चिदभ्यसत्।

卐 तमु स्तोतारः पूर्व्यँ यथा विद ऋतस्य। गर्भꣳ हविषा पिपर्तन। आऽस्य जानन्तो नाम चिद्विवक्तन। बृहत्ते विष्णो सुमतिं भजामहे।। 29।।

❀ 卐 इमा धाना घृतस्नुवः। हरी इहोप वक्षतः। इन्द्रꣳ सुखतमे रथे।।

•卐 एष ब्रह्मा[1]❃ 卐 प्र ते महे। विदथे शꣳसिषꣳ हरी। य ऋत्वियः प्र ते वन्वे❃। वनुषो हर्यतं मदम्।।

卐 इन्द्रो नाम घृत न्न यः। हरिभि श्चारु सेचते। श्रुतो गण आ त्वा विशन्तु।। 30।। ❀ हरिवर्पस ङ्गिरः।।

卐 आ चर्षणिप्रा वृषभो जनानाम्। राजा कृष्टीनां पुरुहूत इन्द्रः। स्तुत श्श्रवस्य न्नवसोप मद्रिक्। युक्त्वा हरी वृषणाऽऽयाह्यर्वाङ्।।

卐 प्र यथ्सिन्धवः प्रसवँ यदायन्न्। आप स्समुद्रꣳ रथ्येव जग्मुः। अतश्चि दिन्द्र स्सदसो वरीयान्। यदीꣳ सोमः पृणाति दुग्धो अꣳशुः।।

卐 ह्वयामसि त्वेन्द्र याह्यर्वाङ्।।31।। ❀ अरन्ते सोम स्तनुवे भवाति। शतक्रतो मादयस्वा सुतेषु। प्रास्माꣳ अव पृतनासु प्र युथ्सु।।

卐 इन्द्राय सोमाः प्रदिवो विदानाः। ऋभु र्येभि र्वृषपर्वा विहायाः। प्रयम्यमाणा न्प्रतिषू गृभाय। इन्द्र पिब वृषधूतस्य वृष्णः।।

---

1

卐 अहेडमान उपयाहि यज्ञम्। तुभ्यं पवन्त इन्दव स्सुतासः। गावो न वज्रि'2'न्थ्स्व मोको अच्छ।। 32।। ❀ इन्द्राऽऽगहि प्रथमो यज्ञियानाम्।।

卐 या ते काकु थ्सुकृता या वरिष्ठा। यया शश्व त्पिबसि मध्व ऊर्मिम्। तया पाहि प्र ते अध्वर्यु रस्थात्। सन्ते वज्रो वर्तता मिन्द्र गव्युः।।

卐 प्रातर्युजा वि बोधय। अश्विना वेह गच्छतम्। अस्य सोमस्य पीतये।।

卐 प्रातर्यावाणा प्रथमा यजध्वम्। पुरा गृध्रा दररुषः पिबाथः। प्रातर् हि यज्ञ मश्विना दधाते। प्र शꣳसन्ति कवयः पूर्वभाजः।।

卐 प्रात र्यजध्व मश्विना हिनोत। न साय मस्ति देवया अजुष्टम्। उतान्यो अस्म द्यजते विचायः। पूर्वः पूर्वो यजमानो वनीयान्।। 33।। (चाश्वजिद्यो गच्छतन्नो दाश न्नामाभिश्री र्गमेम सप्रथा भजामहे विशन्तु याह्यर्वा ङच्छ पिबाथ षड्च। 3।)

❀ 卐 नक्तञ्जाताऽस्योषधे। रामे कृष्णे असिक्नि च। इदꣳ रजनि रजय। किलासं पलितञ्च यत्।।

卐 किलासञ्च पलितञ्च। निरितो नाशया पृषत्। आ न स्वो अश्नुताँ वर्णः। परा श्वेतानि पातय।।

卐 असितन्ते निलयनम्। आस्थान मसित न्तव।। 34।। ❀ असिक्नियस्योषधे। निरितो नाशया पृषत्।।

卐 अस्थिजस्य किलासस्य। तनूजस्य च यत्त्वचि। कृत्यया कृतस्य ब्रह्मणा। लक्ष्म श्वेत मनीनशम्।।

卐 सरूपा नाम ते माता। सरूपो नाम ते पिता। सरूपाऽस्योषधे सा। सरूप मिद ङ्कृधि।। 35।।

❀ 卐 शुनꣳ हुवेम मघवान मिन्द्रम्। अस्मि न्भरे नृतमँ वाजसातौ। शृण्वन्त मुग्र मूतये समथ्सु। घ्नन्तँ वृत्राणि सञ्जित न्धनानाम्।।

卐 धूनुथ द्यां पर्वता न्दाशुषे वसु। नि वो वना जिहते यामनो भिया। कोपयथ पृथिवीं पृश्निमातरः। युधे यदुग्राः पृषती रयुग्ध्वम्।।

卐 प्र वेपयन्ति पर्वतान्। वि विञ्चन्ति वनस्पतीन्।। 36।। ❀ प्रो वारत मरुतो दुर्मदा इव। देवास स्सर्वया विशा।।

卐 पुरुत्रा हि सदृङ्ङसि। विशो विश्वा अनु प्रभु। समत्थ्सु त्वा हवामहे।।

卐 समत्थ्स्वग्नि मवसे। वाजयन्तो हवामहे। वाजेषु चित्रराधसम्।।

卐 सङ्गच्छध्व॰ सँ वदध्वम्। सँ वो मना॰सि जानताम्।। 37।। ❀ देवा भागँ यथा पूर्वे। सञ्जानाना उपाऽसत।।

卐 समानो मन्त्र स्समिति स्समानी। समानं मन स्सह चित्त मेषाम्। समान ङ्केतो अभि स ॰रभध्वम्। सं'2'ज्ञानेन वो हविषा यजामः।।

卐 समानी व आकूतिः। समाना हृदयानि वः। समान मस्तु वो मनः। यथा व स्सुसहाऽसति।। 38।।

❀ 卐 सं'2'ज्ञान न्न स्वैः। सं'2'ज्ञान मरणैः। सं'2'ज्ञान मश्विना युवम्। इहास्मासु नि यच्छतम्।।

卐 सं'2'ज्ञानं मे बृहस्पतिः। सं'2'ज्ञान॰ सविता करत्। सं'2'ज्ञान मश्विना युवम्। इह मह्य न्नि यच्छतम्।।

卐 उपच्छायामिव घृणेः। अगन्म शर्म ते वयम्।। 39।। ❀ अग्ने हिरण्यसन्दृशः।।

卐 अदब्धेभि स्सवितः पायुभिष्ट्वम्। शिवेभि रद्य परि पाहि नो गयम्। हिरण्यजिह्व स्सुविताय नव्यसे। रक्षा माकि र्नो अघश॰स ईशत।।

卐 मदेमदे हि नो ददुः। यूथा गवा मृजुक्रतुः। सङ्गृभाय पुरूशता। उभया हस्त्या वसु। शिशीहि राय आ भर।। 40।।

❀ 卐 शिप्रिन्वाजानां पते। शचीव स्तव द॰सना। आ तू न इन्द्र भाजय। गोष्वश्वेषु शुभ्रुषु। सहस्रेषु तुवीमघ।।

卐 यद्देवा देवहेडनम्। देवास श्चकृमा वयम्। आदित्या स्तस्मान्मा यूयम्। ऋतस्यर्तेन मुञ्चत।।

卐 ऋतस्यर्तेनाऽदित्याः।। 41।। ❀ यजत्रा मुञ्चतेह मा। यज्ञै र्वो यज्ञवाहसः। आशिक्षन्तो न शेकिम।।

卐 मेदस्वता यजमानाः। स्रुचाऽज्येन जुह्वतः। अकामा वो विश्वे देवाः। शिक्षन्तो नोप शेकिम।।

卐 यदि दिवा यदि नक्तम्। एन एनस्योकरत्। भूतं मा तस्मा द्भव्यञ्च।। 42।। ❀ द्रुपदा दिव मुञ्चतु।

卐 द्रुपदा दिवे न्मुमुचानः। स्विन्न स्नात्वी मलादिव। पूतं पवित्रेणेवाऽऽज्यम्। विश्वे मुञ्चन्तु मैनसः।।

卐 उद्वय न्तमस स्परि। पश्यन्तो ज्योति रुत्तरम्। देव न्देवत्रा सूर्यम्। अगन्म ज्योति रुत्तमम्।। 43।। (तव कृधि वनस्पती न्जानता मसति वयं भराऽऽदित्याश्च नव च। 4।)

❀ 卐 वृषासो अ२शुः पवते हविष्मान्थ्सोमः। इन्द्रस्य भाग ऋतयु श्शताऽऽयुः। समा वृषाणँ वृषभ ङ्कृणोतु। प्रियँ विशा२ सर्ववीर२ सुवीरम्।।

卐 कस्य वृषा सुते सचा। नियुत्वा न्वृषभो रणत्। वृत्रहा सोमपीतये।।

卐 यस्ते श्रृङ्ग वृषो नपात्। प्रणपा त्कुण्डपाय्यः। न्यस्मि न्दध्र आ मनः।। 44।।

❀ 卐 त२ सध्रीची रूतयो वृष्णियानि। पौ२स्यानि नियुत स्सश्चुरिन्द्रम्। समुद्रन्न सिन्धव उक्थशुष्माः। उरुव्यचस ङ्गिर आ विशन्ति।।

卐 इन्द्राय गिरो अनिशित सर्गाः। अपः प्रैरय'2'न्थ्सगरस्य बुध्नात्। यो अक्षेणेव चक्रिया शचीभिः। विष्व क्तस्तम्भ पृथिवी मुत द्याम्।।

卐 अक्षोदय च्छवसा क्षामबुध्नम्। वार्णवात स्तविषीभि रिन्द्रः।। 45।। ❀ दृढान्यौघ्ना दुशमान ओजः। अवाभिन त्ककुभः पर्वतानाम्।।

卐 आ नो अग्ने सुकेतुना। रयिँ विश्वाऽऽयु पोषसम्। मार्डीक न्धेहि जीवसे।।

卐 त्व२ सोम महे भगम्। त्वँ यून ऋतायते। दक्ष न्दधासि जीवसे।।

卐 रथँ युञ्जते मरुत श्शुभे सुगम्। सूरो न मित्रावरुणा गविष्टिषु।। 46।। ❀ रजा२सि चित्रा वि चरन्ति तन्यवः। दिव स्सम्राजा पयसा न उक्षतम्।।

卐 वाच२ सु मित्रावरुणा विरावतीम्। पर्जन्य श्चित्राँ वदति त्विषीमतीम्। अभ्रा वसत मरुत स्सुमायया। द्याँ वर्षयत मरुणा मरेपसम्।।

卐 अयुक्त सप्त शुन्ध्युवः। सूरो रथस्य नप्त्रियः। ताभि र्याति स्वयुक्तिभिः।।

卐 वहिष्ठेभि र्विहरन् यासि तन्तुम्।। 47।।❀ अवव्यय न्नसित न्देव वस्वः। दविध्वतो रश्मय स्सूर्यस्य। चर्मेवावाधु स्तमो अफ्स्वन्तः।।

卐 पर्जन्याय प्रगायत। दिव स्पुत्राय मीढुषे। स नो यवस मिच्छतु।।

卐 अच्छा वद तवस ङ्गीर्भि राभिः। स्तुहि पर्जन्य न्नमसाऽविवास। कनिक्रद द्वृषभो जीरदानुः। रेतो दधा त्वोषधीषु गर्भम्।। 48।।

❀ 卐 यो गर्भ मोषधीनाम्। गवाङ्कृणो त्यर्वताम्। पर्जन्यः पुरुषीणाम्।।

卐 तस्मा इदास्ये हविः। जुहोता मधुमत्तमम्। इडान्न स्सँयतङ्करत्।।

卐 तिस्रो यदग्ने शरद स्त्वामित्। शुचिङ्घृतेन शुचय स्सपर्यन्न्। नामानि चिद्दधिरे यज्ञियानि।।

卐 असूदयन्त तनुव स्सुजाताः।। 49।।❀ इन्द्रश्च न श्शुनासीरौ। इमँ यज्ञं मिमिक्षतम्। गर्भ न्धत्तङ् स्वस्तये।।

卐 ययो रिदँ विश्वं भुवन माविवेश। ययो रानन्दो निहितो महश्च। शुनासीरा वृतुभि स्सँविदानौ। इन्द्रवन्तौ हवि रिद ञ्जुषेथाम्।।

卐 आघा ये अग्नि मिन्धते। स्तृणन्ति बर्हि रानुषक्। येषा मिन्द्रो युवा सखा।।

卐 अग्न इन्द्रश्च मेदिना। हथो वृत्राण्यप्रति। युवꣳ हि वृत्रहन्तमा।।

卐 याभ्याꣳ सुव रजय न्नग्र एव। या वा तस्थतु र्भुवनस्य मध्ये। प्रचर्षणी वृषणा वज्रबाहू। अग्नी इन्द्रा वृत्रहणा हुवे वाम्।। 50।। (मन इन्द्रो गविष्टिषु तन्तु ङ्गर्भꣳ सुजाता स्सखा सप्त च। 5।)

❀ 卐 उत नः प्रिया प्रियासु। सप्त स्वसा सुजुष्टा। सरस्वती स्तोम्याभूत्।।

卐 इमा जुह्वाना युष्मदा नमोभिः। प्रति स्तोमꣳ सरस्वति जुषस्व। तव शर्म न्प्रियतमे दधानाः। उपस्थे याम शरण न्न वृक्षम्।।

卐 त्रीणि पदा वि चक्रमे। विष्णु र्गोपा अदाभ्यः। ततो धर्माणि धारयन्न्।। 51।।

❀ 卐 तदस्य प्रिय मभि पाथो अश्याम्। नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धु रित्था। विष्णोः पदे परमे मध्व उत्सः।।

卐 क्रत्वादा अस्थु श्रेष्ठः। अद्य त्वा वन्व'2'न्थ्सुरेक्णाः। मर्त आनाश सुवृक्तिम्।।

卐 इमा ब्रह्म ब्रह्मवाह। प्रिया त आ बर्हि स्सीद। वीहि सूर पुरोडाशम्।। 52।।

❀ 卐 उप न स्सूनवो गिरः। शृण्व न्त्वमृतस्य ये। सुमृडीका भवन्तु नः।।

卐 अद्या नो देव सवितः। प्रजावथ्सावी स्सौभगम्। परा दुष्वप्नियꣳ सुव।।

卐 विश्वानि देव सवितः। दुरितानि परा सुव। यद्भद्र न्तन्म आसुव।।

卐 शुचि मर्कै र्बृहस्पतिम्।। 53।। ❀ अध्वरेषु नमस्यत। अनाम्योज आ चके।।

卐 या धारयन्त देवा सुदक्षा दक्षपितारा। असुर्याय प्रमहसा।।

卐 स इत्क्षेति सुधित ओकसि स्वे। तस्मा इडा पिन्वते विश्वदानी। तस्मै विश स्स्वय मेवाऽऽनमन्ति। यस्मि न्ब्रह्मा राजनि पूर्व एति।।

卐 सकूति मिन्द्र सच्युतिम्। सच्युति ञ्जघनच्युतिम्।। 54।। ❀ कनात्काऽऽभा न्न आ भर। प्रयपस्यन्निव सक्थ्यौ।।

卐 वि न इन्द्र मृधो जहि। कनीखुन दिव सापयन्न्। अभि न स्सुष्टुति न्नय।।

卐 प्रजापति स्त्रियाँ यशः। मुष्कयो रदधा थ्सपम्। कामस्य तृप्ति मानन्दम्। तस्याग्ने भाजयेह मा।।

卐 मोदः प्रमोद आनन्दः।। 55।। ❀ मुष्कयो र्निहित स्सपः। सृत्वेव कामस्य तृप्याणि। दक्षिणानां प्रतिग्रहे।।

卐 मनस श्चित्त माकूतिम्। वाच स्सत्य मशीमहि। पशूनाꣳ रूप मन्नस्य। यशश्श्री श्श्रयतां मयि।।

卐 यथाऽह मस्या अतृपꣳ स्त्रियै पुमान्। यथा स्त्री तृप्यति पुꣳसि प्रिये प्रिया। एवं भगस्य तृप्याणि।। 56।। ❀ यज्ञस्य काम्यः प्रियः।।

卐 ददामी त्यग्नि र्वदति। तथेति वायु राह तत्। हन्तेति सत्य ञ्चन्द्रमाः। आदित्य स्सत्य मोमिति।।

卐 आप स्तथ्सत्य माऽभरन्न्। यशो यज्ञस्य दक्षिणाम्। असौ मे काम स्समृध्यताम्।।

卐 न हि स्पश मविद न्नन्य मस्मात्। वैश्वानरा त्पुरएतार मग्नेः।। 57।। ❀ अथे ममन्थ न्नमृत ममूराः। वैश्वानर ङ्क्षैत्रजित्याय देवाः।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

卐 येषा मिमे पूर्वे अर्मास आसन्न्। अयूपा स्सद्म विभृता पुरूणि। वैश्वानर त्वया ते नुत्ताः। पृथिवी मन्या मभि तस्थु र्जनासः।।

卐 पृथिवीं मातरं महीम्। अन्तरिक्ष मुप ब्रुवे। बृहती मूतये दिवम्।।

卐 विश्वं बिभर्ति पृथिवी। ।। 58।। ❀ अन्तरिक्षँ वि पप्रथे। दुहे द्यौ र्बृहती पयः।।

卐 न ता नशन्ति न दभाति तस्करः। नैना अमित्रो व्यथि रा दधर्षति। देवाꣳश्च याभि र्यजते ददाति च। ज्योगि त्ताभि स्सचते गोपति स्सह।।

卐 न ता अर्वा रेणुककाटो अश्नुते। न सꣳस्कृतत्र मुपयन्ति ता अभि। उरुगाय मभय न्तस्य ता अनु। गावो मर्त्यस्य विचरन्ति यज्वनः।। 59।।

❀ 卐 रात्री व्यख्यदायती। पुरुत्रा देव्यक्षभिः। विश्वा अधि श्रियो धित।।

卐 उप ते गा इवाकरम्। वृणीष्व दुहित र्दिवः। रात्री स्तोम न्न जिग्युषी।।

卐 देवीँ वाच मजनयन्त देवाः। ताँ विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेष मूर्ज न्दुहाना। धेनु र्वागस्मा नुप सुष्टुतैतु।। 60।।

❀ 卐 यद्वा.ग्वद न्त्यविचेतनानि। राष्ट्री देवाना न्निषसाद मन्द्रा। चतस्र ऊर्ज न्दुदुहे पयाꣳसि। क्व स्विदस्याः परम ञ्जगाम।।

卐 गौरी मिमाय सलिलानि तक्षती। एकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी। सहस्राक्षरा परमे व्योमन्न्।।

卐 तस्याꣳ समुद्रा अधि वि क्षरन्ति। तेन जीवन्ति प्रदिश श्चतस्रः।। 61।। ❀ ततः ~ क्षरत्यक्षरम्। तद्विश्व मुप जीवति।

卐 इन्द्रासूरा जनयन् विश्वकर्मा। मरुत्वाꣳ अस्तु गणवा न्थ्सजातवान्। अस्य स्नुषा श्वशुरस्य प्रशिष्टिम्। सपत्ना वाचं मनसा उपाऽऽसताम्।।

卐 इन्द्र स्सूरो अतर द्रजाꣳसि। स्नुषा सपत्ना श्वशुरोऽय मस्तु। अयꣳ शत्रू न्जयतु जर्हृषाणः। अयँ वाज ञ्जयतु वाजसातौ।।

卐 अग्निः~ क्षत्रभृ दनिभृष्ट मोजः। सहस्त्रियो दीप्यता मप्रयुच्छन्न्। विभ्राजमान स्समिधान उग्रः। आऽन्तरिक्ष मरुह दग न्याम्।। 62।। (धारय न्पुरोडाशं बृहस्पति ञ्चघनच्युति मानन्दो भगस्य तृप्याण्यग्ने॰ पृथिवी यज्वन एतु प्रदिश श्चतस्रो वाजसातौ चत्वारि च। 6।)

卐 वृषाऽस्य॰शु वृषभाय गृह्यसे। वृषाऽय मुग्रो नृचक्षसे। दिव्य॰ कर्मण्यो हितो बृह न्नाम। वृषभस्य या ककुत्।।

卐 विषूवान् विष्णो भवतु। अयँ यो मामको वृषा। अथो इन्द्र इव देवेभ्यः। वि ब्रवीतु जनेभ्यः।।

卐 आयुष्मन्तँ वर्चस्वन्तम्। अथो अधिपतिँ विशाम्।। 63।। ❀ अस्या॰ पृथिव्या अध्यक्षम्। इम मिन्द्र वृषभङ्कृणु।।

卐 यस्सुशृङ्ग स्सुवृषभः। कल्याणो द्रोण आहितः। कार्षीवल.प्रगाणेन। वृषभेण यजामहे।।

卐 वृषभेण यजमानाः। अक्रूरेणेव सर्पिषा। मृधश्च सर्वा इन्द्रेण। पृतनाश्च जयामसि।। 64।।

❀ 卐 यस्याऽय मृषभो हविः। इन्द्राय परिणीयते। जयाति शत्रु मायन्तम्। अथो हन्ति पृतन्यतः।।

卐 नृणामह प्रणी रसत्। अग्र उद्भिन्दता मसत्।।

卐 इन्द्र शुष्म न्तनुवा मेरयस्व। नीचा विश्वा अभि तिष्ठाभिमातीः। निश्शृणीह्याबाधँ यो नो अस्ति। उरु न्नो लोक ङ्कृणुहि जीरदानो।। 65।।

❀ 卐 प्रेह्यभि प्रेहि प्रभरा सहस्व। मा विवेनो विश्शृणुष्वा जनेषु। उदीडितो वृषभ तिष्ठ शुष्मैः। इन्द्र शत्रू न्पुरो अस्माक युध्य।।

卐 अग्ने जेता त्वञ्जय। शत्रू न्थ्सहस ओजसा। वि शत्रून् वि मृधो नुद।।

卐 एतन्ते स्तोम न्तुविजात विप्रः। रथन्न धीर स्वपा अतक्षम्। यदीदग्ने प्रति त्व न्देव हर्याः।। 66।। ❀ सुवर्वती रप एना जयेम।।

卐 यो घृतेनाभिमानितः। इन्द्र जैत्राय जज्ञिषे। स न स्सङ्कासु पारय। पृतनासाह्येषु च।।

卐 इन्द्रो जिगाय पृथिवीम्। अन्तरिक्ष॰ सुव र्महत्। वृत्रहा पुरुचेतनः।।

卐 इन्द्रो जिगाय सहसा सहा॰सि। इन्द्रो जिगाय पृतनानि विश्वा।। 67।। ❀ इन्द्रो जातो वि पुरो रुरोज। स न॰ परस्पा वरिव॰ कृणोतु।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore

卐 अय ङ्क्रतु रगृभीतः। विश्वजि दुद्भिदि थ्सोमः। ऋषि र्विप्रः काव्येन।।
卐 वायु रग्रेगा यज्ञप्रीः। साक ङ्ग न्मनसा यज्ञम्। शिवो नियुद्भि श्शिवाभिः।।
卐 वायो शुक्रो अयामि ते। मध्वो अग्र न्दिविष्टिषु।। 68।। ❀ आ याहि सोम पीतये। स्वारुहो देव नियुत्वता।।
卐 इम मिन्द्र वर्धय क्षत्रियाणाम्। अयँ विशाँ विश्पति रस्तु राजा। अस्मा इन्द्र महि वर्चाꣳसि धेहि। अवर्चसङ्कृणुहि शत्रु मस्य।।
卐 इम मा भज ग्रामे अश्वेषु गोषु। निरमुं भज योऽमित्रो अस्य। वर्ष्म न्क्षत्रस्य ककुभि श्श्रयस्व। ततो न उग्रो वि भजा वसूनि।। 69।।
❀ 卐 अस्मे द्यावापृथिवी भूरि वामम्। सन्दुहाथा ङ्घर्मदुघेव धेनुः। अयꣳ राजा प्रिय इन्द्रस्य भूयात्। प्रियो गवा मोषधीना मुतापाम्।।
卐 युनज्मि त उत्तरावन्त मिन्द्रम्। येन जयासि न परा जयासै। स त्वाऽक रेकवृषभꣳ स्वानाम्। अथो राज न्नुत्तमं मानवानाम्।।
卐 उत्तर स्त्वमधरे ते सपत्नाः। एकवृषा इन्द्रसखा जिगीवान्।। 70।। ❀ विश्वा आशाः पृतना स्सञ्जय न्जयन्न्। अभि तिष्ठ शत्रूयत स्सहस्व।।
卐 तुभ्यं भरन्ति क्षितयो यविष्ठ। बलि मग्ने अन्तित ओत दूरात्। आभन्दिष्ठस्य सुमतिञ्चिकिद्धि। बृहत्ते अग्ने महि शर्म भद्रम्।।
卐 यो देह्यो अनमय द्वधस्नैः। यो अर्यपत्नी रुषस श्चकार। स निरुध्या नहुषो यह्वो अग्निः। विशश्चक्रे बलिहृत स्सहोभिः।। 71।।
❀ 卐 प्र सद्यो अग्ने अत्येष्यन्यान्। आवि र्यस्मै चारुतरो बभूथ। ईडेन्यो वपुष्यो विभावा। प्रियो विशा मतिथि र्मानुषीणाम्।।
卐 ब्रह्मज्येष्ठा वीर्या सम्भृतानि। ब्रह्माग्रे ज्येष्ठ न्दिव मा ततान। ऋतस्य ब्रह्म प्रथमोत जज्ञे। तेनार्हति ब्रह्मणा स्पर्धितुङ्कः।।
卐 ब्रह्म स्रुचो घृतवतीः। ब्रह्मणा स्वरवो मिताः।। 72।। ❀ ब्रह्म यज्ञस्य तन्तवः। ऋत्विजो ये हविष्कृतः।।

卐 शृङ्गाणीवेच्छृङ्गिणाꣳ सन्ददृश्रिरे। चषालवन्त स्स्वरवꣳ पृथिव्याम्। ते देवास स्स्वरव स्तस्थिवाꣳसः। नम स्सखिभ्य स्सन्ना न्माऽव गात।।
卐 अभिभू रग्नि रतर द्रजाꣳसि। स्पृधो विहत्य पृतना अभिश्रीः। जुषाणो म आहुतिं मा महिष्ट। हत्वा सपत्नान् वरिवस्करन्नः।।
卐 ईशानन्त्वा भुवनाना मभिश्रियम्। स्तौम्यग्न उरुकृतꣳ सुवीरम्। हवि र्जुषाण स्सपत्नाꣳ अभिभू रसि। जहि शत्रूꣳ रप मृधो नुदस्व।। 73।। (विशा ञ्जयामसि जीरदानो हर्या विश्वा दिविष्टिषु वसूनि जिगीवा न्थ्सहोभि र्मिता न श्चत्वारि च। 7।)
🏺❀ 卐 स प्रत्नव न्नवीयसा। अग्ने द्युम्नेन सँयता। बृह त्ततन्थ भानुना।।
卐 नव न्नु स्तोम मग्नये। दिव श्श्येनाय जीजनम्। वसोꣳ कुवि द्वनाति नः।।
卐 स्वारुहा यस्य श्रियो दृशे। रयि र्वीरवतो यथा। अग्रे यज्ञस्य चेततः।।
卐 अदाभ्यꣳ पुरएता।। 74।। ❀ अग्नि र्विशां मानुषीणाम्। तूर्णी रथ स्सदानवः।।
卐 नवꣳ सोमाय वाजिने। आज्यं पयसोऽजनि। जुष्टꣳ शुचितमँ वसु।।
卐 नवꣳ सोम जुषस्व नः। पीयूषस्येह तृप्णुहि। यस्ते भाग ऋता वयम्।।
卐 नवस्य सोम ते वयम्। आ सुमतिँ वृणीमहे।। 75।। ❀ स नो रास्व सहस्रिणः।।
卐 नवꣳ हवि र्जुषस्व नः। ऋतुभि स्सोम भूतमम्। तदङ्ग प्रति हर्य नः। राजन्थ्सोम स्वस्तये।।
卐 नवꣳ स्तोम न्नवꣳ हविः। इन्द्राग्निभ्या न्निवेदय। तज्जुषेताꣳ सचेतसा।।
卐 शुचि न्नु स्तोम न्नवजात मद्य। इन्द्राग्नी वृत्रहणा जुषेथाम्।। 76।। ❀ उभा हि वाꣳ सुहवा जोहवीमि। ता वाजꣳ सद्य उशते धेष्ठा।।
卐 अग्नि रिन्द्रो नवस्य नः। अस्य हव्यस्य तृप्यताम्। इह देवौ सहस्रिणौ।।
卐 यज्ञन्न आ हि गच्छताम्। वसुमन्तꣳ सुवर्विदम्। अस्य हव्यस्य तृप्यताम्। अग्नि रिन्द्रो नवस्य नः।।
卐 विश्वा न्देवाꣳ स्तर्पयत।। 77।। ❀ हविषोऽस्य नवस्य नः। सुवर्विदो हि जज्ञिरे।।
卐 एदं बर्हि स्सुष्टरीमा नवेन। अयँ यज्ञो यजमानस्य भागः। अयं बभूव भुवनस्य गर्भः। विश्वे देवा इद मद्या ऽऽगमिष्ठाः।।

卐 इमे नु द्यावापृथिवी समीची। तन्वाने यज्ञं पुरुपेशस न्धिया। आऽस्मै पृणीतां भुवनानि विश्वा। प्रजां पुष्टि ममृत न्नवेन।। 78।।

❀ 卐 इमे धेनू अमृतँ ये दुहाते। पयस्व त्युत्तरा मेतु पुष्टिः। इमँ यज्ञ ञ्जुषमाणे नवेन। समीची द्यावापृथिवी घृताची।।

卐 यविष्ठो हव्यवाहनः। चित्रभानु र्घृताऽऽसुतिः। नवजातो वि रोचसे। अग्ने तत्ते महित्वनम्।।

卐 त्वमग्ने देवताभ्यः। भागे देव न मीयसे।। 79।। ❀ स एना विद्वान् यक्ष्यसि। नवꣳ स्तोम ञ्जुषस्व नः।।

卐 अग्निः प्रथमः प्राशञ्जातु। स हि वेद यथा हविः। शिवा अस्मभ्य मोषधीः। कृणोतु विश्वचर्षणिः।।

卐 भद्रान्न श्रेय स्समनैष्ट देवाः। त्वयाऽवसेन समशीमहि त्वा। स नो मयोभूः पितो आ विशस्व। शन्तोकाय तनुवे स्योनः।।

卐 एत मु त्यं मधुना सँयुतँ यवम्। सरस्वत्या अधि मना.वचर्कृषुः। इन्द्र आसी थ्सीरपति श्शतक्रतुः। कीनाशा आस न्मरुत स्सुदानवः।। 80।। (पुरएता वृणीमहे जुषेथा न्तर्पयता मृत न्नवेन मीयसे स्योन श्चत्वारि च। 8।)

(जुष्ट श्चक्षुषो जुष्टी नरो नक्तञ्जाता वृषा स उत नो वृषाऽस्यꣳशु स्सप्रत्नव दृष्टौ। 8। जुष्टो मन्यु र्भगो जुष्टी नरो हरिवर्पस ङ्गिर श्शिप्रिन्वाजाना मुत नः प्रिया यद्वाग्वदन्ती विश्वा आशा अशीतिः। 80। जुष्ट स्सुदानवः।)

## द्वितीयाष्टके पञ्चमः प्रपाठकः

### वै।का। 2उपहोम मन्त्राः 8(अष्टावनुवाकाः 8)

❀ 卐 प्राणो रक्षति विश्व मेजत्। इर्यो भूत्वा बहुधा बहूनि। स इत्थ्सर्वँ व्यानशे।।

卐 यो देवो देवेषु विभू रन्तः। आ वृदूदा त्क्षेत्रियध्वग.द्वृषा। तमित्प्राणं मनसोऽप शिक्षत। अग्र न्देवाना मिद मत्तु नो हविः।।

卐 मनस श्चित्तेदम्। भूतं भव्यञ्च गुप्यते। तद्धि देवेष्वग्रियम्।। 1।।

❀ 卐 आ न एतु पुरश्चरम्। सह देवै रिम९ हवम्। मन श्श्रेयसिश्रेयसि। कर्मन् यज्ञपति न्दधत्।।

卐 जुषतां मे वागिद९ हविः। विराड्देवी पुरोहिता। हव्यवा डनपायिनी।।

卐 यया रूपाणि बहुधा वदन्ति। पेशा९सि देवाः परमे जनित्रे। सा नो विरा डनपस्फुरन्ती।। 2।। ❀ वाग्देवी जुषता मिद९ हविः।।

卐 चक्षु र्देवाना ञ्ज्योति रमृते न्यक्तम्। अस्य विज्ञानाय बहुधा नि धीयते। तस्य सुम्न मशीमहि। मा नो हासी द्विचक्षणम्।।

卐 आयुरिन्नः प्रतीर्यताम्। अनन्धा श्चक्षुषा वयम्। जीवा ज्योति रशीमहि। सुव ज्योति रुतामृतम्।।

卐 श्रोत्रेण भद्र मुत श‍ृण्वन्ति सत्यम्। श्रोत्रेण वाचं बहुधोद्यमानाम्। श्रोत्रेण मोदश्च महश्च श्रूयते। श्रोत्रेण सर्वा दिश आ श‍ृणोमि।।

卐 येन प्राच्या उत दक्षिणा। प्रतीच्यै दिश श्श‍ृण्वन्त्युत्तरात्। तदिच्छ्रोत्रं बहुधोद्यमानम्। अरान्न नेमिः परि सर्वं बभूव।। 3।। (अग्रिय मनस्फुरन्ती सत्य९ सप्त च। 1।)

❀ 卐 उदेहि वाजिन् यो अस्यप्स्वन्तः। इद९ राष्ट्र मा विश सूनृतावत्। यो रोहितो विश्व मिद ञ्जजान। स नो राष्ट्रेषु सुधिता न्दधातु।।

卐 रोह९रोह९ रोहित आ रुरोह। प्रजाभि र्वृद्धि ञ्जनुषा मुपस्थम्। ताभि स्स९रब्धो अविद थ्षडुर्वीः। गातुं प्रपश्य न्निह राष्ट्र माऽहाः।।

卐 आहार्षी द्राष्ट्र मिह रोहितः। मृधो व्यास्थ दभयन्नो अस्तु।। 4।। ❀ अस्मभ्य न्द्यावापृथिवी शक्वरीभिः। राष्ट्र न्दुहाथा मिह रेवतीभिः।।

卐 विममर्श रोहितो विश्वरूपः। समाचक्राणः प्ररुहो रुहश्च। दिवङ्गत्वाय महता महिम्ना। वि नो राष्ट्र मुनत्तु पयसा स्वेन।।

卐 यास्ते विश स्तपसा सम्बभूवुः। गायत्रँ वथ्स मनु तास्त आऽगुः। तास्त्वाऽऽविशन्तु महसा स्वेन। सं माता पुत्रो अभ्येतु रोहितः।। 5।।

Sri Guruchidananda Avadhoota Dattapeetham • Mysore •

❀ 卐 यूय मुग्रा मरुतꣳ पृश्ञिमातरः। इन्द्रेण सयुजा प्रमृणीथ शत्रून्। आ वो रोहितो अश्वणो दभिद्यवः। त्रिसप्तासो मरुत स्स्वादु सम्मुदः।।

卐 रोहितो द्यावापृथिवी जजान। तस्मिꣳ स्तन्तुं परमेष्ठी ततान। तस्मिञ्छिश्रिये अज एकपात्। अदृꣳह द्यावापृथिवी बलेन।।

卐 रोहितो द्यावापृथिवी अदृꣳहत्। तेन सुवस्स्तभित न्तेन नाकः।। 6।। ❀ सो अन्तरिक्षे रजसो विमानः। तेन देवा स्सुव रन्वविन्दन्न्।।

卐 सुशेवन्त्वा भानवो दीदिवाꣳसम्। समग्रासो जुह्वो जातवेदः। उक्षन्ति त्वा वाजिन माघृतेन। सꣳस मग्ने युवसे भोजनानि।।

卐 अग्ने शर्ध महते सौभगाय। तव द्युम्ना न्युत्तमानि सन्तु। सञ्जास्पत्यꣳ सुयम माकृणुष्व। शत्रूयता मभितिष्ठा महाꣳसि।। 7।। (अस्त्वेतु रोहितो नाको महाꣳसि। 2।)

❀ 卐 पुनर्न इन्द्रो मघवा ददातु। धनानि शक्रो धन्य स्सुराधाः। अर्वाचीन ङ्कृणुताँ याचितो मनः। श्रुष्टी नो अस्य हविषो जुषाणः।।

卐 यानि नोऽजिन न्धनानि। जहर्थ शूर मन्युना। इन्द्रानुविन्द न स्तानि। अनेन हविषा पुनः।।

卐 इन्द्र आशाभ्यꣳ परि। सर्वाभ्योऽभयङ्करत्।। 8।। ❀ जेता शत्रून् विचर्षणिः।।

卐 आकूत्यै त्वा कामाय त्वा समृधे त्वा।पुरो दधे अमृतत्वाय जीवसे।।

卐 आकूति मस्यावसे। काम मस्य समृद्ध्यै। इन्द्रस्य युञ्जते धियः।।

卐 आकूति न्देवीं मनसꣳ पुरो दधे। यज्ञस्य माता सुहवा मे अस्तु। यदिच्छामि मनसा सकामः। विदेय मेनद्धृदये निविष्टम्।। 9।।

❀ 卐 सेदग्नि रग्नीꣳ रत्येत्यन्यान्। यत्र वाजी तनयो वीडुपाणिः। सहस्रपाथा अक्षरा समेति।।

卐 आशाना न्त्वाऽऽशापालेभ्यः। चतुर्भ्यो अमृतेभ्यः। इदं भूतस्याध्यक्षेभ्यः। विधेम हविषा वयम्।।

卐 विश्वा आशा मधुना सꣳ सृजामि। अनमीवा आप ओषधयो भवन्तु। अयँ यजमानो मृधो व्यस्यताम्।। 10।। ❀ अगृभीताꣳ पशव स्सन्तु सर्वे।।

Sri Ganapathy Sachchidananda Avadhoota Datta Peetham

卐 अग्नि स्सोमो वरुणो मित्र इन्द्रः। बृहस्पति स्सविता यस्सहस्री। पूषा नो गोभि रवसा सरस्वती। त्वष्टा रूपाणि समनक्तु यज्ञैः।।

卐 त्वष्टा रूपाणि दधती सरस्वती। पूषा भगꣳ सविता नो ददातु। बृहस्पति र्दद दिन्द्र स्सहस्रम्। मित्रो दाता वरुण स्सोमो अग्निः।। 11।। (कर न्निविष्ट मस्यता न्नव च। 3।)

卐 आ नो भर भगमिन्द्र द्युमन्तम्। नि ते देष्णस्य धीमहि प्ररेके। उर्व इव पप्रथे कामो अस्मे। तमा पृणा वसुपते वसूनाम्।।

卐 इमङ्कामं मन्दया गोभि रश्वैः। चन्द्रवता राधसा पप्रथश्च। सुवर्यवो मतिभि स्तुभ्यँ विप्राः। इन्द्राय वाहः कुशिकासो अक्रन्न्।।

卐 इन्द्रस्य नु वीर्याणि प्रवोचम्। यानि चकार प्रथमानि वज्री।। 12।। ❀ अह न्नहि मन्वप स्ततर्द। प्रवक्षणा अभिन त्पर्वतानाम्।।

卐 अह न्नहिं पर्वते शिश्रियाणम्। त्वष्टाऽस्मै वज्रꣳ स्वर्य न्ततक्ष। वाश्रा इव धेनव स्स्यन्दमानाः। अञ्ज स्समुद्र मव जग्मु रापः।।

卐 वृषायमाणोऽवृणीत सोमम्। त्रिकद्रुके ष्वपिबथ्सुतस्य। आ सायकं मघवा दत्त वज्रम्। अहन्नेनं प्रथमजा महीनाम्।। 13।।

❀ 卐 यदिन्द्राह न्प्रथमजा महीनाम्। आन्मायिना ममिनाः प्रोत मायाः। आत्सूर्य ञ्जनय न्द्यामुषासम्। तादीक्ना शत्रू न्न किला विविथ्से।।

卐 अहन्वृत्रँ वृत्रतरँ व्यꣳसम्। इन्द्रो वज्रेण महता वधेन। स्कन्धाꣳसीव कुलिशेनाविवृक्णा। अहि श्शयत उपपृक्पृथिव्याम्।।

卐 अयोध्येव दुर्मद आ हि जुह्वे। महावीर न्तुविबाध मृजीषम्।। 14।। ❀ नातारी रस्य समृतिँ वधानाम्। सꣳरुजानाः पिपिष इन्द्रशत्रुः।।

卐 विश्वो विहाया अरतिः। वसु र्दधे हस्ते दक्षिणे। तरणिर्न शिश्रथत्। श्रवस्यया न शिश्रथत्। विश्वस्मा इदिषुध्यसे। देवत्रा हव्य मूहिषे। विश्वस्मा इथ्सुकृते वार मृण्वति। अग्नि र्द्वारा व्यृण्वति।। 15।।

❀ 卐 उदुज्जिहानो अभि काम मीरयन्न्। प्रपृञ्चन्विश्वा भुवनानि पूर्वथा। आ केतुना सुषमिद्धो यजिष्ठः। काम॑न्नो अग्ने अभिहर्य दिग्भ्यः।।

卐 जुषाणो हव्य ममृतेषु दूढ्यः। आ नो रयिं बहुला ङ्गोमती मिषम्। नि धेहि यक्ष दमृतेषु भूषन्न्।।

卐 अश्विना यज्ञ मागतम्। दाशुषꣳ पुरुदꣳससा। पूषा रक्षतु नो रयिम्।। 16।।

❀ 卐 इमँ यज्ञ मश्विना वर्धयन्ता। इमौ रयिँ यजमानाय धत्तम्। इमौ पशू त्रक्षताँ विश्वतो नः। पूषा नꣳ पातु सद मप्रयुच्छन्न्।।

卐 प्र ते महे सरस्वति। सुभगे वाजिनीवति। सत्यवाचे भरे मतिम्।।

卐 इदन्ते हव्यङ्घृतवथ्सरस्वति। सत्यवाचे प्रभरेमा हवीꣳषि। इमानि ते दुरिता सौभगानि। तेभि र्वयꣳ सुभगास स्स्याम।। 17।। (वज्र्यहीना मृजीषँ व्यृण्वति रक्षतु नो रयिꣳ सौभगा न्येकञ्च। 4।)

❀ 卐 यज्ञो रायो यज्ञ ईशे वसूनाम्। यज्ञ स्सस्याना मुत सुक्षितीनाम्। यज्ञ इष्टꣳ पूर्वचित्ति न्दधातु। यज्ञो ब्रह्मण्वाꣳ अप्येतु देवान्।।

卐 अयँ यज्ञो वर्धता ङ्गोभि रश्वैः। इयँ वेदि स्स्वपत्या सुवीरा। इदं बर्हि रति बर्हीꣳष्यन्या। इमँ यज्ञँ विश्वे अवन्तु देवाः।।

卐 भग एव भगवाꣳ अस्तु देवाः। तेन वयं भगवन्त स्स्याम।। 18।। ❀ तन्त्वा भग सर्व इज्जोहवीमि। स नो भग पुरएता भवेह।।

卐 भग प्रणेत र्भग सत्यराधः। भगेमा न्धिय मुदव ददन्नः। भग प्र णो जनय गोभि रश्वैः। भग प्र नृभि र्नृवन्त स्स्याम।।

卐 शश्वती स्समा उप यन्ति लोकाः। शश्वती स्समा उपयन्त्यापः। इष्टं पूर्तꣳ शश्वतीनाꣳ समानाꣳ शाश्वतेन। हविषेष्ट्वाऽनन्तँ लोकं पर मा रुरोह।। 19।।

❀ 卐 इय मेव सा या प्रथमा व्यौच्छत्। सा रूपाणि कुरुते पञ्च देवी।।

卐 द्वे स्वसारौ वयत स्तन्त्र मेतत्। सनातनँ विततꣳ षण्मयूखम्। अवान्याꣳ स्तन्तू न्किरतो धत्तो अन्यान्। नाव पृज्याते न गमाते अन्तम्।।

卐 आ वो यन्तूदवाहासो अद्य। वृष्टिं ये विश्वे मरुतो जुनन्ति। अयँ यो अग्नि र्मरुत स्समिद्धः। एत ञ्जुषध्व ङ्कवयो युवानः।। 20।।

❀ 卐 धारावरा मरुतो धृष्णुवोजसः। मृगा न भीमा स्तविषेभि रूर्मिभिः। अग्नयो न शुशुचाना ऋजीषिणः। भ्रुमि न्धमन्त उप गा अवृण्वत।।

卐 विचक्रमे[1]❀ 卐 त्रिर्देवः[2]❀।

卐 आवेधस न्नीलपृष्ठं बृहन्तम्। बृहस्पतिꣳ सदने सादयध्वम्। सादद्योनि न्दम आ दीदिवाꣳसम्। हिरण्यवर्ण मरुषꣳ सपेम।।

卐 स हि शुचि श्शतपत्र स्स शुन्ध्यूः।। 21।।❀ हिरण्यवाशी रिषिर स्सुवर्षाः। बृहस्पति स्स स्वावेश ऋष्वाः। पूरू सखिभ्य आसुतिङ्करिष्ठः।।

卐 पूषꣳ स्तव व्रते वयम्। न रिष्येम कदाचन। स्तोतारस्त इह स्मसि।।

卐 यास्ते पूष न्नावो अन्त स्समुद्रे। हिरण्ययी रन्तरिक्षे चरन्ति। याभि र्यासि दूत्याꣳ सूर्यस्य। कामेन कृत श्श्रव इच्छमानः।। 22।।

❀ 卐 अरण्या न्यरण्या न्यसौ। या प्रेव नश्यसि। कथा ग्राम न्न पृच्छसि। न त्वा भीरिव विन्दती '3' ।।

卐 वृषारवाय वदते। यदुपावति चिच्चिकः। आघाटीभिरिव धावयन्न्। अरण्यानि महीयते।।

卐 उत गाव इवाऽदन्न्। उतो वेश्मेव दृश्यते।। 23।।❀ उतो अरण्यानि स्सायम्। शकटीरिव सर्जति।।

卐 गामङ्गैष[3] आ ह्वयति। दार्वङ्गैष[4] उपावधीत्। वस न्नरण्यान्याꣳ सायम्। अक्रुक्षदिति मन्यते।।

卐 न वा अरण्यानिर् हन्ति। अन्य श्चेन्नाभिगच्छति। स्वादोः फलस्य जग्ध्वा। यत्र काम न्नि पद्यते।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

1

2

3

4

卐 आञ्जनगन्धीꣳ सुरभीम्। बह्वन्ना मकृषीवलाम्। प्राहं मृगाणां मातरम्। अरण्यानी मशꣳसिषम्।। 24।। (स्याम रुरोह युवान श्शुन्ध्यू रिच्छमानो दृश्यते नि पद्यते चत्वारि च। 51)

卐 वार्त्रहत्याय शवसे। पृतनासाह्याय च। इन्द्र त्वाऽऽवर्तयामसि।।

卐 सुब्रह्माणँ वीरवन्तं बृहन्तम्। उरुङ्गभीरं पृथुबुध्न मिन्द्र। श्रुतर्षि मुग्र मभिमातिषाहम्। अस्मभ्यञ्चित्रँ वृषणꣳ रयिन्दाः।।

卐 क्षेत्रियै त्वा निरृत्यै त्वा। द्रुहो मुञ्चामि वरुणस्य पाशात्। अनागसं ब्रह्मणे त्वा करोमि।। 25।। ❀ शिवे ते द्यावापृथिवी उभे इमे।।

卐 शन्ते अग्नि स्सहाद्भि रस्तु। शन्द्यावापृथिवी सहौषधीभिः। शमन्तरिक्षꣳ सह वातेन ते। शन्ते चतस्रः प्रदिशो भवन्तु।।

卐 या दैवी श्चतस्रः प्रदिशः। वातपत्नी रभि सूर्यो विचष्टे। तासान्त्वा जरस आ दधामि। प्र यक्ष्म एतु निरृतिं पराचैः।।

卐 अमोचि यक्ष्मा द्दुरिता दवर्त्यै।। 26।। ❀ द्रुहः पाशा न्निरृत्यै चोदमोचि। अहा अवर्ति मविदथ्स्योनम्। अप्यभू द्भद्रे सुकृतस्य लोके।।

卐 सूर्य मृत न्तमसो ग्राह्या यत्। देवा अमुञ्च न्नसृज न्व्येनसः। एव मह मिम क्षेत्रिया ज्जामिशꣳसात्। द्रुहो मुञ्चामि वरुणस्य पाशात्।।

卐 बृहस्पते युव मिन्द्रश्च वस्वः। दिव्यस्येशाथे उत पार्थिवस्य। धत्तꣳ रयिꣳ स्तुवते कीरयेचित्।। 27।। ❀ यूयं पात स्वस्तिभि स्सदा नः।।

卐 देवाऽऽयुध मिन्द्र माजोहुवानाः। विश्वावृध मभि ये रक्षमाणाः। येन हता दीर्घ मध्वान मायन्न्। अनन्त मर्थ मनिवथ्स्यमानाः।।

卐 यत्ते सुजाते हिमवथ्सु भेषजम्। मयोभू श्शन्तमा यद्धृदोऽसि। ततो नो देहि सीबले।।

卐 अदो गिरिभ्यो अधि यत्प्रधावसि। सꣳशोभमाना कन्येव शुभ्रे।। 28।। ❀ तान्त्वा मुद्गला हविषा वर्धयन्ति। सा न स्सीबले रयि मा भाजयेह।।

卐 पूर्व न्देवा अपरेणानु पश्यन्जन्मभिः। जन्मा न्यवरै॰ पराणि। वेदानि देवा अय मस्मीति माम्। अह॰ हित्वा शरीर ञ्जरस॰ परस्तात्।।

卐 प्राणापानौ चक्षु श्श्रोत्रम्। वाचं मनसि सम्भृताम्। हित्वा शरीर ञ्जरस॰ परस्तात्। आभूतिं भूतिँ वय मश्ञ्जवामहै।।

卐 इमा एव ता उषसो या॰ प्रथमा व्यौच्छन्न्। ता देव्य॰ कुर्वते पञ्चरूपा। शश्वती र्नाव पृज्यन्ति। न गमन्त्यन्तम्।। 29।। (करोम्यवर्त्यै चिच्छुभ्रेऽश्ञ्जवामहै चत्वारि च। 6।)

❀ 卐 वसूना न्त्वाऽधीतेन। रुद्राणा मूर्म्या। आदित्याना न्तेजसा। विश्वेषा न्देवानाङ्क्रतुना। मरुता मेम्ना जुहोमि स्वाहा।।

卐 अभिभूति रह माऽगमम्। इन्द्रसखा स्वायुधः। आस्वाशासु दुष्षहः।।

卐 इदँ वर्चो अग्निना दत्त माऽगात्। यशो भर्ग स्सह ओजो बलञ्च।। 30।। ❀ दीर्घायुत्वाय शतशारदाय। प्रतिगृभ्णामि महते वीर्याय।।

卐 आयुरसि विश्वाऽऽयुरसि। सर्वाऽऽयुरसि सर्व मायुरसि। सर्वं म आयु र्भूयात्। सर्व मायु र्गेषम्।।

卐 भू 卐 र्भुव 卐 स्सुवः।।

卐 अग्नि र्धर्मेणान्नादः। मृत्यु र्धर्मेणान्नपतिः। ब्रह्म क्षत्र॰ स्वाहा।। 31।।

❀ 卐 प्रजापति॰ प्रणेता। बृहस्पति॰ पुरएता। यम॰ पन्था॰। चन्द्रमा॰ पुनरसु स्स्वाहा।।

卐 अग्नि रन्नादोऽन्नपतिः। अन्नाद्य मस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

卐 सोमो राजा राजपतिः। राज्य मस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

卐 वरुण स्सम्राट्थ्सम्राड्पतिः। साम्राज्य मस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

卐 32।। ❀ मित्रः~ क्षत्रङ्क्षत्रपतिः। क्षत्र मस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

卐 इन्द्रो बलं बलपतिः। बल मस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

卐 बृहस्पति र्ब्रह्म ब्रह्मपतिः। ब्रह्मास्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

卐 सविता राष्ट्र॰ राष्ट्रपतिः। राष्ट्र मस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

卐 पूषा विशाँ विड्पतिः। विश मस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

卐 सरस्वती पुष्टि॰ पुष्टिपत्नी। पुष्टि मस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।

卐 त्वष्टा पशूनाँ मिथुनाना॰ रूपकृ द्रूपपतिः। रूपेणास्मिन् यज्ञे यजमानाय पशू न्ददातु स्वाहा।। 33।। (च स्वाहा साम्राज्य मस्मिन् यज्ञे यजमानाय ददातु स्वाहा विश मस्मिन् यज्ञे यजमानाय ददातु स्वाहा चत्वारि च। 7। अग्नि स्सोमो वरुणो मित्र इन्द्रो बृहस्पति स्सविता पूषा सरस्वती त्वष्टा दश।)

❀ 卐 स ई पाहि य ऋजीषी तरुत्रः। यश्शिप्रिवा न्वृषभो यो मतीनाम्। यो गोत्रभि द्वज्रभृ द्यो हरिष्ठाः। स इन्द्र चित्रा॰ अभि तृन्धि वाजान्।।

卐 आ ते शुष्मो वृषभ एतु पश्चात्। ओत्तरा दधरा गा पुरस्तात्। आ विश्वतो अभि समेत्वर्वाङ्। इन्द्र द्युम्न॰ सुवर्व द्धेह्यस्मे।।

卐 प्रोष्वस्मै पुरोरथम्। इन्द्राय शूष मर्चत।। 34।। ❀ अभीके चिदु लोककृत्। सङ्गे समत्सु वृत्रहा। अस्माकं बोधि चोदिता। नभन्ता मन्यकेषाम्। ज्याका अधि धन्वसु।।

卐 इन्द्रँ वय॰ शुनासीरम्। अस्मिन् यज्ञे हवामहे। आ वाजै रुप नोऽगमत्।।

卐 इन्द्राय शुनासीराय। स्रुचा जुहुत नो हविः।। 35।। ❀ जुषतां प्रति मेधिरः।।

卐 प्र हव्यानि घृतवन्त्यस्मै। हर्यश्वाय भरता सजोषाः। इन्द्रर्तुभि र्ब्रह्मणा वावृधानः। शुनासीरी हवि रिदञ्जुषस्व।।

卐 वय स्सुपर्णा उपसेदु रिन्द्रम्। प्रियमेधा ऋषयो नाधमानाः। अप ध्वान्त मूर्णुहि पूर्धि चक्षुः। मुमुग्ध्यस्मा न्निधयेव बद्धान्।।

卐 बृह दिन्द्राय गायत।। 36।। ❀ मरुतो वृत्रहन्तमम्। येन ज्योति रजनय न्नृतावृधः। देव न्देवाय जागृवि।।

卐 का मिहैका॰ क इमे पतङ्गाः। मान्थाला॰ कुलि परि मा पतन्ति। अनावृतैना न्प्रधमन्तु देवाः। सौपर्णञ्चक्षु स्तनुवा विदेय।।

卐 एवाऽवन्दस्व वरुणं बृहन्तम्। नमस्या धीर ममृतस्य गोपाम्। स नश्शर्म त्रिवरूथँ विय॰सत्।। 37।। ❀ यूयं पात स्वस्तिभि स्सदा नः।।

卐 नाके सुपर्ण मुप यत्पतन्तम्। हृदा वेनन्तो अभ्यचक्षत त्वा। हिरण्यपक्षँ वरुणस्य दूतम्। यमस्य योनौ शकुनं भुरण्युम्।।

卐 शन्नो देवी रभिष्टये। आपो भवन्तु पीतये। शँ यो रभि स्रवन्तु नः।।

卐 ईशाना वार्याणाम्। क्षयन्ती श्चर्षणीनाम्।। 38।। ❀ अपो याचामि भेषजम्।।

卐 अप्सु मे सोमो अब्रवीत्। अन्त र्विश्वानि भेषजा। अग्निञ्च विश्वशम्भुवम्। आपश्च विश्वभेषजीः।।

卐 यदप्सु ते सरस्वति। गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति। मुखमङ्धि सरस्वति।।

卐 या सरस्वती वैशम्भल्या।।39।। ❀ तस्यां मे रास्व। तस्यास्ते भक्षीय। तस्यास्ते भूयिष्ठभाजो भूयास्म।।

卐 अह न्त्वदस्मि मदसि त्वमेतत्। ममासि योनि स्तव योनि रस्मि। ममैव सन्वह हव्या न्यग्ने। पुत्रः पित्रे लोककृ ज्जातवेदः।।

卐 इहैव सन्तत्र सन्त न्त्वाऽग्ने। प्राणेन वाचा मनसा बिभर्मि। तिरो मा सन्त मायु र्मा प्र हासीत्।। 40।। ❀ ज्योतिषा त्वा वैश्वानरेणोप तिष्ठे।।

卐 अयन्ते योनिर् ऋत्वियः। यतो जातो अरोचथाः। तञ्जान न्नग्न आ रोह। अथा नो वर्धया रयिम्।।

卐 या ते अग्ने यज्ञिया तनू स्तयेह्या रोहाऽऽत्माऽऽत्मानम्। अच्छा वसूनि कृण्व न्नस्मे नर्या पुरूणि। यज्ञो भूत्वा यज्ञ मा सीद स्वाँ योनिम्। जातवेदो भुव आजायमान स्सक्षय एहि।।

卐 उपावरोह जातवेदः पुनस्त्वम्।। 41।। ❀ देवेभ्यो हव्यँ वह नः प्रजानन्न्। आयुः प्रजाᳲ रयि मस्मासु धेहि। अजस्रो दीदिहि नो दुरोणे।।

卐 तमिन्द्र ञ्जोहवीमि मघवान मुग्रम्। सत्रा दधान मप्रतिष्कुतᳲ शवाᳲसि। मᳲहिष्ठो गीर्भि रा च यज्ञियोऽववर्तत्। राये नो विश्वा सुपथा कृणोतु वज्री।।

卐 त्रिकद्रुकेषु महिषो यवाशिर न्तुविशुष्म स्तृपत्। सोम मपिब द्विष्णुना सुतँ यथाऽवशत्। स ईं ममाद महि कर्म कर्तवे महामुरुम्।। 42।। ❀ सैनᳲ सश्च द्देव न्देव स्सत्य मिन्दुᳲ सत्य इन्द्रः।।

卐 विद्यती सरमा रुग्ण मद्रेः। महि पाथः पूर्व्यं सध्रियक्कः। अग्रं न्नय थ्सुपद्यक्षराणाम्। अच्छा रवं प्रथमा जानती गात्।।

卐 विदद्गव्यं सरमा दृढ मूर्वम्। येनानुकं मानुषी भोजते विट्। आ ये विश्वा स्वपत्यानि चक्रुः। कृण्वानासो अमृतत्वाय गातुम्।।

卐 त्वन्नृभि र्नृपते देवहूतौ।। 43।। ❀ भूरीणि वृत्वा हर्यश्व हꣳसि। त्वन्निदस्यु ञ्चुमुरिम्। धुनि ञ्चास्वापयो दभीतये सुहन्तु।।

卐 एवा पाहि प्रत्नथा मन्दतु त्वा। श्रुधि ब्रह्म वावृधस्वोत गीर्भिः। आवि स्सूर्यं ङ्कृणुहि पीपिहीषः। जहि शत्रूꣳ रभि गा इन्द्र तृन्धि।।

卐 अग्ने बाधस्व वि मृधो नुदस्व। अपामीवा अप रक्षाꣳसि सेध। अस्मा थ्समुद्रा द्बृहतो दिवो नः।। 44।। ❀ अपां भूमान मुप न स्सृजेह।।

卐 यज्ञ प्रति तिष्ठ सुमतौ सुशेवा आ त्वा। वसूनि पुरुधा विशन्तु। दीर्घ मायु र्यजमानाय कृण्वन्न्। अथामृतेन जरितार मङ्धि।।

卐 इन्द्र श्शुनाव द्वितनोति सीरम्। सँवथ्सरस्य प्रतिमाण मेतत्। अर्कस्य ज्योति स्तदिदास ज्येष्ठम्। सँवथ्सरꣳ शुनव थ्सीर मेतत्।।

卐 इन्द्रस्य राधः प्रयतं पुरु त्मना। तदर्करूपँ विमिमान मेति। द्वादशारे प्रतितिष्ठतीद्वृषा।।

卐 अश्वायन्तो गव्यन्तो वाजयन्तः। हवामहे त्वोपगन्तवा उ। आभूषन्तस्त्वा सुमतौ नवायाम्। वयमिन्द्र त्वा शुनꣳ हुवेम।। 45।। (अर्चत हवि गायत यꣳसच्चर्षणीनाँ वैशम्भल्या हासी त्त्वमुरु न्देवहूतौ नस्त्मना षट्च। 8।)

(प्राण उदेहि पुन रा नो भर यज्ञो रायो वार्त्रहत्याय वसूनाꣳ स ईं पाह्यष्टौ। 8। प्राणो रक्ष त्यगृभीता धारावरा मरुतो दीर्घायुत्वाय ज्योतिषा त्वा पञ्चचत्वारिꣳशत्। 45। प्राण श्शुनꣳ हुवेम।)

## द्वितीयाष्टके षष्ठः प्रपाठकः

**वै।का। 1कौकिली मन्त्राः 9(विंशत्यनुवाकाः 20)**

卐 स्वाद्वीन्त्वा स्वादुना। तीव्रा न्तीव्रेण। अमृता ममृतेन। मधुमतीं मधुमता। सृजामि सꣳ सोमेन। सोमोऽस्यश्विभ्यां पच्यस्व। सरस्वत्यै पच्यस्व। इन्द्राय सुत्राम्णे पच्यस्व।।

卐 परीतो षिञ्चता सुतम्। सोमो य उत्तमꣳ हविः।। 1।। दधन्वा यो नर्यो अप्स्वन्तरा। सुषाव सोममद्रिभिः।।

卐 पुनातु ते परिस्रुतम्। सोमꣳ सूर्यस्य दुहिता। वारेण शश्वता तना।- वायुः पूतः पवित्रेण। प्राङ्क्सोमो अतिद्रुतः। इन्द्रस्य युज्य स्सखा।।

卐 -- वायुः पूतः पवित्रेण। प्रत्य'2'ङ्क्सोमो अतिद्रुतः।। 2।। इन्द्रस्य युज्य स्सखा।।

卐 ब्रह्म क्षत्रं पवते तेज इन्द्रियम्। सुरया सोम स्सुत आसुतो मदाय। शुक्रेण देव देवताः पिपृग्धि। रसेनान्नँ यजमानाय धेहि।।

卐 कुविदङ्ग यवमन्तो यवञ्चित्। यथा दान्त्यनुपूर्वँ वियूय। इहेहैषा ङ्कृणुत भोजनानि। ये बर्हिषो नमोवृक्तिन्न जग्मुः।।

卐 उपयामगृहीतो-ऽस्यश्विभ्या- न्त्वा जुष्टङ्गृह्णामि।। 3।। 卐 -- सरस्वत्या-- 卐 -- इन्द्राय सुत्राम्णे-- ।

卐 एष ते योनि- स्तेजसे त्वा। 卐 --वीर्याय त्वा 卐 --बलाय त्वा।

卐 तेजोऽसि तेजो मयि धेहि।

卐 वीर्यमसि वीर्यं मयि धेहि।

卐 बलमसि बलं मयि धेहि।

卐 नाना हि वा न्देवहितꣳ सदः कृतम्। मा सꣳसृक्षाथां परमे व्योमन्न्। सुरा त्वमसि शुष्मिणी सोम एषः। मा मा हिꣳसीस्स्वाँ योनि माऽविशन्न्।। 4।।

卐 उपयामगृहीतो-ऽस्याश्विन न्तेजः। 卐 --सारस्वतँ वीर्यम्। 卐 --ऐन्द्रं बलम्।

卐 एष ते योनि- र्मोदाय त्वा। 卐 --आनन्दाय त्वा 卐 --महसे त्वा।

卐 ओजो॑ऽस्योजो॒ मयि॑ धेहि।

卐 म॒न्यु र॑सि म॒न्युं मयि॑ धेहि।

卐 महो॑ऽसि॒ महो॒ मयि॑ धेहि।

卐 सहो॑ऽसि॒ सहो॒ मयि॑ धेहि।

卐 या व्या॒घ्रँ विषू॑चिका। उभौ वृकं॑च्च रक्ष॑ति। श्ये॒नं प॑त॒त्रिण॑ꣳ सि॒ꣳ॒हम्। सेमं पा॒त्वꣳहसः।।

卐 सं॒पृच॑स्स्थ॒ सं मा भ॒द्रेण पृ॒ङ्क्त।

卐 वि॒पृच॑स्स्थ॒ वि मा॑ पा॒प्मना॑ पृङ्क्त।। 5।। (ह॒विः प्र॒त्य'2'ङ्ङोमो॒ अति॑ द्रु॒तो गृह्णाम्याऽवि॒शन्विषू॑चिका॒ पञ्च॑ च। 1।)

☸❀ 卐 सोमो॒ राजाऽमृत॑ꣳ सु॒तः। ऋ॒जी॒षेणा॑जहा न्मृ॒त्युम्। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।-विपान॑ꣳ शु॒क्र मन्धसः। इन्द्रस्ये॒न्द्रियम्। इ॒दं पयो॒ऽमृ॒तं मधु।।

卐 सोम॑मद्भ्यो व्य॑पिबत्। छन्द॑सा ह॒ꣳस श्शु॑चि॒षत्। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।--

卐 अ॒द्भ्यः~ क्षी॒रँ व्य॑पिबत्।। 6।। ❀ क्रुङ्ङाङ्गि॒रसो॒ धि॒या। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।--

卐 अ॒न्ना त्परि॒स्रुतो॒ रस॑म्। ब्रह्म॑णा॒ व्य॑पिब त्क्ष॒त्रम्। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।--

卐 रेतो॒ मू॒त्रँ वि॒जहाति। योनिं॑ प्रवि॒श दि॑न्द्रि॒यम्। गर्भो॑ ज॒रायु॑णाऽऽवृतः। उल्ब ञ्जहाति॒ जन्म॑ना। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।। 7।।--

❀ 卐 वेदे॑न रू॒पे व्य॑करोत्। स॒तास॒ती प्र॒जाप॑तिः। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।--

卐 सोमे॑न॒ सोमौ॒ व्य॑पिबत्। सु॒तासु॒तौ प्र॒जाप॑तिः। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।--

卐 दृ॒ष्ट्वा रू॒पे व्याक॑रोत्। स॒त्यानृ॒ते प्र॒जाप॑तिः। अश्र॑द्धा॒ मनृ॑ते॒ऽदधात्। श्र॒द्धाꣳ स॒त्ये प्र॒जाप॑तिः। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।--

卐 दृ॒ष्ट्वा परि॒स्रुतो॒ रस॑म्। शु॒क्रेण॑ शु॒क्रँ व्य॑पिबत्। पय॒ स्सोमं॑ प्र॒जाप॑तिः। ऋ॒तेन॑ स॒त्य मि॑न्द्रि॒यम्।-विपान॑ꣳ शु॒क्र मन्धसः। इन्द्रस्ये॒न्द्रियम्। इ॒दं पयो॒ऽमृ॒तं मधु।। 8।। (अ॒द्भ्यः क्षी॒रँ व्य॑पिब॒ ज्जन्म॑नर्तेन॑ स॒त्य मि॑न्द्रि॒यꣳ श्र॒द्धाꣳ स॒त्ये प्र॒जाप॑तिरष्टौ॑ च। 2।)

☸❀ 卐 सु॒राव॑न्तं ब॒र्हि॒षद॑ꣳ सु॒वीर॑म्। य॒ज्ञꣳ हि॑न्वन्ति महि॒षा नमो॑भिः। द॒धाना॒ स्सोमं॑ न्दि॒वि दे॒वता॑सु। म॒दे॒मेन्द्रँ॒ यज॑माना स्स्व॒र्काः।।

卐 यस्ते रस स्सम्भृत ओषधीषु। सोमस्य शुष्म स्सुरया सुतस्य। तेन जिन्व यजमानं मदेन। सरस्वती मश्विना विन्द्र मग्निम्।।

卐 यमश्विना नमुचे रासुरा दधि। सरस्व त्यसनो दिन्द्रियाय।। 9।। ❀ इमन्त॰ शुक्रं मधुमन्त मिन्दुम्। सोम॰ राजान मिह भक्षयामि।।

卐 यदत्र रिप्त॰ रसिन स्सुतस्य। यदिन्द्रो अपिब च्छचीभिः। अह न्तदस्य मनसा शिवेन। सोम॰ राजान मिह भक्षयामि।।

卐 पितृभ्य स्स्वधाविभ्य स्स्वधा नमः।।

卐 पितामहेभ्य स्स्वधाविभ्य स्स्वधा नमः।।

卐 प्रपितामहेभ्य स्स्वधाविभ्य स्स्वधा नमः।।

卐 अक्ष न्पितरः।। 10।। ❀ अमीमदन्त पितरः। अतीतृपन्त पितरः। अमीमृजन्त पितरः। पितर श्शुन्धध्वम्।।

卐 पुनन्तु मा पितर स्सोम्यासः। पुनन्तु मा पितामहाः। पुनन्तु प्रपितामहाः। पवित्रेण शताऽयुषा।।

卐 पुनन्तु मा पितामहाः। पुनन्तु प्रपितामहाः।। 11।। ❀ पवित्रेण शताऽयुषा। विश्वमायु व्यश्ञवै।।

卐 अग्न आयू॰षि पवसे[1]❀ 卐ऽग्ने पवस्व[2]❀।

卐 पवमान स्सुवर्जनः[3]❀ 卐 पुनन्तु मा देवजनाः[4]❀।

卐 जातवेदः पवित्रव[5]❀ 卐यत्ते पवित्र मर्चिषि[6]❀।

卐 उभाभ्या न्देव सवित[7]❀ 卐 वैश्वदेवी पुनती[8]❀।

1
2
3
4
5
6
7
8

卐 ये समाना स्समनसः। पितरो यमराज्ये। तेषाँ लोक स्स्वधा नमः। यज्ञो देवेषु कल्पताम्।। 12।।

❀ 卐 ये सजाता स्समनसः। जीवा जीवेषु मामकाः। तेषा९ श्रीर्मयि कल्पताम्। अस्मि न्लोके शत९ समाः।।

卐 द्वे स्रुती अश्रृणवं पितृणाम्। अह न्देवाना मुत मर्त्यानाम्। याभ्या मिदँ विश्व मेज त्थसमेति। यदन्तरा पितरं मातरञ्च।।

卐 इद९ हविः प्रजननं मे अस्तु। दशवीर९ सर्वगणः स्वस्तये। आत्मसनि प्रजासनि। पशुस न्यभयसनि लोकसनि। अग्निः प्रजां बहुलां मे करोतु। अन्नं पयो रेतो अस्मासु धत्त। राय स्पोष मिष मूर्ज मस्मासु दीधर त्थ्स्वाहा।। 13।। (इन्द्रियाय पितर श्शताऽऽयुषा पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः कल्पता९ स्वस्तये पञ्च च। 3।)

❀ 卐 सीसेन तन्त्रं मनसा मनीषिणः। ऊर्णासूत्रेण कवयो वयन्ति। अश्विना यज्ञ९ सविता सरस्वती। इन्द्रस्य रूपँ वरुणो भिषज्यन्न्।।

卐 तदस्य रूप ममृत९ शचीभिः। तिस्रो दधु र्देवता स्स९रराणाः। लोमानि शष्पै र्बहुधा न तोक्मभिः। त्वगस्य मा९स मभवन्न लाजाः।।

卐 तदश्विना भिषजा रुद्रवर्तनी। सरस्वती वयति पेशो अन्तरः।। 14।। ❀ अस्थि मज्जानं मासरैः। कारोतरेण दधतो गवा न्त्वचि।।

卐 सरस्वती मनसा पेशलँ वसु। नासत्याभ्याँ वयति दर्शतँ वपुः। रसं परिस्रुता न रोहितम्। नग्नहु र्धीर स्तसर न्न वेम।।

卐 पयसा शुक्र ममृत ञ्जनित्रम्। सुरया मूत्रा ज्जनयन्ति रेतः। अपामति न्दुर्मतिं बाधमानाः। ऊवध्यँ वात९ सबुव न्तदारात्।। 15।।

❀ 卐 इन्द्र स्सुत्रामा हृदयेन सत्यम्। पुरोडाशेन सविता जजान। यकृ त्क्लोमानँ वरुणो भिषज्यन्न्। मतस्ने वायव्यैर्न मिनाति पित्तम्।।

卐 आन्त्राणि स्थाली मधु पिन्वमाना। गुदा पात्राणि सुदुघा न धेनुः। श्येनस्य पत्रन्न प्लीहा शचीभिः। आसन्दी नाभि रुदरन्न माता।।

卐 कुम्भो वनिष्ठु र्जनिता शचीभिः। यस्मि न्नग्रे योन्याङ्गर्भो अन्तः।। 16।। ❀ प्लाशी र्व्यक्त श्शतधार उथ्सः। दुहे न कुम्भीꣳ स्वधां पितृभ्यः।।

卐 मुखꣳ सदस्य शिर इथ्सदेन। जिह्वा पवित्र मश्विना सꣳ सरस्वती। चप्पन्न पायु र्भिषगस्य वालः। वस्तिर्न शेपो हरसा तरस्वी।।

卐 अश्विभ्या ञ्चक्षु रमृत ङ्ग्रहाभ्याम्। छागेन तेजो हविषा शृतेन। पक्ष्माणि गोधूमैः कुवलै रुतानि। पेशो न शुक्ल मसितँ वसाते।। 17।।

❀ 卐 अवि र्न मेषो नसि वीर्याय। प्राणस्य पन्था अमृतो ग्रहाभ्याम्। सरस्वत्युपवाकै र्व्यानम्। नस्यानि बर्हि र्बदरै र्जजान।।

卐 इन्द्रस्य रूप मृषभो बलाय। कर्णाभ्याꣳ श्रोत्र ममृत ङ्ग्रहाभ्याम्। यवा न बर्हि र्भ्रुवि केसराणि। कर्कन्धु जज्ञे मधु सारघं मुखात्।।

卐 आत्म न्नुपस्थे न वृकस्य लोम। मुखे श्मश्रूणि न व्याघ्रलोमम्।। 18।। ❀ केशा न शीर्षन् यशसे श्रियै शिखा। सिꣳहस्य लोम त्विषि रिन्द्रियाणि।।

卐 अङ्गान्यात्म न्भिषजा तदश्विना। आत्मान मङ्गै स्समधा थ्सरस्वती। इन्द्रस्य रूपꣳ शतमान मायुः। चन्द्रेण ज्योति रमृत न्दधाना।।

卐 सरस्वती योन्या ङ्गर्भमन्तः। अश्विभ्यां पत्नी सुकृतं बिभर्ति। अपाꣳ रसेन वरुणो न साम्ना। इन्द्रꣳ श्रियै जनय न्नप्सु राजा।।

卐 तेजः पशूनाꣳ हवि रिन्द्रियावत्। परिस्रुता पयसा सारघं मधु। अश्विभ्या न्दुग्धं भिषजा सरस्वत्या सुतासुताभ्याम्। अमृत स्सोम इन्दुः।। 19।। (अन्तर आरा दन्त र्वसाते व्याघ्रलोमꣳ राजा चत्वारि च। 4।)

❀ 卐 मित्रोऽसि 卐 वरुणोऽसि। 卐 समहँ विश्वै र्देवैः। 卐 क्षत्रस्य नाभिरसि। क्षत्रस्य योनिरसि।卐 स्योना मा सीद। सुषदा मा सीद।

卐 मा त्वा हिꣳसीत्। मा मा हिꣳसीत्।

卐 निषसाद धृतव्रतो वरुणः। पस्त्यास्वा।। 20।। ❀ साम्राज्याय सुक्रतुः।।

卐 देवस्य त्वा सवितुः प्रसवे। अश्विनो र्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। अश्विनो र्भैषज्येन। तेजसे ब्रह्मवर्चसा.याभिषिञ्चामि।।

卐 देवस्य त्वा सवितुः प्रसवे। अश्विनो र्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। सरस्वत्यै भैषज्येन।। 21।। ❀ वीर्यायान्नाद्या.याभिषिञ्चामि।।

卐 देवस्य त्वा सवितुः प्रसवे। अश्विनो र्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। इन्द्र.स्येन्द्रियेण। श्रियै यशसे बला.याभिषिञ्चामि।।

卐 कोऽसि कतमोऽसि। कस्मै त्वा काय त्वा।

卐 सुश्लोकाँ '4' 卐 सुमङ्गलाँ '4' 卐 सत्यराजा '3' न्।

卐 शिरो मे श्रीः।। 22।। ❀ 卐 यशो मुखम्। 卐 त्विषिः केशाश्च श्मश्रूणि। 卐 राजा मे प्राणोऽमृतम्। 卐 सम्राड्चक्षुः। 卐 विराट्छ्रोत्रम्। 卐 जिह्वा मे भद्रम्। 卐 वाङ्महः। 卐 मनो मन्युः। 卐 स्वराड्भामः। 卐 मोदाः प्रमोदा अङ्गुली रङ्गानि।। 23।। ❀ 卐 चित्तं मे सहः। 卐 बाहू मे बल मिन्द्रियम्। 卐 हस्तौ मे कर्म वीर्यम्। 卐 आत्मा क्षत्र मुरो मम। 卐 पृष्टी र्मे राष्ट्र मुदर मꣳसौ। 卐 ग्रीवाश्च श्रोण्यौ। 卐 ऊरू अरत्नी जानुनी। 卐 विशो मेऽङ्गानि सर्वतः। 卐 नाभि र्मे चित्तँ विज्ञानम्। 卐 पायु र्मेऽपचिति र्भसत्।। 24।। ❀ 卐 आनन्दनन्दा वाण्डौ मे। 卐 भग स्सौभाग्यं पसः। 卐 जङ्घाभ्यां पद्भ्या न्धर्मोऽस्मि। विशि राजा प्रतिष्ठितः। 卐 प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे। प्रत्यश्वेषु प्रति तिष्ठामि गोषु। प्रत्यङ्गेषु प्रति तिष्ठा म्यात्मन्न्। प्रति प्राणेषु प्रतितिष्ठामि पुष्टे। प्रति द्यावापृथिव्योः। प्रति तिष्ठामि यज्ञे।। 25।। ❀ 卐 त्रया देवा एकादश। त्रयस्त्रिꣳशा स्सुराधसः। बृहस्पतिपुरोहिताः। देवस्य सवितु स्सवे। देवा देवै रवन्तु मा। प्रथमा द्वितीयैः। द्वितीया स्तृतीयैः। तृतीया स्सत्येन। सत्यँ यज्ञेन। यज्ञो यजुर्भिः।। 26।। ❀ यजूꣳषि सामभिः। सामा.न्यृग्भिः। ऋचो याज्याभिः। याज्या वषट्कारैः। वषट्कारा आहुतिभिः। आहुतयो मे कामा न्थ्समर्धयन्तु। 卐 भूस्स्वाहा। 卐 लोमानि प्रयति र्मम। 卐 त्वङ्म आनति रागतिः। 卐 माꣳसं म उपनतिः। 卐 वस्वस्थि। मज्जा म आनतिः।। 27।। (पस्त्यास्वा सरस्वत्यै भैषज्येन श्रीरङ्गानि भस द्यज्ञे यज्ञो यजुर्भि रुपनति र्द्वे च। 5।)

卐 यद्देवा देवहेडनम्। देवास श्चकृमा वयम्। अग्निर्मा तस्मा देनसः। विश्वा न्मुञ्च त्वꣳहसः।।

卐 यदि दिवा यदि नक्तम्। एनाꣳसि चकृमा वयम्। वायु र्मा तस्मा देनसः। विश्वा न्मुञ्च त्वꣳहसः।।

卐 यदि जाग्र द्यदि स्वप्ने। एनाꣳसि चकृमा वयम्।। 28।। सूर्यो मा तस्मा देनसः। विश्वा न्मुञ्च त्वꣳहसः।।

卐 यद्ग्रामे यदरण्ये। यथ्सभायाँ यदिन्द्रिये। यच्छूद्रे यदर्ये। एन श्चकृमा वयम्। यदेकस्याधि धर्मणि। तस्यावयजनमसि।।

卐 यदापो अघ्निया वरुणेति शपामहे। ततो वरुण नो मुञ्च।। 29।।

卐 अवभृथ निचङ्कुण निचेरुरसि निचङ्कुण। अव देवै र्देवकृत मेनोऽयाट्। अव मर्त्यै र्मर्त्यकृतम्। उरो रा नो देव रिष स्पाहि।।

卐 सुमित्रा न आप ओषधय स्सन्तु। दुर्मित्रा स्तस्मै भूयासुः। योऽस्मा न्द्वेष्टि। यञ्च वय न्द्विष्मः।।

卐 द्रुपदा दिवे न्मुमुचानः। स्विन्न स्स्नात्वी मलादिव।। 30।। पूतँ पवित्रेणेवाऽऽज्यम्। आप श्शुन्धन्तु मैनसः।।

卐 उद्वय न्तमस स्परि। पश्यन्तो ज्योति रुत्तरम्। देव न्देवत्रा सूर्यम्। अगन्म ज्योति रुत्तमम्।।

卐 प्रतियुतो वरुणस्य पाशः। प्रत्यस्तो वरुणस्य पाशः। 卐 एधोऽस्येधिषीमहि। 卐 समिदसि।। 31।। 卐 तेजोऽसि तेजो मयि धेहि।

卐 अपो अन्वचारिषम्। रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आऽगमम्। तं मा सꣳ सृज वर्चसा। प्रजया च धनेन च।।

卐 समाववर्ति पृथिवी। समुषाः। समु सूर्यः। समु विश्व मिद ञ्जगत्। वैश्वानरज्योति र्भूयासम्। विभुङ्कामँ व्यञ्ज्ञवै।। 卐 भूस्स्वाहा।। 32।। (स्वप्न एनाꣳसि चकृमा वयं मुञ्च मलादिव समिदसि जगत्त्रीणि च। 6।)

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 होता यक्ष थ्समिधेन्द्र मिडस्पदे। नाभा पृथिव्या अधि। दिवो वर्ष्म'2'न्थ्समिध्यते। ओजिष्ठश्चर्षणी सहान्। वेत्वाज्यस्य होत र्यज।।
卐 होता यक्ष त्तनूनपातम्। ऊतिभि र्जेतार मपराजितम्। इन्द्र न्देव॰ सुवर्विदम्। पथिभि र्मधुमत्तमैः। नराश॰सेन तेजसा।। 33।। ❀ वेत्वाज्यस्य होत र्यज।।
卐 होता यक्ष दिडाभि रिन्द्र मीडितम्। आजुह्वान ममर्त्यम्। देवो देवै स्सवीर्यः। वज्रहस्तः पुरन्दरः। वेत्वाज्यस्य होत र्यज।।
卐 होता यक्ष द्बर्हिषीन्द्र न्निषद्वरम्। वृषभ न्नर्यापसम्। वसुभी रुद्रै रादित्यैः। सयुग्भि र्बर्हि राऽसदत्।। 34।। ❀ वेत्वाज्यस्य होत र्यज।।
卐 होता यक्ष दोजो न वीर्यम्। सहो द्वार इन्द्र मवर्धयन्न्। सुप्रायणा विश्रयन्ता मृतावृधः। द्वार इन्द्राय मीढुषे। वियन्त्वाज्यस्य होत र्यज।।
卐 होता यक्ष दुषे इन्द्रस्य धेनू। सुदुघे मातरौ मही। सवातरौ न तेजसी। वथ्स मिन्द्र मवर्धताम्।। 35।। ❀ वीता माज्यस्य होत र्यज।।
卐 होता यक्ष द्दैव्या होतारा। भिषजा सखाया। हविषेन्द्रं भिषज्यतः। कवी देवौ प्रचेतसौ। इन्द्राय धत्त इन्द्रियम्। वीता माज्यस्य होत र्यज।।
卐 होता यक्ष त्तिस्रो देवीः। त्रय स्त्रिधातवो पसः। इडा सरस्वती भारती।। 36।। ❀ महीन्द्रपत्नीर् हविष्मतीः। विय न्त्वाज्यस्य होत र्यज।।
卐 होता यक्ष त्त्वष्टार मिन्द्र न्देवम्। भिषज॰ सुयजङ्घृतश्रियम्। पुरुरूप॰ सुरेतसं मघोनिम्। इन्द्राय त्वष्टा दध दिन्द्रियाणि। वेत्वाज्यस्य होत र्यज।।
卐 होता यक्ष द्वनस्पतिम्। शमितार॰ शतक्रतुम्। धियो जोष्टार मिन्द्रियम्।। 37।। ❀ मध्वा समञ्ज न्पथिभि स्सुगेभिः। स्वदाति हव्यं मधुना घृतेन। वेत्वाज्यस्य होत र्यज।।
卐 होता यक्ष दिन्द्र॰ स्वाहाऽऽज्यस्य। स्वाहा मेदसः। स्वाहा स्तोकानाम्। स्वाहा स्वाहाकृतीनाम्। स्वाहा हव्यसूक्तीनाम्। स्वाहा देवा॰ आज्यपान्। स्वाहेन्द्र॰ होत्रा ज्जुषाणाः। इन्द्र आज्यस्य वियन्तु। होत र्यज।। 38।। (तेजसाऽसद दवर्धतां भारतीन्द्रिय ञ्जुषाणा द्वे च।

7। समिधेन्द्र न्तनूनपात मिडाभि बर्हिष्योज उषे दैव्या तिस्र स्त्वष्टाँरँ वनस्पति मिन्द्रम्।। समिधेन्द्रश्चतु र्वैत्वेको वियन्तु द्विर्वीता मेको वियन्तु द्विर्वैत्वेको वियन्तु होत र्यज।)

卐 समिद्ध इन्द्र उषसा मनीके। पुरोरुचा पूर्वकृ द्वावृधानः। त्रिभि र्देवै स्त्रिꣳशता वज्रबाहुः। जघान वृत्रँ विदुरो ववार।।

卐 नराशꣳसꣳ प्रति शूरो मिमानः। तनूनपा त्प्रति यज्ञस्य धाम। गोभि र्वपावा न्मधुना समञ्जन्न्। हिरण्यै श्चन्द्री यजति प्रचेताः।।

卐 ईडितो देवैर् हरिवाꣳ अभिष्टिः। आजुह्वानो हविषा शर्धमानः।। 39।। ❀ पुरन्दरो मघवान् वज्रबाहुः। आ यातु यज्ञ मुप नो जुषाणः।।

卐 जुषाणो बर्हिर् हरिवान्न इन्द्रः। प्राचीनꣳ सीद त्प्रदिशा पृथिव्याः। उरुव्यचाꣳ प्रथमानꣳ स्योनम्। आदित्यै रक्तँ वसुभि स्सजोषाः।।

卐 इन्द्र न्दुरꣳ कवष्यो धावमानाः। वृषाणँ यन्तु जनय स्सुपत्नीः। द्वारो देवी रभितो वि श्रयन्ताम्। सुवीरा वीरं प्रथमाना महोभिः।। 40।।

❀ 卐 उषासानक्ता बृहती बृहन्तम्। पयस्वती सुदुघे शूर मिन्द्रम्। पेशस्वती तन्तुना सँव्ययन्ती। देवाना न्देवँ यजत स्सुरुक्मे।।

卐 दैव्या मिमाना मनसा पुरुत्रा। होताराविन्द्रं प्रथमा सुवाचा। मूर्धन् यज्ञस्य मधुना दधाना। प्राचीन ञ्ज्योतिर् हविषा वृधातः।।

卐 तिस्रो देवीर् हविषा वर्धमानाः। इन्द्रञ्जुषाणा वृषणन्न पत्नीः।। 41।। ❀ अच्छिन्न न्तन्तुं पयसा सरस्वती। इडा देवी भारती विश्वतूर्तिः।।

卐 त्वष्टा दध दिन्द्राय शुष्मम्। अपाकोऽचिष्टु र्यशसे पुरूणि। वृषा यज न्वृषणं भूरिरेताः। मूर्धन् यज्ञस्य समनक्तु देवान्।।

卐 वनस्पति रवसृष्टो न पाशैः। त्मन्या समञ्ज न्छमिता न देवः। इन्द्रस्य हव्यै र्जठरं पृणानः। स्वदाति हव्यं मधुना घृतेन।।

卐 स्तोकाना मिन्दुं प्रति शूर इन्द्रः। वृषायमाणो वृषभ स्तुराषाट्। घृतप्रुषा मधुना हव्य मुन्दन्न्। मूर्धन् यज्ञस्य जुषताꣳ स्वाहा।। 42।। (शर्धमानो महोभिꣳ पत्नी र्घृतेन चत्वारि च। 8।)

卐 आ च॒र्ष॒णिप्रा[1] ❀ 卐 वि॒वे॒ष यन्मा[2] ❀। 卐 त॒ स॒ध्रीचीः ❀[3]।

卐 स॒त्य मित्तन्न त्वावा॒ अ॒न्यो अ॒स्ति। इन्द्र दे॒वो न मर्त्यो॒ ज्याया॒न्। अह॒ न्नहिं परि॒शया॒न मर्णः। अवा॑सृजो॒ऽपो अच्छा समु॒द्रम्।।

卐 प्र स॑साहिषे पुरुहूत॒ शत्रू॒न्। ज्येष्ठस्ते॒ शुष्म॑ इ॒ह रा॒ति रस्तु। इन्द्राऽऽभ॒र द॒क्षिणेना॒ वसू॒नि। पति॒ स्सिन्धू॒ना मसि॒ रेवतीनाम्।।

卐 स शेवृ॒ध मधि धा द्युम्न म॒स्मे। महि॒ क्षत्र॒ञ्जनाषाडिन्द्र॒ तव्यम्। रक्षा च नो म॒घोनः पा॒हि सू॒रीन्। रा॒ये च न स्स्वपत्या इ॒षे धाः।। 43।। (रेवतीना श्चत्वारि च। 9।)

卐 दे॒वं ब॒र्हि रिन्द्र॒ सु॒दे॒व न्दे॒वैः। वी॒रव थ्स्ती॒र्णं वेद्या मवर्धयत्। वस्तो॒ वृ॒तं प्राक्तो भृ॒तम्। रा॒या ब॒र्हिष्मतो॒ऽत्यगात्। व॒सु॒वने॒ वसु॒धेयस्य वेतु॒ यज।।

卐 दे॒वी द्वार॒ इन्द्र॒ सङ्घा॒ते। वि॒ड्वी याम॒ न्नवर्धयन्न्। आ व॒थ्सेन॒ तरुणेन कुमा॒रेण च मीवि॒ता अपा॒र्वाणम्। रे॒णुककाट न्नुदन्ताम्। व॒सु॒वने॒ वसु॒धेयस्य वियन्तु॒ यज।। 44।।

❀ 卐 दे॒वी उ॒षासानक्ता। इन्द्रं य॒ज्ञे प्रयत्यह्वेताम्। दैवी॒ विशः प्रायासिष्टाम्। सुप्रीते॒ सुधि॒ते अभूताम्। व॒सु॒वने॒ वसु॒धेयस्य वीतां॒ यज।।

卐 दे॒वी जोष्ट्री॒ वसु॒धिती। दे॒व मिन्द्र मवर्धताम्। अयाव्य॒न्याऽघा द्वेषा॒सि। आऽन्याऽवाक्षी॒ द्वसु॒ वार्याणि। यजमानाय शिक्षि॒ते।। 45।। ❀ व॒सु॒वने॒ वसु॒धेयस्य वीतां॒ यज।।

卐 दे॒वी ऊर्जाहु॒ती दुघे॒ सु॒दुघे। पय॒सेन्द्र मवर्धताम्। इ॒ष मू॒र्ज म॒न्याऽवाक्षीत्। सग्धि॒ सपीति म॒न्या। नवे॒न पूर्व॒ न्दयमाने। पु॒राणेन॒ नवम्। अधाता॒ मूर्ज मू॒र्जाहुती॒ वसु॒ वार्याणि। यजमानाय शिक्षि॒ते। व॒सु॒वने॒ वसु॒धेयस्य वीतां॒ यज।। 46।।

❀ 卐 दे॒वा दैव्या॒ होता॑रा। दे॒व मिन्द्र मवर्धताम्। ह॒ताघश॒सा॒ वाभाष्टां॒ वसु॒ वार्याणि। यजमानाय शिक्षि॒तौ। व॒सु॒वने॒ वसु॒धेयस्य वीतां॒ यज।।

卐 दे॒वी स्तिस्र स्तिस्रो दे॒वीः। पति॒ मिन्द्र मवर्धयन्न्। अस्पृक्ष॒ द्भार॑ती॒ दिवम्। रु॒द्रै य॒ज्ञ॒ सरस्वती। इडा॒ वसु॒मती गृहा॒न्।। 47।। ❀ व॒सु॒वने॒ वसु॒धेयस्य वियन्तु॒ यज।।

---

1

2

3

卐 देव इन्द्रो नराशꣳसः। त्रिवरूथ स्त्रिवन्धुरः। देव मिन्द्र मवर्धयत्। शतेन शितिपृष्ठाना माहितः। सहस्रेण प्र वर्तते। मित्रावरुणेदस्य होत्र मर्हतः। बृहस्पति स्स्तोत्रम्। अश्विनाऽऽध्वर्यवम्। वसुवने वसुधेयस्य वेतु यज।। 48।।

❀ 卐 देव इन्द्रो वनस्पतिः। हिरण्यपर्णो मधुशाख स्सुपिप्पलः। देव मिन्द्र मवर्धयत्। दिव मग्रेणाप्रात्। आऽन्तरिक्षं पृथिवी मदृꣳहीत्। वसुवने वसुधेयस्य वेतु यज।।

卐 देवं बर्हि र्वारितीनाम्। देव मिन्द्र मवर्धयत्। स्वासस्थ मिन्द्रेणाऽऽसन्नम्। अन्या बर्हीꣳष्यभ्यभूत्। वसुवने वसुधेयस्य वेतु यज।।

卐 देवो अग्नि स्स्विष्टकृत्। देव मिन्द्र मवर्धयत्। स्विष्टङ्कुर्व'2'न्थ्स्विष्टकृत्। स्विष्ट मद्य करोतु नः। वसुवने वसुधेयस्य वेतु यज।। 49।। (वियन्तु यज शिक्षिते शिक्षिते वसुवने वसुधेयस्य वीताँ यज गृहान् वेतु यजाभूथ्षड्व। 10। देवं बर्हि र्दैवी र्द्वारो देवी उषासानक्ता देवी जोष्ट्री देवी ऊर्जाहुती देवा दैव्या होतारा शिक्षितौ देवी स्तिस्र स्तिस्रो देवीः पति न्देव इन्द्रो नराशꣳसो देव इन्द्रो वनस्पति र्दैवं बर्हि र्वारितीना न्देवो अग्नि स्स्विष्टकृ द्देवम्। वेतु वियन्तु चतु र्वीता मेको वियन्तु चतुर्वैत्ववर्धय दवर्धय न्त्रिरवर्धता मेको वर्धयꣳ श्चतु रवर्धयत्। वस्तो रा वथ्सेन दैवी रयावीषꣳ हता स्पृक्ष च्छतेन दिवꣳ स्वासस्थꣳ स्विष्टꣳ शिक्षिते शिक्षिते शिक्षितौ।)

❀ 卐 होता यक्ष थ्समिधाऽग्नि मिडस्पदे। अश्विनेन्द्रꣳ सरस्वतीम्। अजो धूम्रो न गोधूमैः क्वलै र्भेषजम्। मधु शष्पैर्न तेज इन्द्रियम्। पयस्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष त्तनूनपाथ्सरस्वती। अवि र्मेषो न भेषजम्। पथा मधुमताऽऽभरन्न्। अश्विनेन्द्राय वीर्यम्।। 50।। ❀ बदरै रुपवाकाभि र्भेषज न्तोक्मभिः। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष न्नराशꣳसन्न नग्नहुम्। पतिꣳ सुरायै भेषजम्। मेष स्सरस्वती भिषक्। रथो न चन्द्यश्विनो र्वपा इन्द्रस्य वीर्यम्। बदरै रुपवाकाभि र्भेषज न्तोक्मभिः। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।। 51।।

❀ 卐 होता यक्ष दिडेडित आजुह्वान स्सरस्वतीम्। इन्द्रं बलेन वर्धयन्न्। ऋषभेण गवेन्द्रियम्। अश्विनेन्द्राय वीर्यम्। यवैः कर्कन्धुभिः। मधु लाजैर्न मासरम्। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष द्वरुहि स्सुष्टरी मोर्णम्रदाः। भिषङ्नासत्या।। 52।। ❀ भिषजाऽश्विनाऽश्वा शिशुमती। भिष ग्धेनु स्सरस्वती। भिष ग्दुह इन्द्राय भेषजम्। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष दुरो दिशः। कवष्यो न व्यचस्वतीः। अश्विभ्यान्न दुरो दिशः। इन्द्रो न रोदसी दुघे। दुहे कामा न्थ्सरस्वती।। 53।। ❀ अश्विनेन्द्राय भेषजम्। शुक्रन्न ज्योति रिन्द्रियम्। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष थ्सुपेशसोषे नक्त न्दिवा। अश्विना सञ्जानाने। समञ्जाते सरस्वत्या। त्विषि मिन्द्रे न भेषजम्। श्येनो न रजसा हृदा। पय स्सोमः परिस्रुता घृतं मधु।। 54।। ❀ वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष दैव्या होतारा भिषजाऽश्विना। इन्द्रन्न जागृवी दिवा नक्तन्न भेषजैः। शूष९ सरस्वती भिषक्। सीसेन दुह इन्द्रियम्। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष त्तिस्रो देवीर्न भेषजम्। त्रय स्त्रिधातवो पसः। रूप मिन्द्रे हिरण्ययम्।। 55।। ❀ अश्विनेडा न भारती। वाचा सरस्वती। मह इन्द्राय दधु रिन्द्रियम्। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष त्त्वष्टार मिन्द्र मश्विना। भिषजन्न सरस्वतीम्। ओजो न जूति रिन्द्रियम्। वृको न रभसो भिषक्। यश स्सुरया भेषजम्।। 56।। ❀ श्रिया न मासरम्। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष द्वनस्पतिम्। शमितार९ शतक्रतुम्। भीमन्न मन्यु९ राजानँ व्याघ्र न्नमसाऽश्विना भामम्। सरस्वती भिषक्। इन्द्राय दुह इन्द्रियम्। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।। 57।।

❀ 卐 होता यक्ष दग्निꣳ स्वाहाऽऽज्यस्य स्तोकानाम्। स्वाहा मेदसां पृथक्। स्वाहा छाग मश्विभ्याम्। स्वाहा मेषꣳ सरस्वत्यै। स्वाहरृषभ मिन्द्राय सिꣳहाय सहसेन्द्रियम्। स्वाहाऽग्निन्न भेषजम्। स्वाहा सोम मिन्द्रियम्। स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारँ वरुणं भिषजां पतिम्। स्वाहा वनस्पतिं प्रियं पाथो न भेषजम्। स्वाहा देवाꣳ आज्यपान्।। 58।।❀ स्वाहाऽग्निꣳ होत्रा ज्जुषाणो अग्नि भेषजम्। पय स्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होत र्यज।।

卐 होता यक्ष दश्विना सरस्वती मिन्द्रꣳ सुत्रामाणम्। इमे सोमा स्सुरामाणः। छागैर्न मेषैर् ऋषभै स्सुताः। शष्पैर्न तोक्मभिः। लाजै र्महस्वन्तः। मदा मासरेण परिष्कृताः। शुक्राः पयस्वन्तोऽमृताः। प्रस्थिता वो मधुश्चुतः। तानश्विना सरस्वतीन्द्र स्सुत्रामा वृत्रहा। जुषन्ताꣳ सौम्यं मधु। पिबन्तु मदन्तु वियन्तु सोमम्। होत र्यज।। 59।। (वीर्यँ वियन्त्वाज्यस्य होतर्यज नासत्या सरस्वती मधु हिरण्ययं भेषजँ वियन्त्वाज्यस्य होतर्यजाऽऽज्यपा नमृताः पञ्च च। 10। समिधाग्निꣳ षट्। तनूनपाथ्सप्त। नराशꣳस मृषिः। इडेडितो यवै रष्टौ। बर्हि स्सप्त। दुरोऽश्विना नव। सुपेशसरृषिः। दैव्या होतारा सीसेन रसः। तिस्र स्त्वष्टार मष्टावष्टौ। वनस्पति मृषिः। अग्नि न्त्रयोदश। अश्विना द्वादश त्रयोदश। समिधाऽग्निं बदरै र्बदरै र्यवै रश्विना त्विषि मश्विना न भेषजꣳ रूप मश्विना भीमं भामम्।)

❀ 卐 समिद्धो अग्नि रश्विना। तप्तो घर्मो विराट्थ्सुतः। दुहे धेनु स्सरस्वती। सोमꣳ शुक्र मिहेन्द्रियम्।।

卐 तनूपा भिषजा सुते। अश्विनोभा सरस्वती। मध्वा रजाꣳसीन्द्रियम्। इन्द्राय पथिभि र्वहान्।।

卐 इन्द्रायेन्दुꣳ सरस्वती। नराशꣳसेन नग्नहुः।। 60।।❀ अधाता मश्विना मधु। भेषजं भिषजा सुते।।

卐 आजुह्वाना सरस्वती। इन्द्रायेन्द्रियाणि वीर्यम्। इडाभि रश्विनाविषम्। समूर्जꣳ सꣳ रयि न्दधुः।।

卐 अश्विना नमुचे स्सुतम्। सोमꣳ शुक्रं परिस्रुता। सरस्वती तमाऽभरत्। बर्हिषेन्द्राय पातवे।। 61।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

❀ 卐 कवष्यो न व्यचस्वतीः। अश्विभ्यान्न दुरो दिशः। इन्द्रो न रोदसी दुघे। दुहे कामा न्थ्सरस्वती।।

卐 उषासा नक्त मश्विना। दिवेन्द्र॰ साय मिन्द्रियैः। सञ्जानाने सुपेशसा। समञ्जाते सरस्वत्या।।

卐 पातन्नो अश्विना दिवा। पाहि नक्त॰ सरस्वति।। 62।। ❀ दैव्या होतारा भिषजा। पात मिन्द्र॰ सचा सुते।।

卐 तिस्र स्त्रेधा सरस्वती। अश्विना भारतीडा। तीव्रं परिस्रुता सोमम्। इन्द्राय सुषवु मदम्।।

卐 अश्विना भेषजं मधु। भेषजन्न स्सरस्वती। इन्द्रे त्वष्टा यश श्श्रियम्। रूप॰रूप मधुस्सुते।

卐 ऋतुथेन्द्रो वनस्पतिः। शशमानः परिस्रुता। कीलाल मश्विभ्यां मधु। दुहे धेनु स्सरस्वती।।

卐 गोभिर्न सोम मश्विना। मासरेण परिष्कृता। समधाता॰ सरस्वत्या। स्वाहेन्द्रे सुतं मधु।। 63।। (नग्नहुः पातवे सरस्वत्यधु स्सुतेऽष्टौ च। 12।)

❀ 卐 अश्विना हवि रिन्द्रियम्। नमुचे र्धिया सरस्वती। आ शुक्र मासुरा द्वसु। मघ मिन्द्राय जभ्रिरे।।

卐 यमश्विना सरस्वती। हविषेन्द्र मवर्धयन्न्। स बिभेद वलं मघम्। नमुचा वासुरे सचा।।

卐 तमिन्द्रं पशव स्सचा। अश्विनोभा सरस्वती।। 64।। ❀ दधाना अभ्यनूषत। हविषा यज्ञ मिन्द्रियम्।

卐 य इन्द्र इन्द्रिय न्दधुः। सविता वरुणो भगः। स सुत्रामा हविष्पतिः। यजमानाय सश्चत।।

卐 सविता वरुणो दधत्। यजमानाय दाशुषे। आऽदत्त नमुचे र्वसु। सुत्रामा बल मिन्द्रियम्।। 65।।

❀ 卐 वरुणः~ क्षत्र मिन्द्रियम्। भगेन सविता श्रियम्। सुत्रामा यशसा बलम्। दधाना यज्ञ माशत।।

卐 अश्विना गोभि रिन्द्रियम्। अश्वेभि र्वीर्यं बलम्। हविषेन्द्र॰ सरस्वती। यजमान मवर्धयन्न्।।

卐 ता नासत्या सुपेशसा। हिरण्यवर्तनी नरा। सरस्वती हविष्मती। इन्द्र कर्मसु नोऽवत।।

卐 ता भिषजा सुकर्मणा। सा सुदुघा सरस्वती। स वृत्रहा शतक्रतुः। इन्द्राय दधु रिन्द्रियम्।। 66।। (उभा सरस्वती बल मिन्द्रिय न्नरा षट्च। 13।)

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

❀ 卐 देवं बर्हि स्सरस्वती। सुदेव मिन्द्रे अश्विना। तेजो न चक्षु रक्ष्योः। बर्हिषा दधु रिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज।।
卐 देवी द्वारो अश्विना। भिषजेन्द्रे सरस्वती। प्राणन्न वीर्यन्नसि। द्वारो दधु रिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज।। 67।।
❀ 卐 देवी उषासा वश्विना। भिषजेन्द्रे सरस्वती। बल न्न वाच मास्ये। उषाभ्या न्दधु रिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज।।
卐 देवी जोष्ट्री अश्विना। सुत्रामेन्द्रे सरस्वती। श्रोत्रन्न कर्णयो र्यशः। जोष्ट्रीभ्या न्दधु रिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज।। 68।।
❀ 卐 देवी ऊर्जाहुती दुघे सुदुघे। पयसेन्द्रꣳ सरस्वत्यश्विना भिषजाऽवत। शुक्रन्न ज्योति स्तनयो राहुती धत्त इन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज।।
卐 देवा देवानां भिषजा। होतारा विन्द्र मश्विना। वषट्कारै स्सरस्वती। त्विषिन्न हृदये मतिम्। होतृभ्या न्दधु रिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज।। 69।।
❀ 卐 देवी स्तिस्र स्तिस्रो देवीः। सरस्व त्यश्विना भारतीडा। शूषन्न मध्ये नाभ्याम्। इन्द्राय दधु रिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज।।
卐 देव इन्द्रो नराशꣳसः। त्रिवरूथ स्सरस्वत्याऽश्विभ्या मीयते रथः। रेतो न रूप ममृत ञ्जनित्रम्। इन्द्राय त्वष्टा दध दिन्द्रियाणि। वसुवने वसुधेयस्य वियन्तु यज।। 70।।
❀ 卐 देव इन्द्रो वनस्पतिः। हिरण्यपर्णो अश्विभ्याम्। सरस्वत्या स्सुपिप्पलः। इन्द्राय पच्यते मधु। ओजो न जूति मृषभो न भामम्। वनस्पतिर्नो दध दिन्द्रियाणि। वसुवने वसुधेयस्य वियन्तु यज।।
卐 देवं बर्हि र्वारितीनाम्। अध्वरे स्तीर्ण मश्विभ्याम्। ऊर्णम्रदा स्सरस्वत्याः।। 71।। ❀ स्योन मिन्द्र ते सदः। ईशायै मन्युꣳ राजानं बर्हिषा दधु रिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज।।
卐 देवो अग्नि स्स्विष्टकृत्। देवान् यक्ष द्यथायथम्। होतारा विन्द्र मश्विना। वाचा वाचꣳ सरस्वतीम्। अग्निꣳ सोमꣳ स्विष्टकृत्। स्विष्ट इन्द्र स्सुत्रामा सविता वरुणो भिषक्। इष्टो देवो वनस्पतिः। स्विष्टा देवा आज्यपाः। इष्टो अग्नि रग्निना। होता होत्रे स्विष्टकृत्। यशो न दध

दिन्द्रियम्। ऊर्जं मपचितिꣳ स्वधाम्। वसुवने वसुधेयस्य वियन्तु यज।। 72।। (द्वारो दधु रिन्द्रियँ वसुवने वसुधेयस्य वियन्तु यज जोष्ट्रीभ्या न्दधु रिन्द्रियँ वसुवने वसुधेयस्य वियन्तु यज होतृभ्या न्दधु रिन्द्रियँ वसुवने वसुधेयस्य वियन्तु यजेन्द्रियाणि वसुवने वसुधेयस्य वियन्तु यज सरस्वत्या वनस्पति ष्षट्च। 14। देवं बर्हि र्दैवी द्वारो देवी उषासावश्विना देवी जोष्ट्री देवी ऊर्जाहुती देवा देवानां भिषजा देवी स्तिस्र स्तिस्रो देवी र्दैव इन्द्रो नराशꣳसो देव इन्द्रो वनस्पति र्दैवं बर्हि र्वारितीना न्देवो अग्नि स्स्विष्टकृ द्देवान्। होता यक्ष थ्समिधाऽग्नि न्देवं बर्हि स्सरस्वत्यश्विना सर्वे वियन्तु। द्वार स्तिस्र स्सर्वे वियन्तु। अज इन्द्र मोजोऽग्निं पर स्सरस्वतीम्। नक्तंपूर्वं स्सरस्वति। अन्यत्र सरस्वती। भिषक्पूर्व न्दुह इन्द्रियम्। अन्यत्र दधु रिन्द्रियम्। सौत्रामण्याꣳ सुतासुती। अञ्जन्त्ययँ यजमानः।)

❀ 卐 अग्नि मद्य होतार मवृणीत। अयꣳ सुतासुती यजमानः। पचन्पक्तीः। पच न्पुरोडाशान्। गृह्णन्ग्रहान्। बध्न न्नश्विभ्या ञ्छागꣳ सरस्वत्या इन्द्राय। बध्न‘2’न्थ्सरस्वत्यै मेष मिन्द्रायाश्विभ्याम्। बध्न न्निन्द्रायरृषभ मश्विभ्याꣳ सरस्वत्यै। सूपस्था अद्य देवो वनस्पति रभवत्। अश्विभ्याञ्छागेन सरस्वत्या इन्द्राय।। 73।।❀ सरस्वत्यै मेषेणेन्द्रायाश्विभ्याम्। इन्द्रायरृषभेणाश्विभ्याꣳ सरस्वत्यै। अक्षꣳ स्तान्मेदस्तꣳ प्रतिपचताग्रभीषुः। अवीवृधन्त ग्रहैः। अपाता मश्विना सरस्वतीन्द्र स्सुत्रामा वृत्रहा। सोमा न्थ्सुराम्णः। उपो उक्थामदा श्श्रौद्विमदा अदन्न्। अवीवृधन्ताङ्गूषैः। त्वामद्यरृष आर्षेय ऋषीणा न्नपा दवृणीत। अयꣳ सुतासुती यजमानः। बहुभ्य आ सङ्गतेभ्यः। एष मे देवेषु वसु वार्या यक्ष्यत इति। ता या देवा देवदाना न्यदुः। तान्यस्मा आ च शास्व। आ च गुरस्व। इषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः। सूक्तवाकाय सूक्ता ब्रूहि।। 74।। (इन्द्राय यजमान स्सप्त च। 15।)

❀ 卐 उशन्तस्त्वा हवामह[1]❋ 卐 आ नो अग्ने सुकेतुना[2]❋ ।

卐 त्वꣳ सोम महे भग[3]❋ 卐 न्त्वꣳ सोम प्रचिकितो मनीषा[4]❋।

1

2

3

4

卐 त्वया हि नꣳ पितर स्सोम पूर्वे[1]❀ 卐 त्वꣳ सोम पितृभि स्सँविदानः[2]❀।

卐 बर्हिषदꣳ पितर[3]❀ 卐 आऽहं पितृन्[4]❀।

卐 उपहूताꣳ पितरो[5]❀ 卐ऽग्निष्वात्ताꣳ पितरः[6]❀।

卐 अग्निष्वात्ता नृतुमतो हवामहे। नराशꣳसे सोमपीथँ य आशुः। ते नो अर्वन्त स्सुहवा भवन्तु। शन्नो भवन्तु द्विपदे शञ्चतुष्पदे।।

卐 ये अग्निष्वात्ता येऽनग्निष्वात्ताः।। 75।। ❀ अꣳहोमुचꣳ पितर स्सोम्यासः। परेऽवरेऽमृतासो भवन्तः। अधिब्रुवन्तु ते अवन्त्वस्मान्।।

卐 वान्यायै दुग्धे जुषमाणाꣳ करम्भम्। उदीराणा अवरे परे च। अग्निष्वात्ता ऋतुभि स्सँविदानाः। इन्द्रवन्तो हवि रिद ञ्जुषन्ताम्।।

卐 यदग्ने कव्यवाहन[7]❀ 卐 त्वमग्न ईडितो जातवेदः[8]❀। 卐 मातली कव्यैः[9]❀।

卐 ये तातृपु देवत्रा जेहमानाः। होत्रावृध स्स्तोमतष्टासो अर्कैः। आऽग्ने याहि सुविदत्रेभि रर्वाङ्। सत्यैꣳ कव्यैꣳ पितृभि र्घर्मसद्भिः।।

卐 हव्यवाह मजरं पुरुप्रियम्। अग्निङ्घृतेन हविषा सपर्यन्न्। उपासद ङ्कव्यवाहं पितृणाम्। स नꣳ प्रजाँ वीरवतीꣳ समृण्वतु।। 76।। (अनग्निष्वात्ता जेहमाना स्सप्त च। 16।)

❀ 卐 होता यक्ष दिडस्पदे। समिधानँ महद्यशः। सुषमिद्धँ वरेण्यम्। अग्नि मिन्द्रँ वयोधसम्। गायत्री ञ्छन्द इन्द्रियम्। त्र्यविङ्गाँ वयो दधत्। वेत्वाज्यस्य होत र्यज।।

卐 होता यक्ष च्छुचिव्रतम्। तनूनपात मुद्भिदम्। यङ्गर्भ मदिति र्दधे।। 77।। ❀ शुचि मिन्द्रँ वयोधसम्। उष्णिह ञ्छन्द इन्द्रियम्। दित्यवाहङ्गाँ वयो दधत्। वेत्वाज्यस्य होत र्यज।।

---

1

2

3

4

5

6

7

8

9

卐 होता यक्ष दीडेन्यम्। ईडितँ वृत्रहन्तमम्। इडाभि रीड्य९ सहः। सोम मिन्द्रँ वयोधसम्। अनुष्टुभ ञ्छन्द इन्द्रियम्। त्रिवथ्सङ्गाँ वयो दधत्।। 78।। ❀ वेत्वाज्यस्य होत र्यज।।

卐 होता यक्ष थ्सुबर्हिषदम्। पूषण्वन्त ममर्त्यम्। सीदन्तं बर्हिषि प्रिये। अमृतेन्द्रँ वयोधसम्। बृहती ञ्छन्द इन्द्रियम्। पञ्चाविङ्गाँ वयो दधत्। वेत्वाज्यस्य होत र्यज।।

卐 होता यक्षद्व्यचस्वतीः। सुप्रायणा ऋतावृधः।। 79।। ❀ द्वारो देवीर् हिरण्ययीः। ब्रह्माण इन्द्रँ वयोधसम्। पङ्क्ति ञ्छन्द इहेन्द्रियम्। तुर्यवाहङ्गाँ वयो दधत्। वेत्वाज्यस्य होत र्यज।।

卐 होता यक्ष थ्सुपेशसे। सुशिल्पे बृहती उभे। नक्तोषासा न दर्शते। विश्व मिन्द्रँ वयोधसम्। त्रिष्टुभ ञ्छन्द इन्द्रियम्।। 80।। ❀ पष्ठवाहङ्गाँ वयो दधत्। वेत्वाज्यस्य होत र्यज।।

卐 होता यक्षत्प्रचेतसा। देवाना मुत्तमँ यशः। होतारा दैव्या कवी। सयुजेन्द्रँ वयोधसम्। जगती ञ्छन्द इहेन्द्रियम्। अनड्वाहङ्गाँ वयो दधत्। वेत्वाज्यस्य होत र्यज।।

卐 होता यक्ष त्पेशस्वतीः।। 81।। ❀ तिस्रो देवीर् हिरण्ययीः। भारती र्बृहती र्महीः। पति मिन्द्रँ वयोधसम्। विराज ञ्छन्द इहेन्द्रियम्। धेनुङ्गान्न वयो दधत्। वेत्वाज्यस्य होत र्यज।।

卐 होता यक्ष थ्सुरेतसम्। त्वष्टारं पुष्टिवर्धनम्। रूपाणि बिभ्रतं पृथक्। पुष्टि मिन्द्रँ वयोधसम्।। 82।। ❀ द्विपद ञ्छन्द इहेन्द्रियम्। उक्षाणङ्गान्न वयो दधत्। वेत्वाज्यस्य होत र्यज।।

卐 होता यक्ष च्छतक्रतुम्। हिरण्यपर्ण मुक्थिनम्। रशनां बिभ्रतँ वशिम्। भग मिन्द्रँ वयोधसम्। ककुभञ्छन्द इहेन्द्रियम्। वशाँ वेहतङ्गान्न वयो दधत्। वेत्वाज्यस्य होत र्यज।।

卐 होता यक्ष थ्स्वाहाकृतीः। अग्नि ङ्गृहपतिं पृथक्। वरुणं भेषजङ्कविम्। क्षत्र मिन्द्रँ वयोधसम्। अतिच्छन्दस ञ्छन्द इन्द्रियम्। बृहदृषभङ्गाँ वयो दधत्। वेत्वाज्यस्य होत र्यज।। 83।। (दधे दध दृतावृध इन्द्रियं पेशस्वती र्वयोधसँ वेत्वाज्यस्य होतर्यज सप्त च। 17। इडस्पदेऽग्निङ्गायत्री न्त्र्यविम्। शुचिव्रत९ शुचि मुष्णिह न्दित्यवाहम्। ईडेन्य९ सोम मनुष्टुभ न्त्रिवथ्सम्। सुबर्हिषद ममृतेन्द्रं बृहतीं पञ्चाविम्। व्यचस्वती स्सुप्रायणा द्वारो ब्रह्माण४ पङ्क्ति मिह तुर्यवाहम्। सुपेशसे विश्व मिन्द्र न्त्रिष्टुभं पष्ठवाहम्। प्रचेतसा सयुजेन्द्र ञ्जगती मिहानड्वाहम्। पेशस्वती स्तिस्र४ पतिँ विराज मिह धेनुन्न। सुरेतस न्त्वष्टारं पुष्टि मिन्द्र न्द्विपद मिहोक्षाणन्न। शतक्रतुं भग मिन्द्र ङ्ककुभ

मिह वशान्न। स्वाहाकृतीः~ क्षत्र मतिच्छन्दसं बृह द्दृषभ ङ्गाँ वयो दध दिन्द्रिय मृषिं वसु नव दशेहेन्द्रिय मष्ट नवदश गान्न वयो दध दिडस्पदे सर्व वेतु। 17।)

☸❀ 卐 समिद्धो अग्नि स्समिधा। सुषमिद्धो वरेण्यः। गायत्री छन्द इन्द्रियम्। त्र्यवि गौं र्वयो दधुः।।

卐 तनूनपा च्छुचिव्रतः। तनूपाच्च सरस्वती। उष्णिक्छन्द इन्द्रियम्। दित्यवाड्गौ र्वयो दधुः।।

卐 इडाभि रग्नि रीड्यः। सोमो देवो अमर्त्यः।। 84।।❀ अनुष्टुप्छन्द इन्द्रियम्। त्रिवथ्सो गौ र्वयो दधुः।।

卐 सुबर्हि रग्निः॰ पूषण्वान्। स्तीर्णबर्हि रमर्त्यः। बृहती छन्द इन्द्रियम्। पञ्चावि गौं र्वयो दधुः।।

卐 दुरो देवी र्दिशो महीः। ब्रह्मा देवो बृहस्पतिः। पङ्क्तिश्छन्द इहेन्द्रियम्। तुर्यवाड्गौ र्वयो दधुः।। 85।।

❀ 卐 उषे यह्वी सुपेशसा। विश्वे देवा अमर्त्याः। त्रिष्टु प्छन्द इन्द्रियम्। पष्ठवा द्गौ र्वयो दधुः।।

卐 दैव्या होतारा भिषजा। इन्द्रेण सयुजा युजा। जगती छन्द इहेन्द्रियम्। अनड्वा न्गौ र्वयो दधुः।।

卐 तिस्र इडा सरस्वती। भारती मरुतो विशः।। 86।।❀ विराड्छन्द इहेन्द्रियम्। धेनु र्गौर्न वयो दधुः।।

卐 त्वष्टा तुरीपो अद्भुतः। इन्द्राग्नी पुष्टिवर्धना। द्विपाच्छन्द इहेन्द्रियम्। उक्षा गौर्न वयो दधुः।।

卐 शमिता नो वनस्पतिः। सविता प्रसुव न्भगम्। ककुच्छन्द इहेन्द्रियम्। वशा वेह द्गौर्न वयो दधुः।।

卐 स्वाहा यज्ञँ वरुणः। सुक्षत्रो भेषजङ्करत्। अतिच्छन्दा श्छन्द इन्द्रियम्। बृह दृषभो गौ र्वयो दधुः।। 87।। (अमर्त्य स्तुर्यवाड्गौ र्वयो दधु र्विशो वशा वेहद्गौर्न वयो दधु श्चत्वारि च। 18।)

☸❀ 卐 वसन्तेनर्तुना देवाः। वसव स्त्रिवृता स्तुतम्। रथन्तरेण तेजसा। हवि रिन्द्रे वयो दधुः।।

卐 ग्रीष्मेण देवा ऋतुना। रुद्राः॰ पञ्चदशे स्तुतम्। बृहता यशसा बलम्। हवि रिन्द्रे वयो दधुः।।

卐 वर्षाभिर् ऋतुनाऽदित्याः। स्तोमे सप्तदशे स्तुतम्।। 88।।❀ वैरूपेण विशौजसा। हवि रिन्द्रे वयो दधुः।।

卐 शारदेनर्तुना देवाः। एकवि॰शऋभव स्स्तुतम्। वैराजेन श्रिया श्रियम्। हवि रिन्द्रे वयो दधुः।।

卐 हेमन्तेनर्तुना देवाः। मरुत स्त्रिणवे स्तुतम्। बलेन शक्वरी स्सहः। हवि रिन्द्रे वयो दधुः।।

卐 शैशिरेणर्तुना देवाः। त्रयस्त्रि॰शेऽमृतꣳ स्तुतम्। सत्येन रेवतीः~ क्षत्रम्। हवि रिन्द्रे वयो दधुः।। 89।। (स्तोमे सप्तदशे स्तुत॰ सहो हवि रिन्द्रे वयो दधु श्चत्वारि च। वसन्तेन ग्रीष्मेण वर्षाभि श्शारदेन हेमन्तेन शैशिरेण षट्। 19।)

❀ 卐 देवं बर्हि रिन्द्रँ वयोधसम्। देव न्देव मवर्धयत्। गायत्रिया छन्दसेन्द्रियम्। तेज इन्द्रे वयो दधत्। वसुवने वसुधेयस्य वेतु यज।।

卐 देवी र्द्वारो देव मिन्द्रँ वयोधसम्। देवी र्देव मवर्धयन्न्। उष्णिहा छन्दसेन्द्रियम्। प्राण मिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वियन्तु यज।। 90।।

❀ 卐 देवी देवँ वयोधसम्। उषे इन्द्र मवर्धताम्। अनुष्टुभा छन्दसेन्द्रियम्। वाच मिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीताँ यज।।

卐 देवी जोष्ट्री देव मिन्द्रँ वयोधसम्। देवी देव मवर्धताम्। बृहत्या छन्दसेन्द्रियम्। श्रोत्र मिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीताँ यज।। 91।।

❀ 卐 देवी ऊर्जाहुती देव मिन्द्रँ वयोधसम्। देवी देव मवर्धताम्। पङ्क्त्या छन्दसेन्द्रियम्। शुक्रमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीताँ यज।।

卐 देवा दैव्या होतारा देव मिन्द्रँ वयोधसम्। देवा देव मवर्धताम्। त्रिष्टुभा छन्दसेन्द्रियम्। त्विषि मिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीताँ यज।। 92।।

❀ 卐 देवी स्तिस्र स्तिस्रो देवी र्वयोधसम्। पति मिन्द्र मवर्धयन्न्। जगत्या छन्दसेन्द्रियम्। बल मिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वियन्तु यज।।

卐 देवो नराश॰सो देव मिन्द्रँ वयोधसम्। देवो देव मवर्धयत्। विराजा छन्दसेन्द्रियम्। रेत इन्द्रे वयो दधत्। वसुवने वसुधेयस्य वेतु यज।। 93।।

❀ 卐देवो वनस्पति र्देवमिन्द्रँ वयोधसम्। देवो देव मवर्धयत्। द्विपदा छन्दसेन्द्रियम्। भग मिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वेतु यज।।

卐 देवं बर्हि र्वारितीना न्देव मिन्द्रँ वयोधसम्। देव न्देव मवर्धयत्। ककुभा छन्दसेन्द्रियम्। यश इन्द्रे वयो दधत्। वसुवने वसुधेयस्य वेतु यज।।

卐 देवो अग्नि स्स्विष्टकृ द्देवमिन्द्रँ वयोधसम्। देवो देव मवर्धयत्। अतिच्छन्दसा छन्दसेन्द्रियम्। क्षत्र मिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वेतु यज।। 94।। (वियन्तु यज वीताँ यज वीताँ यज वेतु यज वेतु यज पञ्च च। 20। देवं बर्हि र्गायत्रिया तेजः। देवी द्वार उष्णिहा प्राणम्। देवी देव मुषे अनुष्टुभा वाचम्। देवी जोष्ट्री बृहत्या श्रोत्रम्। देवी ऊर्जाहुती पङ्क्त्या शुक्रम्। देवा दैव्या होतारा त्रिष्टुभा त्विषिम्। देवी स्तिस्र स्तिस्रो देवीः पतिञ्जगत्या बलम्। देवो नराꣳशसो विराजा रेतः। देवो वनस्पति र्द्विपदा भगम्। देवं बर्हि र्वारितीना ङ्ककुभा यशः। देवो अग्नि स्स्विष्टकृ दतिच्छन्दसा क्षत्रम्। वेतु वियन्तु च्चतु र्वीतामेको वियन्तु च्चतु र्वैत्ववर्धय दवर्धयꣳ श्चतु रवर्धता मेको वर्धयꣳ श्चतुरवर्धयत्।)

(स्वाद्वी न्त्वा सोम स्सुरावन्तꣳ सीसेन मित्रोऽसि यद्देवा होता यक्षथ्समिधेन्द्रꣳ समिद्ध इन्द्र आ चर्षणिप्रा देवं बर्हिर् होता यक्ष थ्समिधाऽग्निꣳ समिद्धो अग्नि रश्विनाऽश्विना हवि रिन्द्रिय न्देवं बर्हि स्सरस्व त्यग्नि मद्योशन्तो होता यक्ष दिडस्पदे समिद्धो अग्नि स्समिधा वसन्तेनर्तुना देवं बर्हि रिन्द्रँ वयोधसँ विꣳशतिः। 20। स्वाद्वीन्त्वाऽमीमदन्त पितर स्साम्राज्याय पूतं पवित्रेणोषासानक्ता बदरै रधाता न्देव इन्द्रो वनस्पतिः पष्ठवाहङ्गा न्देवी देवँ वयोधस श्चतुर्नवतिः। 94। स्वाद्वी न्त्वा वेतु यज।)

## द्वितीयाष्टके सप्तमः प्रपाठकः

### सौ।का। 1सव ब्राह्मणम् 8(षडनुवाका: 6)

❀ त्रिवृथ्स्तोमो भवति। ब्रह्मवर्चसँ वै त्रिवृत्। ब्रह्मवर्चस मेवाव रुन्धे। अग्निष्टोम स्सोमो भवति। ब्रह्मवर्चसँ वा अग्निष्टोमः। ब्रह्मवर्चस मेवाव रुन्धे। रथन्तरꣳ साम भवति। ब्रह्मवर्चसँ वै रथन्तरम्। ब्रह्मवर्चस मेवाव रुन्धे। परिस्रजी होता भवति।। 1।। ❀ अरुणो मिर्मिर स्त्रिशुक्रः।

एतद्वै ब्रह्मवर्चसस्य रूपम्। रूपेणैव ब्रह्मवर्चस मव रुन्धे। बृहस्पति रकामयत देवानां पुरोधाङ्गच्छेय मिति। स एतं बृहस्पतिसव मपश्यत्। तमाऽहरत्। तेनायजत। ततो वै स देवानां पुरोधा मगच्छत्। यः पुरोधाकाम स्स्यात्। स बृहस्पतिसवेन यजेत।। 2।। ❀ पुरोधा मेव गच्छति। तस्य प्रातस्सवने सन्नेषु नाराश॰सेषु। एकादश दक्षिणा नीयन्ते। एकादश माध्यन्दिने सवने सन्नेषु नाराश॰सेषु। एकादश तृतीयसवने सन्नेषु नाराश॰सेषु। त्रयस्त्रि॰शथ्सं पद्यन्ते। त्रयस्त्रि॰शद्वै देवताः। देवता एवाव रुन्धे। अश्व श्चतुस्त्रि॰शः। प्राजापत्यो वा अश्वः।। 3।। ❀ प्रजापति श्चतुस्त्रि॰शो देवतानाम्। यावती रेव देवताः। ता एवाव रुन्धे। कृष्णाजिनेऽभिषिञ्चति। ब्रह्मणो वा एत द्रूपम्। यत्कृष्णाजिनम्। ब्रह्मवर्चसेनैवैन॰ समर्धयति। आज्येनाभिषिञ्चति। तेजो वा आज्यम्। तेज एवास्मि न्दधाति।। 4।। (होता भवति यजेत वा अश्वो दधाति। 1।)

❀ यदाग्नेयो भवति। अग्निमुखा ह्यृद्धिः। अथ यत्पौष्णः। पुष्टिर्वै पूषा। पुष्टि वैँश्यस्य। पुष्टि मेवाव रुन्धे। प्रसवाय सावित्रः। अथ यत्त्वाष्ट्रः। त्वष्टा हि रूपाणि विकरोति। निर्वरुणत्वाय वारुणः।। 5।। ❀ अथो य एव कश्च स'2'न्थ्सूयते। स हि वारुणः। अथ यद्वैश्वदेवः। वैश्वदेवो हि वैश्यः। अथ यन्मारुतः। मारुतो हि वैश्यः। सप्तैतानि हवी॰षि भवन्ति। सप्तगणा वै मरुतः। पृश्निः पष्ठौही मारुत्या लभ्यते। विड्वै मरुतः। विश एवैत न्मध्यतोऽभिषिच्यते। तस्माद्वा एष विशः प्रियः। विशो हि मध्यतोऽभिषिच्यते। ऋषभचर्मेऽध्यभिषिञ्चति। स हि प्रजनयिता। दध्नाऽभिषिञ्चति। ऊर्ग्वा अन्नाद्य न्दधि। ऊर्जैवैन मन्नाद्येन समर्धयति।। 6।। (वारुणो विड्वै मरुतोऽष्टौ च। 2।)

❀ यदाग्नेयो भवति। आग्नेयो वै ब्राह्मणः। अथ यथ्सौम्यः। सौम्यो हि ब्राह्मणः। प्रसवायैव सावित्रः। अथ यद्बार्हस्पत्यः। एतद्वै ब्राह्मणस्य वाक्पतीयम्। अथ यदग्नीषोमीयः। आग्नेयो वै ब्राह्मणः। तौ यदा सङ्गच्छेते।। 7।। ❀ अथ वीर्यावत्तरो भवति। अथ यथ्सारस्वतः। एतद्धि प्रत्यक्षं ब्राह्मणस्य वाक्पतीयम्। निर्वरुणत्वायैव वारुणः। अथो य एव कश्च स'2'न्थ्सूयते। स हि वारुणः। अथ यद्द्यावापृथिव्यः। इन्द्रो वृत्राय वज्र मुदयच्छत्। तन्द्यावापृथिवी नान्वमन्येताम्। तमेतेनैव भागधेये नान्वमन्येताम्।। 8।। ❀ वज्रस्य वा एषोऽनुमानाय। अनुमत वज्र स्सूयाता इति। अष्टा वेतानि हवी॰षि भवन्ति। अष्टाऽक्षरा गायत्री। गायत्री ब्रह्मवर्चसम्। गायत्रियैव

ब्रह्मवर्चस मव रुन्धे। हिरण्येन घृत मुत्पुनाति। तेजस एव रुचे। कृष्णाजिनेऽभिषिञ्चति। ब्रह्मणो वा एतद्दृख्सामयो रूपम्। यत्कृष्णाजिनम्। ब्रह्म न्नेवैन मृक्सामयो रध्यभिषिञ्चति। घृतेनाभिषिञ्चति। तथा वीर्यावत्तरो भवति।। 9।। (सङ्गच्छेते भागधेये नान्वमन्येता॰ रूपञ्चत्वारि च। 3।)

☸❀ न वै सोमेन सोमस्य सवोऽस्ति। हतो ह्येषः। अभिषुतो ह्येषः। न हि हत स्सूयते। सौमी॰ सूतवशा मालभते। सोमो वै रेतोधाः। रेत एव तद्दधाति। सौम्यर्चाऽभिषिञ्चति। रेतोधा ह्येषा। रेत स्सोमः। रेत एवास्मि न्दधाति। यत्किञ्च राजसूय मृते सोमम्। तथ्सर्वं भवति।

**सौ।का। 1सव मन्त्रः 8(एको मन्त्रः 1)**

卐 अषाढँ युथ्सु पृतनासु पप्रिम्। सुवर्षा मफ्स्वाँ वृजनस्य गोपाम्। भरेषुजा॰ सुक्षिति॰ सुश्रवसम्। जयन्तन्त्वा मनु मदेम सोम।। 10।। (रेत स्सोम स्सप्त च। 4।)

☸❀ यो वै सोमेन सूयते। स देवसवः। यः॰ पशुना सूयते। स देवसवः। य इष्ट्या सूयते। स मनुष्यसवः। एतँ वै पृथये देवाः॰ प्रायच्छन्न्। ततो वै सोऽप्यारण्यानां पशूना मसूयत। यावतीः॰ कियतीश्च प्रजा वाचँ वदन्ति। तासा॰ सर्वासा॰ सूयते।। 11।।❀ य एतेन यजते। य उ चैनमेवँ वेद। नाराश॰स्यर्चाऽभिषिञ्चति। मनुष्या वै नराश॰सः। निह्नुत्य वावैतत्। अथाभिषिञ्चति। यत्किञ्च राजसूय मनुत्तरवेदीकम्। तथ्सर्वं भवति।

**सौ।का। 2सव मन्त्रः 8(एको मन्त्रः 1)**

卐 ये मे पञ्चाशत न्ददुः। अश्वाना॰ सधस्तुतिः। द्युमदग्ने महि श्रवः। बृहत्कृधि मघोनाम्। नृव दमृत नृणाम्।। 12।। (सूयते सधस्तुति स्त्रीणि च। 5।)

☸❀ एष गोसवः। षड्वि॰श उक्थ्यो बृहथ्सामा। पवमाने कण्वरथन्तरं भवति। यो वै वाजपेयः। स सम्राट्थ्सवः। यो राजसूयः। स वरुणसवः। प्रजापति स्स्वाराज्यं परमेष्ठी। स्वाराज्यङ्गौरेव। गौरिव भवति।। 13।।❀ य एतेन यजते। य उ चैनमेवँ वेद। उभे बृहद्रथन्तरे भवतः। तद्धि स्वाराज्यम्। अयुत न्दक्षिणाः। तद्धि स्वाराज्यम्। प्रतिधुषाऽभिषिञ्चति। तद्धि स्वाराज्यम्। अनुद्धते वेद्यै दक्षिणत आहवनीयस्य बृहत स्स्तोत्रं प्रत्यभिषिञ्चति। इयँ वाव रथन्तरम्।।

14।। ❀ असौ बृहत्। अनयो रेवैन मनन्तर्हित मभिषिञ्चति। पशुस्तोमो वा एषः। तेन गोसवः। षट्त्रिꣳश स्सर्वः।

**सौ।का। 3सव मन्त्रः 8(एको मन्त्रः 1)**

卐 रेवज्जात स्सहसा वृद्धः। क्षत्राणा ङ्क्षत्रभृत्तमो वयोधाः। महा न्महित्वे तस्तभानः। क्षत्रे राष्ट्रे च जागृहि। प्रजापतेस्त्वा परमेष्ठिन स्स्वाराज्येनाभिषिञ्चामी- त्याह। स्वाराज्य मेवैन ङ्गमयति।। 15।। (इव भवति रथन्तरमाहैकञ्च। 6।)

**सौ।का। 4सव मन्त्राः 8(द्वावनुकौ 2)**

❀ 卐 सिꣳहे व्याघ्र उत या पृदाकौ। त्विषि रग्नौ ब्राह्मणे सूर्ये या। इन्द्रँ या देवी सुभगा जजान। सा न आगन्वर्चसा सँविदाना।।

卐 या राजन्ये दुन्दुभा वायतायाम्। अश्वस्य क्रन्द्ये पुरुषस्य मायौ। इन्द्रँ या देवी सुभगा जजान। सा न आगन्वर्चसा सँविदाना।।

卐 या हस्तिनि द्वीपिनि या हिरण्ये। त्विषि रश्वेषु पुरुषेषु गोषु।। 16।। ❀ इन्द्रँ या देवी सुभगा जजान। सा न आगन्वर्चसा सँविदाना।।

卐 रथे अक्षेषु वृषभस्य वाजे। वाते पर्जन्ये वरुणस्य शुष्मे। इन्द्रँ या देवी सुभगा जजान। सा न आगन्वर्चसा सँविदाना।।

卐 राडसि 卐 विराडसि। 卐 सम्राडसि 卐 स्वराडसि।

卐 इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामि।

卐 इन्द्राय त्वौजस्वत ओजस्वन्तꣳ श्रीणामि।। 17।।

❀ 卐 इन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामि।

卐 इन्द्राय त्वाऽऽयुष्मत आयुष्मन्तꣳ श्रीणामि।

卐 तेजोऽसि। 卐 तत्ते प्रयच्छामि। 卐 तेजस्व दस्तु मे मुखम्। तेजस्व च्छिरो अस्तु मे। तेजस्वान् विश्वतः प्रत्यङ्। तेजसा सं पिपृग्धि मा।

卐 ओजोऽसि। 卐 तत्ते प्रयच्छामि।। 18।। ❀ 卐 ओजस्व दस्तु मे मुखम्। ओजस्व च्छिरो अस्तु मे। ओजस्वान् विश्वतः प्रत्यङ्। ओजसा सं पिपृग्धि मा।

卐 पयोऽसि। 卐 तत्ते प्रयच्छामि। 卐 पयस्व दस्तु मे मुखम्। पयस्व च्छिरो अस्तु मे। पयस्वान् विश्वतः प्रत्यङ्ङ्। पयसा सं पिपृग्धि मा।। 19।।

❀ 卐 आयुरसि। 卐 तत्ते प्रयच्छामि। 卐 आयुष्म दस्तु मे मुखम्। आयुष्म च्छिरो अस्तु मे। आयुष्मान् विश्वतः प्रत्यङ्ङ्। आयुषा सं पिपृग्धि मा।

卐 इम मग्न आयुषे वर्चसे कृधि। प्रियꣳ रेतो वरुण सोम राजन्न्। मातेवास्मा अदिते शर्म यच्छ। विश्वे देवा जरदष्टि र्यथाऽसत्।। 20।।

❀ 卐 आयु रसि विश्वाऽऽयु रसि। सर्वाऽऽयुरसि सर्व मायु रसि।

卐 यतो वातो मनोजवाः। यतः~ क्षरन्ति सिन्धवः। तासान्त्वा सर्वासाꣳ रुचा। अभिषिञ्चामि वर्चसा।।

卐 समुद्र इवासि गह्मना। सोम इवास्यदाभ्यः। अग्नि रिव विश्वतः प्रत्यङ्ङ्। सूर्य इव ज्योतिषा विभूः।। 21।।

❀ 卐 अपाँ यो द्रवणे रसः। तमह मस्मा आमुष्यायणाय। तेजसे ब्रह्मवर्चसाय गृह्णामि।

卐 अपाँ य ऊर्मौ रसः। तमह मस्मा आमुष्यायणाय। ओजसे वीर्याय गृह्णामि।

卐 अपाँ यो मध्यतो रसः। तमह मस्मा आमुष्यायणाय। पुष्ट्यै प्रजननाय गृह्णामि।

卐 अपाँ यो यज्ञियो रसः। तमह मस्मा आमुष्यायणाय। आयुषे दीर्घायुत्वाय गृह्णामि।। 22।।

(गोष्वोजस्वन्तꣳ श्रीणा म्योजोऽसि तत्ते प्रयच्छामि पयसा सं पिपृग्धि माऽस द्विभू र्यज्ञियो रसो द्वे च। 7।)

❀ 卐 अभि प्रेहि वीरयस्व। उग्र श्चेत्ता सपत्नहा।

卐 आ तिष्ठ मित्रवर्धनः। तुभ्य न्देवा अधि ब्रवन्न्।

卐 अङ्कौ न्यङ्का वभित[1]❀ 卐 आतिष्ठ वृत्रहन्त्रथम्[2]❀।

卐 आ तिष्ठन्तँ परि विश्वे अभूषन्न्। श्रियँ वसान श्चरति स्वरोचाः। मह त्तदस्यासुरस्य नाम। आ विश्वरूपो अमृतानि तस्थौ।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

1

2

卐 अनु त्वेन्द्रो मदत्वनु बृहस्पतिः।। 23।। ❀ अनु सोमो अन्वग्नि रावीत्। अनु त्वा विश्वे देवा अवन्तु। अनु सप्त राजानो य उताभिषिक्ताः।।

卐 अनु त्वा मित्रावरुणा विहावतम्। अनु द्यावापृथिवी विश्वशम्भू। सूर्यो अहोभि रनु त्वाऽवतु। चन्द्रमा नक्षत्रै रनु त्वाऽवतु।।

卐 द्यौश्च त्वा पृथिवी च प्रचेतसा। शुक्रो बृह द्दक्षिणा त्वा पिपर्तु। अनु स्वधा चिकिता॰ सोमो अग्निः। आऽयं पृणक्तु रजसी उपस्थम्।। 24।। (बृहस्पति स्सोमो अग्नि रेकञ्च। 8।)

**सौ।का। 2सव ब्राह्मणम् 8(त्रयोऽनुवाकाः 3)**

❀ प्रजापतिः॰ प्रजा असृजत। ता अस्माथ्सृष्टा॰ पराची रायन्न्। स एतं प्रजापति रोदन मपश्यत्। सोऽन्नं भूतोऽतिष्ठत्। ता अन्यत्रान्नाद्य मवित्वा। प्रजापतिं प्रजा उपावर्तन्त। अन्न मेवैनं भूतं पश्यन्ती॰ प्रजा उपाऽऽवर्तन्ते। य एतेन यजते। य उ चैन मेवँ वेद। सर्वाण्यन्नानि भवन्ति।। 25।। ❀ सर्वे पुरुषाः। सर्वाण्येवान्ना न्यव रुन्धे। सर्वा न्पुरुषान्। राडसि विराडसीत्याह। स्वाराज्य मेवैनङ्गमयति। यद्धिरण्य न्ददाति। तेज स्तेनाव रुन्धे। यत्तिसृधन्वम्। वीर्य न्तेन। यदष्ट्राम्।। 26।। ❀ पुष्टि न्तेन। यत्कमण्डलुम्। आयु ष्टेन। यद्धिरण्य माबध्नाति। ज्योतिर्वै हिरण्यम्। ज्योति रेवास्मि न्दधाति। अथो तेजो वै हिरण्यम्। तेज एवाऽऽत्म न्धत्ते। यदोदनं प्राश्नाति। एत देव सर्व मवरुध्य।। 27।। ❀ तदस्मि न्नेकधाऽधात्। रोहिण्या ङ्कार्यः। यद्ब्राह्मण एव रोहिणी। तस्मा देव। अथो वर्ष्मैवैन॰ समानाना ङ्करोति। उद्यता सूर्येण कार्यः। उद्यन्तँ वा एत॰ सर्वा॰ प्रजा॰ प्रति नन्दन्ति। दिदृक्षेण्यो दर्शनीयो भवति। य एवँ वेद। ब्रह्मवादिनो वदन्ति।। 28।। ❀ अवेत्योऽवभृथा '3' ना '3' इति। यद्दर्भपुञ्जीलै॰ पवयति। तथ्स्विदेवावैति। तन्नावैति। त्रिभि॰ पवयति। त्रय इमे लोकाः। एभिरेवैनँ लोकै॰ पवयति। अथो अपाँ वा एत त्तेजो वर्चः। यद्दर्भाः। यद्दर्भपुञ्जीलै॰ पवयति। अपा मेवैन न्तेजसा वर्चसाऽभिषिञ्चति।। 29।। (भवन्त्यष्ट्रा मवरुध्य वदन्ति दर्भा यद्दर्भपुञ्जीलै॰ पवयत्येकञ्च। 9।)

❀ प्रजापति रकामयत बहो र्भूयान्थ्स्यामिति। स एतं पञ्चशारदीय मपश्यत्। तमाऽहरत्। तेनायजत। ततो वै स बहो र्भूया नभवत्। य॰ कामयेत बहो र्भूयान्थ्स्या मिति। स पञ्चशारदीयेन यजेत। बहो रेव भूया न्भवति। मरुथ्स्तोमो वा एषः। मरुतो हि देवानां भूयिष्ठाः।। 30।। ❀ बहु

भवति। य एतेन यजते। य उ चैन मेवँ वेद। पञ्चशारदीयो भवति। पञ्च वा ऋतव स्सँवथ्सरः। ऋतुष्वेव सँवथ्सरे प्रति तिष्ठति। अथो पञ्चाक्षरा पङ्क्तिः। पाङ्क्तो यज्ञः। यज्ञ मेवाव रुन्धे। सप्तदशꣳ स्तोमा नाति यन्ति। सप्तदशः प्रजापतिः। प्रजापते राप्त्यै।। 31।। (भूयिष्ठा यन्ति द्वे च। 10।)

❀ अगस्त्यो मरुद्भ्य उक्षणः प्रौक्षत्। तानिन्द्र आऽदत्त। त एनँ वज्र मुद्यत्याभ्यायन्त। तानगस्त्य श्चैवेन्द्रश्च कयाशुभीयेनाशमयताम्। तान्छान्ता नुपाह्वयत। यत्कयाशुभीयं भवति शान्त्यै। तस्मा देत ऐन्द्रामारुता उक्षाण स्सवनीया भवन्ति। त्रयः प्रथमेऽह न्ना लभ्यन्ते। एव न्द्वितीये। एव न्तृतीये।। 32।। ❀ एवञ्चतुर्थे। पञ्चोत्तमेऽह न्ना लभ्यन्ते। वर्षिष्ठ मिव ह्येत दहः। वर्षिष्ठ स्समानानां भवति। य एतेन यजते। य उ चैन मेवँ वेद। स्वाराज्यँ वा एष यज्ञः। एतेन वा एकया वा कान्दम स्स्वाराज्य मगच्छत्। स्वाराज्यङ्गच्छति। य एतेन यजते।। 33।। ❀ य उ चैन मेवँ वेद। मारुतो वा एष स्तोमः। एतेन वै मरुतो देवानां भूयिष्ठा अभवन्न्। भूयिष्ठ स्समानानां भवति। य एतेन यजते। य उ चैन मेवँ वेद। पञ्चशारदीयो वा एष यज्ञः। आ पञ्चमा त्पुरुषा दन्न मत्ति। य एतेन यजते। य उ चैन मेवँ वेद। सप्तदशꣳ स्तोमा नाति यन्ति। सप्तदशः प्रजापतिः। प्रजापते रेव नैति।। 34।। (तृतीये गच्छति य एतेन यजतेऽत्ति य एतेन यजते य उ चैन मेवँ वेद त्रीणि च।। 11। अगस्त्य स्स्वाराज्यं मारुतः पञ्चशारदीयो वा एष यज्ञ स्सप्तदशं प्रजापते रेव नैति।)

**सौ।का। 5सव मन्त्राः 8(द्वावनुकौ 2)**

❀ 卐 अस्याजरासो दमा मरित्राः। अर्चद्धूमासो अग्नयः पावकाः। श्वितीचयः श्वात्रासो भुरण्यवः। वनर्षदो वायवो न सोमाः।।

卐 यजा नो मित्रावरुणा। यजा देवाꣳ ऋतं बृहत्। अग्ने यक्षि स्वन्दमम्।।

卐 अश्विना पिबतꣳ सुतम्। दीद्यग्नी शुचिव्रता। ऋतुना यज्ञवाहसा।। 35।।

❀ 卐 द्वे विरूपे चरत स्स्वर्थे। अन्याऽन्या वथ्स मुप धापयेते। हरि रन्यस्यां भवति स्वधावान्। शुक्रो अन्यस्या न्ददृशे सुवर्चाः।।

卐 पूर्वापर ञ्चरतो माययैतौ। शिशू क्रीडन्तौ परि यातो अध्वरम्। विश्वा न्यन्यो भुवनाऽभिचष्टे। ऋतू नन्यो विदध ज्जायते पुनः।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 त्रीणि शता त्री षहस्राण्यग्निम्। त्रि॑शच्च देवा नवचा सपर्यन्न्।। 36।।❀ औक्ष न्घृतै राऽस्तृण न्बर्हि रस्मै। आदिद्धोतार न्यषादयन्त।।

卐 अग्निनाऽग्नि स्समिध्यते। कवि र्गृहपति र्युवा। हव्यवाड्जुह्वास्यः।।

卐 अग्नि र्देवानाञ्जठरम्। पूतदक्षः कविक्रतुः। देवो देवेभि राऽगमत्।।

卐 अग्निश्रियो मरुतो विश्वकृष्टयः। आ त्वेष मुग्र मव ईमहे वयम् ।। 37।।❀ ते स्वानिनो रुद्रिया वर्षनिर्णिजः। सि॑हा न हेषक्रतव स्सुदानवः।।

卐 यदुत्तमे मरुतो मध्यमे वा। यद्वाऽवमे सुभगासो दिविष्ठ। ततो नो रुद्रा उत वाऽन्वस्य। अग्ने वित्ता द्धविषो यद्यजामः।।

卐 ईडे अग्नि॑ स्ववस न्नमोभिः। इह प्रसत्तो विचय त्कृतन्नः। रथै रिव प्रभरे वाजयद्भिः। प्रदक्षिणि न्मरुता॑ स्तोम मृध्याम्।। 38।।

❀ 卐 श्रुधि श्रुत्कर्ण वह्निभिः। देवै रग्ने सयावभिः। आसीदन्तु बर्हिषि। मित्रो वरुणो अर्यमा। प्रातर्यावाणो अध्वरम्।।

卐 विश्वेषा मदिति र्यज्ञियानाम्। विश्वेषा मतिथि र्मानुषाणाम्। अग्नि र्देवाना मव आवृणानः। सुमृडीको भवतु विश्ववेदाः।।

卐 त्वे अग्ने सुमतिं भिक्षमाणाः।। 39।।❀ दिवि श्रवो दधिरे यज्ञियासः। नक्ता च चक्रु रुषसा विरूपे। कृष्णञ्च वर्ण मरुणञ्च सन्धुः।।

卐 त्वामग्न आदित्यास आस्यम्। त्वाञ्जिह्वा॑ शुचय श्चक्रिरे कवे। त्वा॑ रातिषाचो अध्वरेषु सश्चिरे। त्वे देवा हवि रदन्त्याहुतम्।।

卐 नि त्वा यज्ञस्य साधनम्। अग्ने होतार मृत्विजम्। वनुष्व देव धीमहि प्रचेतसम्। जीर न्दूत ममर्त्यम्।। 40।। (यज्ञवाहसा सपर्यन्वय मृध्यां भिक्षमाणाः प्रचेतस मेकञ्च। 12।)

❀ 卐 तिष्ठा हरी रथ आ युज्यमाना याहि। वायु र्न नियुतो नो अच्छ। पिबास्यन्धो अभिसृष्टो अस्मे। इन्द्र स्स्वाहा ररिमा ते मदाय।।

卐 कस्य वृषा सुते सचा। नियुत्वा न्वृषभो रणत्। वृत्रहा सोमपीतये।।

卐 इन्द्रँ वयं महाधने। इन्द्र मर्भे हवामहे। युजँ वृत्रेषु वज्रिणम्।। 41।।

❀ 卐 द्विता यो वृत्रहन्तमः। विद इन्द्र श्शतक्रतुः। उप नो हरिभि स्सुतम्।।

卐 स सूर आजनय न्ज्योति रिन्द्रम्। अया धिया तरणि रद्रि बर्हाः। ऋतेन शुष्मी नवमानो अर्कैः। व्युस्रिधो अस्रो अद्रि र्बिभेद्।।

卐 उत त्यदाश्वश्वियम्। यदिन्द्र नाहुषीष्वा। अग्रे विक्षु प्रतीदयत्।। 42।।

❀ 卐 भरेष्विन्द्र९ सुहव९ हवामहे। अ९होमुच९ सुकृत न्दैव्यञ्जनम्। अग्निं मित्रँ वरुण९ सातये भगम्। द्यावापृथिवी मरुत स्स्वस्तये।।

卐 महि क्षेत्रं पुरुश्चन्द्रँ वि विद्वान्। आदित्सखिभ्य श्चरथ९ समैरत्। इन्द्रो नृभि रजन द्दीद्यान स्साकम्। सूर्य मुषस ङ्गातु मग्निम्।।

卐 उरुन्नो लोक मनु नेषि विद्वान्। सुवर्व ज्ज्योति रभय९ स्वस्ति।। 43।। ❀ ऋष्वात इन्द्र स्थविरस्य बाहू। उपस्थेयाम शरणा बृहन्ता।।

卐 आ नो विश्वाभि रूतिभि स्सजोषाः। ब्रह्म जुषाणो हर्यश्व याहि। वरीवृज थ्स्थविरेभि स्सुशिप्र। अस्मे दध द्वृषण९ शुष्म मिन्द्र।।

卐 इन्द्राय गाव आशिरम्। दुदुह्रे वज्रिणे मधु। यथ्सीमुपह्वरेऽविदत्।।

卐 तास्ते वज्रि न्धेनवो जोजयु र्नः।। 44।। ❀ गभस्तयो नियुतो विश्ववाराः। अहरह र्भूय इज्जोगुवानाः। पूर्णा इन्द्र क्षुमतो भोजनस्य।।

卐 इमा न्ते धियं प्रभरे महो महीम्। अस्य स्तोत्रे धिषणा यत्त आनजे। तमुत्सवे च प्रसवे च सासहिम्। इन्द्र न्देवास श्शवसा मदन्ननु।। 45।। (वज्रिण मयथ्स्वस्ति जोजयुर्न स्सप्त च। 13।)

### सौ।का। 3सव ब्राह्मणम् 8( एकोऽनुवाकः 1)

❀ प्रजापतिः पशू नसृजत। तेऽस्माथ्सृष्टाः पराञ्च आयन्न्। तानग्निष्टोमेन नाऽऽप्नोत्। तानुक्थ्येन नाऽऽप्नोत्। तान्थ्षोडशिना नाऽऽप्नोत्। तान्रात्रिया नाऽऽप्नोत्। तान्थ्सन्धिना नाऽऽप्नोत्। सोऽग्नि मब्रवीत्। इमान्म ईफ्सेति। तानग्नि स्त्रिवृता स्तोमेन नाऽऽप्नोत्।। 46।। ❀ स इन्द्र मब्रवीत्। इमान्म ईफ्सेति। तानिन्द्रः पञ्चदशेन स्तोमेन नाऽऽप्नोत्। स विश्वा न्देवा नब्रवीत्। इमान्म ईफ्सतेति। तान् विश्वे देवा स्सप्तदशेन स्तोमेन नाऽऽप्नुवन्न्। स विष्णु मब्रवीत्।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham Mysore

इमा न्म ईफ्सेति। तान् विष्णु रेकवि॰शेन स्तोमेनाऽप्नोत्। वारवन्तीयेनावारयत।। 47।। ❀ 卐 इदँ विष्णु र्वि चक्रम- इति व्यक्रमत। यस्मा त्पशवः प्रप्रेव भ्र॰शेरन्न्। स एतेन यजेत। यदाप्नोत्। तदप्तोर्याम.स्याप्तोर्यामत्वम्। एतेन वै देवा जैत्वानि जित्वा। यङ्काम मकामयन्त तमाप्नुवन्न्। यङ्काम ङ्कामयते। तमेतेनाप्नोति।। 48।। (स्तोमेन नाऽप्नो दवारयत नव च। 14।)

**सौ।का। 6 सव मन्त्राः 8(त्रयोऽनुवाकाः 3)**

❀ 卐 व्याघ्रोऽय मग्नौ चरति प्रविष्टः। ऋषीणां पुत्रो अभिशस्तिपा अयम्। नमस्कारेण नमसा ते जुहोमि। मा देवानां मिथुया कर्मभागम्।।

卐 सावीर् हि देव प्रसवाय पित्रे। वर्ष्माण मस्मै वरिमाण मस्मै। अथास्मभ्य॰ सवित स्सर्वताता। दिवेदिव आ सुवा भूरि पश्वः।।

卐 भूतो भूतेषु चरति प्रविष्टः। स भूताना मधिपति र्बभूव।। 49।। ❀ तस्य मृत्यौ चरति राजसूयम्। स राजा राज्य मनु मन्यता मिदम्।।

卐 येभि श्शिल्पैः पप्रथाना मदृ॰हत्। येभिर्द्या मभ्यपि॰श त्प्रजापतिः। येभि र्वाचँ विश्वरूपा॰ समव्ययत्। तेनेम मग्न इह वर्चसा समङ्ग्धि।।

卐 येभि रादित्य स्तपति प्रकेतुभिः। येभि सूर्यो ददृशे चित्रभानुः। येभि र्वाचं पुष्कलेभि रव्ययत्। तेनेम मग्न इह वर्चसा समङ्ग्धि।। 50।।

❀ 卐 आऽयं भातु शवसा पञ्च कृष्टीः। इन्द्र इव ज्येष्ठो भवतु प्रजावान्। अस्मा अस्तु पुष्कल ञ्चित्रभानु। आऽयं पृणक्तु रजसी उपस्थम्।।

卐 यत्ते शिल्प ङ्कश्यप रोचनावत्। इन्द्रियाव त्पुष्कल ञ्चित्रभानु। यस्मि'2'न्थ्सूर्या अर्पिता स्सप्त साकम्। तस्मि न्राजान मधि विश्रयेमम्।।

卐 द्यौरसि पृथिव्यसि।

卐 व्याघ्रो वैयाघ्रेऽधि।। 51।। ❀ विश्रयस्व दिशो महीः। विशस्त्वा सर्वा वाञ्छन्तु। मा त्व द्राष्ट्र मधि भ्रशत्।।

卐 या दिव्या आपः पयसा सम्बभूवुः। या अन्तरिक्ष उत पार्थिवी र्याः। तासा न्त्वा सर्वासा॰ रुचा। अभिषिञ्चामि वर्चसा।।

卐 अभि त्वा वर्चसाऽसिच न्दिव्येन। पयसा सह। यथाऽसा राष्ट्रवर्धनः।। 52।।❀ तथा त्वा सविता करत्।।

卐 इन्द्रँ विश्वा अवीवृधन्न्। समुद्रव्यचस ङ्गिरः। रथीतमꣳ रथीनाम्। वाजानाꣳ सत्पतिं पतिम्।।

卐 वसवस्त्वा पुरस्ता दभि षिञ्चन्तु गायत्रेण छन्दसा।

卐 रुद्रा स्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा।

卐 आदित्या स्त्वा पश्चा दभिषिञ्चन्तु जागतेन छन्दसा।

卐 विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वाऽऽनुष्टुभेन छन्दसा।

卐 बृहस्पति स्त्वोपरिष्टा दभि षिञ्चतु पाङ्क्तेन छन्दसा।। 53।।

❀ 卐 अरुणन्त्वा वृक मुग्रङ्खजङ्करम्। रोचमानं मरुता मग्रे अर्चिषः। सूर्यवन्तं मघवानँ विषासहिम्। इन्द्र मुक्थेषु नामहूतमꣳ हुवेम।।

卐 प्र बाहवा सिसृत ञ्जीवसे नः। आ नो गव्यूति मुक्षतङ्घृतेन। आ नो जने श्रवयतँ युवाना। श्रुतं मे मित्रावरुणा हवेमा।।

卐 इन्द्रस्य ते वीर्यकृतः। बाहू उपावहरामि।। 54।। (बभूवाव्यय त्तेनेम मग्न इह वर्चसा समङ्ग्धि वैयाघ्रेऽधि राष्ट्रवर्धनꣳ पाङ्क्तेन छन्दसोपाव हरामि। 15।)

❀ 卐 अभि प्रेहि वीरयस्व। उग्र श्चेत्ता सपत्नहा।

卐 आ तिष्ठ वृत्रहन्तमः। तुभ्य न्देवा अधि ब्रवन्न्।

卐 अङ्क्तौ न्यङ्क्ता वभितो रथँ यौ। ध्वान्तँ वाताग्र मनु सञ्चरन्तौ। दूरेहेति रिन्द्रियावा न्पतत्री। ते नोऽग्नयꣳ पप्रयꣳ पारयन्तु।।

卐 नमस्त ऋषे गद। अव्यथायै त्वा स्वधायै त्वा।। 55।।❀ मा न इन्द्राभित स्त्वदृष्वारिष्टासः। एवा ब्रह्म न्तवेदस्तु।।

卐 तिष्ठा रथे अधि यद्वज्रहस्तः।

卐 आ रश्मी न्देव युवसे स्वश्वः।

卐 आ तिष्ठ वृत्रह[1]❀ 卐 न्नातिष्ठन्तं परि[1]❀।

---

1

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

卐 अनु त्वेन्द्रो मद[2]❃ 卐 त्वनु त्वा मित्रावरुणौ[3]❃।

卐 द्यौश्च त्वा पृथिवी च प्रचेतसा। शुक्रो बृह द्दक्षिणा त्वा पिपर्तु। अनु स्वधा चिकिता॰ सोमो अग्निः। अनु त्वाऽवतु सविता सवेन।। 56।।

❀ 卐 इन्द्रँ विश्वा अवीवृधन्न्। समुद्रव्यचस ङ्गिरः। रथीतम॰ रथीनाम्। वाजाना॰ सत्पतिं पतिम्।।

卐 परि मा सेन्या घोषाः। ज्यानाँ वृञ्जन्तु गृध्नवः। मेथिष्ठाः पिन्वमाना इह। माङ्गोपति मभि सँ विशन्तु।।

卐 तन्मेऽनुमति रनु मन्यताम्। तन्माता पृथिवी तत्पिता द्यौः।। 57।।❀ तद्ग्रावाण स्सोमसुतो मयो भुवः । तदश्विना शृणुत॰ सौभगा युवम्।।

卐 अव ते हेड[4]❃ 卐 उदुत्तमम्[5]❃।

卐 एना व्याघ्रं परिषस्वजानाः। सि॰ह॰ हिन्वन्ति महते सौभगाय। समुद्र न्न सुहुव न्तस्थिवा॰सम्। मर्मृज्यन्ते द्वीपिन मफ्स्वन्तः।।

卐 उदसा वेतु सूर्यः। उदिदं मामकँ वचः। उदिहि देव सूर्य। सह वग्नुना मम।।

卐 अहँ वाचो विवाचनम्। मयि वागस्तु धर्णसिः। यन्तु नदयो वर्षन्तु पर्जन्याः। सुपिप्पला ओषधयो भवन्तु।।

卐 अन्नवता मोदनवता मामिक्षवताम्। एषा॰ राजा भूयासम्।। 58।। (स्वधायै त्वा सवेन द्यौस्सूर्य सप्त च। 16।)

❀ 卐 ये केशिनः प्रथमा स्सत्र मासत। येभि राभृतँ यदिदँ विरोचते। तेभ्यो जुहोमि बहुधा घृतेन। राय स्पोषेणेमँ वर्चसा स॰सृजाथ।।

卐 नर्ते ब्रह्मण स्तपसो विमोकः। द्विनाम्नी दीक्षा वशिनी ह्युग्रा। प्र केशा स्सुवते काण्डिनो भवन्ति। येषां ब्रह्मेदीशे वपनस्य नान्यः।।

---

1

2

3

4

5

卐 आरोह प्रोष्ठँ विषहस्व शत्रून्। अवास्त्रा ग्दीक्षा वशिनी ह्युग्रा।। 59।।❀ देहि दक्षिणां प्रतिरस्वाऽऽयुः। अथा मुच्यस्व वरुणस्य पाशात्।।

卐 येनावप थ्सविता क्षुरेण। सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेद मस्योर्जेममम्। रय्या वर्चसा स२ँसृजाथ।।

卐 मा ते केशा ननुगा द्वर्च एतत्। तथा धाता करोतु ते। तुभ्य मिन्द्रो बृहस्पतिः। सविता वर्च आऽदधात्।। 60।।

❀ 卐 तेभ्यो निधानं बहुधा व्यैच्छन्न्। अन्तरा द्यावापृथिवी अप स्सुवः। दर्भस्तम्बे वीर्यकृते निधाय। पौ२ँस्येनेमँ वर्चसा स२ँसृजाथ।।

卐 बलन्ते बाहुवो स्सविता दधातु। सोमस्त्वाऽनक्तु पयसा घृतेन। स्त्रीषु रूप मश्विनैत न्निधत्तम्। पौ२ँस्येनेमँ वर्चसा स२ँसृजाथ।।

卐 यथ्सीमन्त ङ्कङ्कतस्ते लिलेख। यद्वा क्षुरः परिववर्ज वपङ्स्ते। स्त्रीषु रूप मश्विनैत न्निधत्तम्। पौ२ँस्येनेम२ँ स२ँसृजाथो वीर्येण।। 61।। (अवास्त्रा ग्दीक्षा वशिनी ह्युग्रा ऽदधा द्ववर्ज वपङ्स्ते द्वे च। 17।)

## सौ।का। 4ब्राह्मणम् सव 8( एकोऽनुवाकः 1)

❀ इन्द्रँ वै स्वा विशो मरुतो नापाचायन्न्। सोऽनपचाय्यमान एतँ विघन मपश्यत्। तमाऽहरत्। तेनायजत। तेनैवाऽऽसा न्त२ँ सङ्स्तम्भँ व्यहन्न्। यद्व्यहन्न्। तद्विघनस्य विघनत्वम्। वि पाप्मानं भ्रातृव्य२ँ हते। य एतेन यजते। य उ चैन मेवँ वेद।। 62।।❀ य२ँ राजानँ विशो नापचायेयुः। यो वा ब्राह्मण स्तमसा पाप्मना प्रावृत स्स्यात्। स एतेन यजेत। विघनेनैवैन द्विहत्य। विशा माधिपत्य ङ्गच्छति। तस्य द्वे द्वादशे स्तोत्रे भवतः। द्वे चतुर्वि२ँशे। औद्भिद्य मेव तत्। एतद्वै क्षत्रस्यौद्भिद्यम्। यदस्मै स्वाविशो बलि२ँ हरन्ति।। 63।।❀ हरन्त्यस्मै विशो बलिम्। ऐन मप्रतिख्यात ङ्गच्छति। य एवँ वेद। प्रबाहुग्वा अग्रे क्षत्राण्यातेपुः। तेषामिन्द्रः~ क्षत्राण्याऽदत्त। न वा इमानि क्षत्राण्यभूव न्निति। तन्नक्षत्राणा न्नक्षत्रत्वम्। आ श्रेयसो भ्रातृव्यस्य तेज इन्द्रिय न्दत्ते। य एतेन यजते। य उ चैनमेवँ वेद।। 64।।❀ तद्यथा ह वै सचक्रिणौ कप्लका वुपावहितौ स्याताम्। एव मेतौ युग्मन्तौ स्तोमौ। अयुक्षु स्तोमेषु क्रियेते। पाप्मनोऽपहत्यै। अप

Sri Ganapati Sachchidananda Avadhoota Peetham

पाप्मानं भ्रातृव्य॰ हते। य एतेन यजते। य उ चैन मेवँ वेद। तद्यथा ह वै सूतग्रामण्यः। एवञ्छन्दा॰सि। तेष्वसा वादित्यो बृहती रभ्यूढः।। 65।।❀ सतोबृहतीषु स्तुवते सतोबृहन्न्। प्रजया पशुभि रसानीत्येव। व्यतिषक्ताभि स्स्तुवते। व्यतिषक्तँ वै क्षत्रँ विशा। विशैवैनङ्क्षत्रेण व्यतिषजति। व्यतिषक्ताभि स्स्तुवते। व्यतिषक्तो वै ग्रामणी स्सजातैः। सजातै रेवैनँ व्यतिषजति। व्यतिषक्ताभि स्स्तुवते। व्यतिषक्तो वै पुरुष॰ पाप्मभिः। व्यतिषक्ताभि रेवास्य पाप्मनो नुदते।। 66।। (वेद हरन्त्येन मेवँ वेदाभ्यूढ॰ पाप्मभि रेकञ्च। 18।)

(त्रिवृ द्यदाग्नेयोऽग्निमुखा ह्युद्धि र्यदाग्नेय आग्नेयो न वै सोमेन यो वै सोमेनैष गोसव स्सि॰हेऽभि प्रेहि मित्रवर्धन॰ प्रजापति स्ता ओदनं प्रजापति रकामयत बहो र्भूया नगस्त्योऽस्याजरास स्तिष्ठा हरी प्रजापति॰ पशू न्व्याघ्रोऽय मभि प्रेहि वृत्रहन्तमो ये केशिन इन्द्रँ वा अष्टादश। 18। त्रिवृद्यो वै सोमेनाऽऽयुरसि बहु भवति तिष्ठा हरी रथ आऽयं भातु तेभ्यो निधान॰ षट्थषष्टिः। 66। त्रिवृ त्पाप्मनो नुदते।)

## द्वितीयाष्टके - अष्टम॰ प्रपाठकः

### वै।का। 1सूक्तमन्त्राः 9(पशुबन्धादिषु उपयुक्ताः8अष्टावनुवाकाः ) ()

❀ 卐 पीवोन्ना॰ रयिवृध स्सुमेधाः। श्वेत स्सिषक्ति नियुता मभिश्रीः। ते वायवे समनसो वि तस्थुः। विश्वेन्नर स्स्वपत्यानि चक्रुः।।

卐 रायेऽनु यञ्जज्ञतू रोदसी उभे। राये देवी धिषणा धाति देवम्। अधा वायु न्नियुतस्सश्चत स्वाः। उत श्वेतँ वसुधिति न्निरेके।।

卐 आ वायो[1]❋ 卐 प्र याभिः[2]❋।

卐 प्र वायु मच्छा बृहती मनीषा।। 1।।❀ बृहद्रयिँ विश्ववारा॰ रथप्राम्। द्युतद्यामा नियुत॰ पत्यमानः। कवि॰ कवि मियक्षसि प्रयज्यो।।

卐 आ नो नियुद्भि श्शतिनीभि रध्वरम्। सहस्रिणीभि रुप याहि यज्ञम्। वायो अस्मिन् हविषि मादयस्व। यूयं पात स्वस्तिभि स्सदा नः।।

1

2

卐 प्रजापते न त्वदेता न्यन्यः। विश्वा जातानि परि ता बभूव। यत्कामा स्ते जुहुम स्तन्नो अस्तु।। 2।। ❀ वयꣳ स्याम पतयो रयीणाम्।।

卐 रयीणां पतिँ यजतं बृहन्तम्। अस्मि न्भरे नृतमँ वाजसातौ। प्रजापतिं प्रथमजा.मृतस्य। यजाम देव मधि नो ब्रवीतु।।

卐 प्रजापते त्व न्निधिपाः पुराणः। देवानां पिता जनिता प्रजानाम्। पति र्विश्वस्य जगतः परस्पाः। हवि र्नो देव विहवे जुषस्व।।

卐 तवेमे लोकाः प्रदिशो दिशश्च।। 3।। ❀ परावतो निवत उद्वतश्च। प्रजापते विश्वसृ ज्जीवधन्य इदन्नो देव। प्रतिहर्य हव्यम्।।

卐 प्रजापतिं प्रथमँ यज्ञियानाम्। देवाना मग्रे यजतँ यजध्वम्। स नो ददातु द्रविणꣳ सुवीर्यम्। रायस्पोषँ विष्यतु नाभि मस्मे।।

卐 यो राय ईशे शतदाय उक्थ्यः। यः पशूनाꣳ रक्षिता विष्ठितानाम्। प्रजापतिः प्रथमजा ऋतस्य।। 4।। ❀ सहस्रधामा जुषताꣳ हविर्नः।।

卐 सोमापूष[1]❀ 卐णेमौ देवौ[2]❀।

卐 सोमापूषणा रजसो विमानम्। सप्तचक्रꣳ रथ मविश्वमिन्वम्। विषूवृतं मनसा युज्यमानम्। तञ्जिन्वथो वृषणा पञ्चरश्मिम्।।

卐 दिव्यन्य स्सदनञ्चक्र उच्चा। पृथिव्या मन्यो अध्यन्तरिक्षे। तावस्मभ्यं पुरुवारं पुरुक्षुम्। रायस्पोषँ विष्यता न्नाभि मस्मे।। 5।।

❀ 卐 धियं पूषा जिन्वतु विश्वमिन्वः। रयिꣳ सोमो रयिपति र्दधातु। अवतु देव्यदिति रनर्वा। बृह द्वदेम विदथे सुवीराः।।

卐 विश्वान्यन्यो भुवना जजान। विश्व मन्यो अभिचक्षाण एति। सोमापूषणा ववत न्धियं मे। युवभ्याँ विश्वाः पृतना जयेम।।

卐 उदुत्तमँ वरुणा[3]❀ 卐ऽस्तभ्नाद्द्याम्[1]❀। 卐 यत्किञ्चेद[2]❀ 卐 क्तिवासः[3]❀।

---

1

2

3

卐 अव ते हेड[4]❃ 卐 स्तत्त्वा यामि[5]❃।
卐 आदित्याना मवसा[6]❃ 卐 न दक्षिणा[7]❃।
卐 धारयन्त आदित्यास[8]❃ 卐 स्तिस्रो भूमी र्धारयन्न्[9]❃।
卐 यज्ञो देवाना९[10]❃ 卐 शुचि रपः[11]❃।। 6।। (मनीषाऽस्तु चर्तस्यास्मे कितवास श्चत्वारि च। 1।)

❀ 卐 ते शुक्रास श्शुचयो रश्मिवन्तः। सीद न्नादित्या अधि बर्हिषि प्रिये। कामेन देवा स्सरथ न्दिवो नः। आ यान्तु यज्ञमुप नोजुषाणाः।।
卐 ते सूनवो अदितेः पीवसा मिषम्। घृतं पिन्व त्प्रतिहर्य न्नृतेजाः। प्र यज्ञिया यजमानाय येमुरे। आदित्याः कामं पितुमन्त मस्मे।।
卐 आ नः पुत्रा अदिते यान्तु यज्ञम्। आदित्यासः पथिभि र्देवयानैः।। 7।। ❀ अस्मे काम न्दाशुषे सन्नमन्तः। पुरोडाश ङ्घृतवन्त ञ्जुषन्ताम्।।
卐 स्कभायत निरृति९ सेधतामतिम्। प्र रश्मिभि र्यतमाना अमृध्राः। आदित्याः काम प्रयताँ वषट्कृतिम्। जुषध्वन्नो हव्यदातिँ यजत्राः।।
卐 आदित्या न्काम मवसे हुवेम। ये भूतानि जनयन्तो विचिख्युः। सीदन्तु पुत्रा अदिते रुपस्थम्। स्तीर्णं बर्हिर् हविरद्याय देवाः।। 8।।
❀ 卐 स्तीर्णं बर्हि स्सीदता यज्ञे अस्मिन्न्। ध्राजा स्सेधन्तो अमति न्दुरेवाम्। अस्मभ्यं पुत्रा अदितेः प्रय९सत। आदित्याः काम हविषो जुषाणाः।।

1
2
3
4
5
6
7
8
9
10
11

卐 अग्ने नय सुपथा राये अस्मान्। विश्वानि देव वयुनानि विद्वान्। युयोध्यस्म ज्जुहुराण मेनः। भूयिष्ठा न्ते नमउक्तिँ विधेम।।

卐 प्र व श्शुक्राय भानवे भरध्वम्। हव्यं मति ञ्चाग्नये सुपूतम्।। 9।।❀ यो दैव्यानि मानुषा जनूꣳषि। अन्त र्विश्वानि विद्मना जिगाति।।

卐 अच्छा गिरो मतयो देवयन्तीः। अग्निँ यन्ति द्रविणं भिक्षमाणाः। सुसन्दृशꣳ सुप्रतीकꣳ स्वञ्चम्। हव्यवाह मरतिं मानुषाणाम्।।

卐 अग्ने त्वमस्म द्युयोध्यमीवाः। अनग्नित्रा अभ्यमन्त कृष्टीः। पुन रस्मभ्यꣳ सुविताय देव। क्षाँ विश्वेभि रजरेभि र्यजत्र।। 10।।

❀ 卐 अग्ने त्वं पारया नव्यो अस्मान्। स्वस्तिभि रति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी। भवा तोकाय तनयाय शँ योः।।

卐 प्रकारवो मनना वच्यमानाः। देवद्रीची न्नयथ देवयन्तः। दक्षिणावा ड्वाजिनी प्राच्येति। हवि र्भरन्त्यग्नये घृताची।।

卐 इन्द्र न्नरो[1]❁ 卐 युजे रथम्[2]❁।

卐 जगृभ्णाते दक्षिण मिन्द्र हस्तम्।। 11।।❀ वसूयवो वसुपते वसूनाम्। विद्मा हि त्वा गोपतिꣳ शूर गोनाम्। अस्मभ्यञ्चित्रँ वृषणꣳ रयिन्दाः।।

卐 तवेदँ विश्व मभितः पशव्यम्। यत्पश्यसि चक्षसा सूर्यस्य। गवामसि गोपति रेक इन्द्र। भक्षीमहि ते प्रयतस्य वस्वः।।

卐 समिन्द्रणो मनसा नेषि गोभिः। सꣳ सूरिभि र्मघव'2'न्थ्सꣳस्वस्त्या। सं ब्रह्मणा देवकृतँ यदस्ति।। 12।।❀ स न्देवानाꣳ सुमत्या यज्ञियानाम्।।

卐 आरा च्छत्रु मप बाधस्व दूरम्। उग्रो यश्शम्बः पुरुहूत तेन। अस्मे धेहि यवम द्गोमदिन्द्र। कृधी धिय ञ्जरित्रे वाजरत्नाम्।।

卐 आ वेधसꣳ[3]❁ 卐 स हि शुचिः[1]❁।

1

2

3

卐 बृहस्पतिः प्रथमञ्जायमानः। महो ज्योतिषः परमे व्योमन्न्। सप्ताऽस्य स्तुविजातो रवेण। वि सप्तरश्मि रधम त्तमाऽसि।। 13।।

❀ 卐 बृहस्पति स्समजय द्वसूनि। महो व्रजा न्गोमतो देव एषः। अप स्सिषास'2'न्थ्सुव रप्रतीत्तः। बृहस्पतिर् हन्त्यमित्र मर्कैः।।

卐 बृहस्पते प[2]❃ 卐 यैवा पित्रे[3]❃।

卐 आ नो दिवः[4]❃ 卐 पावीरवी[5]❃। 卐 इमा जुह्वाना[6]❃ 卐 यस्ते स्तनः[7]❃।

卐 सरस्व त्यभि नो नेषि[8]❃।

卐 इयः शुष्मेभि र्बिसखा इवारुजत्। सानु गिरीणा न्तविषेभि रूर्मिभिः। पारावदघ्नी मवसे सुवृक्तिभिः। सरस्वती माविवासेम धीतिभिः।। 14।। (देवयानै र्देवा स्सुपूतँ यजत्र हस्त मस्ति तमाऽस्यूर्मिभिर्द्वे च। 2।)

❀ 卐 सोमो धेनुः सोमो अर्वन्त माशुम्। सोमो वीर ङ्कर्मण्य न्ददातु। सादन्यँ विदथ्यः सभेयम्। पितुश्श्रवणँ यो ददाश दस्मै।।

卐 अषाढँ युथ्सु[9]❃ 卐 त्वः सोम क्रतुभिः[10]❃। 卐 या ते धामानि हविषा यजन्ति[11]।❃

卐 त्वमिमा ओषधी स्सोम विश्वाः। त्वमपो अजनय स्त्वङ्गाः। त्वमातन्तथोर्वन्तरिक्षम्। त्वञ्ज्योतिषा वितमो ववर्थ।। 15।।

❀ 卐 या ते धामानि दिवि या पृथिव्याम्। या पर्वतेष्वोषधीष्वप्सु। तेभि र्नो विश्वै स्सुमना अहेडन्न्। राजन्थ्सोम प्रति हव्या गृभाय।।

---

1
2
3
4
5
6
7
8
9
10
11

卐 विष्णो नुक[1]❉ 卐 न्तदस्य प्रियम्[2]❉। 卐 प्र तद्विष्णुः[3]❉।

卐 परो मात्रया तनुवा वृधान। न ते महित्व मन्वश्नुवन्ति। उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वम्। परमस्य विथ्से।। 16।।

❀ 卐 विचक्रमे[4]❉ 卐 त्रि र्देवः[5]❉।

卐 आ ते महो[6]❉ 卐 यो जात एव[7]❉। 卐 अभि गोत्राणि[8]❉।

卐 आभिस्स्पृधो मिथती ररिषण्यन्न्। अमित्रस्य व्यथया मन्युमिन्द्र। आभि र्विश्वा अभियुजो विषूचीः। आर्याय विशोऽव तारी र्दासीः।।

卐 अयꣳ श्रृण्वे अथ जय न्नुत घ्नन्न्। अय मुत प्र कृणुते युधा गाः। यदा सत्य ङ्कृणुते मन्युमिन्द्रः।। 17।। ❀ विश्व न्दृढं भयत एज दस्मात्।।

卐 अनु स्वधा मक्षर न्नापो अस्य। अवर्धत मध्य आ नाव्यानाम्। सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन। हन्मनाऽह न्नभि द्यून्।।

卐 मरुत्वन्तँ वृषभँ वावृधानम्। अकवारि न्दिव्यꣳ शासमिन्द्रम्। विश्वासाह मवसे नूतनाय। उग्रꣳ सहोदा मिह तꣳ हुवेम।।

卐 जनिष्ठा उग्र स्सहसे तुराय।। 18।। ❀ मन्द्र ओजिष्ठो बहुलाभिमानः। अवर्ध न्निन्द्रं मरुत श्चिदत्र। माता यद्वीर न्दधनद्धनिष्ठा।।

卐 क्व स्या वो मरुत स्स्वधाऽऽसीत्। यन्मा मेकꣳ समधत्ताहिहत्ये। अहꣳ ह्युग्र स्तविष स्तुविष्मान्। विश्वस्य शत्रो रनमँ वधस्नैः।।

卐 वृत्रस्य त्वा श्वसथा दीषमाणाः। विश्वे देवा अजहुर्ये सखायः। मरुद्भि रिन्द्र सख्यन्ते अस्तु।। 19।। ❀ अथेमा विश्वाः पृतना जयासि।।

---

1

2

3

4

5

6

7

8

卐 वर्धीं वृत्रं मरुत इन्द्रियेण। स्वेन भामेन तविषो बभूवान्। अह मेता मनवे विश्वश्चन्द्राः। सुगा अप श्चकर वज्रबाहुः।।

卐 स यो वृषा वृष्णियेभि स्समोकाः। महो दिवः पृथिव्याश्च सम्राट्। सतीनसत्वा हव्यो भरेषु। मरुत्वान्नो भवत्विन्द्र ऊती।।

卐 इन्द्रो वृत्र मतर द्वृत्रतूर्यें।। 20।।❀ अनाधृष्यो मघवा शूर इन्द्रः। अन्वेनँ विशो अमदन्त पूर्वीः। अयꣳ राजा जगत श्चर्षणीनाम्।।

卐 स एव वीर स्स उ वीर्यावान्। स एकराजो जगतः परस्पाः। यदा वृत्र मतर च्छूर इन्द्रः। अथा भव द्दमिताभिक्रतूनाम्।।

卐 इन्द्रो यज्ञँ वर्धयन्विश्ववेदाः। पुरोडाशस्य जुषताꣳ हवि र्नः। वृत्र न्तीर्त्वा दानवँ वज्रबाहुः।। 21।।❀ दिशोऽदृꣳह दृꣳहिता दृꣳहणेन।।

卐 इमँ यज्ञँ वर्धयन्विश्ववेदाः। पुरोडाशं प्रति गृभ्णात्विन्द्रः। यदा वृत्र मतर च्छूर इन्द्रः। अथैकराजो अभव ज्जनानाम्।।

卐 इन्द्रो देवा न्छम्बरहत्य आवत्। इन्द्रो देवाना मभव त्पुरोगाः। इन्द्रो यज्ञे हविषा वावृधानः। वृत्रतू र्नो अभयꣳ शर्म यꣳसत्।।

卐 यस्सप्त सिन्धूꣳ रदधा त्पृथिव्याम्। यस्सप्त लोका नकृणो द्दिशश्च। इन्द्रो हविष्मा न्थसगणो मरुद्भिः। वृत्रतूर्नो यज्ञ मिहोप यासत्।। 22।। (ववर्थ विथ्स इन्द्र स्तुरायास्तु वृत्रतूर्ये वज्रबाहुः पृथिव्या न्त्रीणि च। 3।)

❀ 卐 इन्द्र स्तरस्वा नभिमातिहोग्रः। हिरण्यवाशी रिषिर स्सुवर्षाः। तस्य वयꣳ सुमतौ यज्ञियस्य। अपि भद्रे सौमनसे स्याम।।

卐 हिरण्यवर्णो अभयङ्कृणोतु। अभिमातिहेन्द्रः पृतनासु जिष्णुः। स न श्शर्म त्रिवरूथँ वियꣳसत्। यूयं पात स्वस्तिभि स्सदा नः।।

卐 इन्द्रꣳ स्तुहि वज्रिणꣳ स्तोमपृष्ठम्। पुरोडाशस्य जुषताꣳ हविर्नः।। 23।।❀ हत्वाऽभिमातीः पृतना स्सहस्वान्। अथाभय ङ्कृणुहि विश्वतो नः।।

卐 स्तुहि शूरँ वज्रिण मप्रतीत्तम्। अभिमातिहनं पुरुहूत मिन्द्रम्। य एक इच्छतपति र्जनेषु। तस्मा इन्द्राय हवि रा जुहोत।।

卐 इन्द्रो देवाना मधिपाः पुरोहितः। दिशां पति रभव द्वाजिनीवान्। अभिमातिहा तविष स्तुविष्मान्। अस्मभ्य ञ्चित्रँ वृषण॰ रयि न्दात्।। 24।।

❀ 卐 य इमे द्यावापृथिवी महित्वा। बलेनाद्द॰ह दभिमातिहेन्द्रः। स नो हविः प्रति गृभ्णातु रातये। देवाना न्देवो निधिपा नो अव्यात्।।

卐 अनवस्ते रथँ[1] ❀ 卐 वृष्णे यत्ते[2] ❀। 卐 इन्द्रस्य नु वीर्या[3] ❀ 卐ण्यहन्नहिम्[4] ❀।

卐 इन्द्रो यातोऽवसितस्य राजा। शमस्य च शृङ्गिणो वज्रबाहुः। सेदु राजा क्षेति चर्षणीनाम्। अरान्न नेमिः परि ता बभूव।। 25।।

❀ 卐 अभि सिध्मो अजिगा दस्य शत्रून्। वि तिग्मेन वृषभेणाऽऽ पुरोऽभेत्। सँ वज्रेणासृज द्वृत्रमिन्द्रः। प्र स्वां मति मतिर च्छाशदानः।।

卐 विष्णु न्देवँ वरुण मूतये भगम्। मेदसा देवा वपया यजध्वम्। ता नो यज्ञ मा गतँ विश्वधेना। प्रजाव दस्मे द्रविणेह धत्तम्।।

卐 मेदसा देवा वपया यजध्वम्। विष्णुञ्च देवँ वरुणञ्च रातिम्।। 26।। ❀ ता नो अमीवा अपबाधमानौ। इमँ यज्ञ ञ्जुषमाणा वुपेतम्।।

卐 विष्णूवरुणा युव मध्वराय नः। विशे जनाय महि शर्म यच्छतम्। दीर्घप्रयज्यू हविषा वृधाना। ज्योतिषाऽराती र्दहत न्तमा॰सि।।

卐 ययो रोजसा स्कभिता रजा॰सि। वीर्येभि र्वीरतमा शविष्ठा। या पत्येते अप्रतीत्ता सहोभिः। विष्णू अगन्वरुणा पूर्वहूतौ।। 27।।

❀ 卐 विष्णूवरुणा वभिशस्तिपावाम्। देवा यजन्त हविषा घृतेन। अपामीवा॰ सेधत॰ रक्षसश्च। अथा धत्तँ यजमानाय शँ योः।।

1

2

3

4

卐 अꣳहोमुचा वृषभा सुप्रतूर्ती। देवाना न्देवतमा शचिष्ठा। विष्णूवरुणा प्रति हर्यत न्नः। इद न्नरा प्रयत मूतये हविः।।

卐 मही नु द्यावापृथिवी इह ज्येष्ठे। रुचा भवताꣳ शुचयद्भि रर्कैः।। 28।। ❀ यथ्सीँ वरिष्ठे बृहती विमिन्वन्न्। नृवद्ध्योऽक्षा पप्रथानेभि रेवैः।।

卐 प्र पूर्वजे पितरा नव्यसीभिः। गीर्भिः कृणुध्वꣳ सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन। जनेन यातं महि वाँ वरूथम्।।

卐 स इथ्स्वपा भुवनेष्वास। य इमे द्यावापृथिवी जजान। उर्वी गभीरे रजसी सुमेके। अवꣳशे धीर श्शाच्या समैरत्।। 29।।

❀ 卐 भूरिन्द्वे अचरन्ती चरन्तम्। पद्वन्तङ्गर्भ मपदीदधाते। नित्यन्न सूनुं पित्रो रुपस्थे। तं पिपृतꣳ रोदसी सत्यवाचम्।।

卐 इद न्द्यावापृथिवी सत्य मस्तु। पित र्मात र्यदिहोपब्रुवे वाम्। भूत न्देवाना मवमे अवोभिः। विद्यामेषँ वृजन ञ्जीरदानुम्।।

卐 उर्वी पृथ्वी बहुले दूरे अन्ते। उपब्रुवे नमसा यज्ञे अस्मिन्न्। दधाते ये सुभगे सुप्रतूर्ती। द्यावा रक्षतं पृथिवी नो अभ्वात्।।

卐 या जाता ओषधयो[1]❃ 卐ऽति विश्वाः परिष्ठाः[2]❃। 卐 या ओषधय स्सोमराज्ञी[3]❃ 卐 रश्वावतीꣳ सोमवतीम्[4]❃। 卐 ओषधीरिति मातरो[5]❃卐ऽन्यावो अन्या मवतु[6]❃।। 30।। (हवि र्नोऽदा द्बभूव रातिं पूर्वहूता वर्कै रैर दस्मि न्पञ्च च। 4।)

❀ 卐 शुचिन्नु स्तोमꣳ[7]❃ 卐 श्ञथ द्वृत्रम्[8]❃। 卐 उभा वा मिन्द्राग्नी[9]❃ 卐 प्र चर्षणिभ्यः[1]❃। 卐 आवृत्रहणा[2]❃ 卐 गीर्भि र्विप्रः[3]❃।

1
2
3
4
5
6
7
8
9

卐 ब्रह्मणस्पते त्वमस्य यन्ता। सूक्तस्य बोधि तनयञ्च जिन्व। विश्व न्तद्भद्रँ यदवन्ति देवाः। बृहद्वदेम विदथे सुवीराः।।

卐 स ईं सत्येभि स्सखिभि श्शुचद्भिः। गोधायसँ विधनसै रतर्दत्। ब्रह्मणस्पति वृषभि वराहैः।। 31।। ❀ घर्मस्वेदेभि द्रविणँ व्यानट्।।

卐 ब्रह्मणस्पते रभव द्यथावशम्। सत्यो मन्यु र्महिकर्मा करिष्यतः। यो गा उदाजथ्स दिवे वि चाभजत्। महीव रीति श्शवसा सरत्पृथक्।।

卐 इन्धानो अग्निँ वनव द्वनुष्यतः। कृत ब्रह्मा शूशुव द्रातहव्य इत्। जातेन जात मति सृ त्र सृंसते। यँ यँ युज ङ्कृणुते ब्रह्मणस्पतिः।।

卐 ब्रह्मणस्पते सुयमस्य विश्वहा।। 32।। ❀ राय स्स्याम रथ्यो विवस्वतः। वीरेषु वीरां उप पृङ्धि नस्त्वम्। यदीशानो ब्रह्मणा वेषि मे हवम्।।

卐 स इज्जनेन स विशा स जन्मना। स पुत्रै र्वाजं भरते धना नृभिः। देवानाँ यः पितर माविवासति। श्रद्धामना हविषा ब्रह्मणस्पतिम्।।

卐 यास्ते पूष न्नावो अन्तः[4]❀। 卐 शुक्र न्ते अन्य[5]❀ 卐 त्पूषेमा आशाः[6]❀।

卐 प्रपथे पथा मजनिष्ट पूषा।। 33।। ❀ प्रपथे दिवः प्रपथे पृथिव्याः। उभे अभि प्रियतमे सधस्थे। आ च परा च चरति प्रजानन्न्।।

卐 पूषा सुबन्धु र्दिव आ पृथिव्याः। इडस्पति र्मघवा दस्मवर्चाः। तन्देवासो अददु स्सूर्यायै। कामेन कृत न्तवसँ स्वञ्चम्।।

卐 अजाश्वः पशुपा वाजबस्त्यः। धियञ्जिन्वो विश्वे भुवने अर्पितः। अष्ट्रां पूषा शिथिरा मुद्वरीवृजत्।। 34।। ❀ सञ्चक्षाणो भुवना देव ईयते।।

---

1
2
3
4
5
6

卐 शुची वो हव्या मरुत श्शुचीनाम्। शुचिꣳ हिनो म्यध्वरꣳ शुचिभ्यः। ऋतेन सत्य मृतसाप आयन्न्। शुचि जन्मान श्शुचयः पावकाः।।

卐 प्रचित्र मर्क ङ्गृणते तुराय। मारुताय स्वतवसे भरध्वम्। ये सहाꣳसि सहसा सहन्ते। रेजते अग्ने पृथिवी मखेभ्यः।।

卐 अꣳसेष्वा मरुतः खादयो वः।। 35।। ❀ वक्ष स्सुरुक्मा उप शिश्रियाणाः। वि विद्युतो न वृष्टिभी रुचानाः। अनु स्वधा मायुधै र्यच्छमानाः।।

卐 या व श्शर्म शशमानाय सन्ति। त्रिधातूनि दाशुषे यच्छताधि। अस्मभ्य न्तानि मरुतो वियन्त। रयिन्नो धत्त वृषण स्सुवीरम्।।

卐 इमे तुरं मरुतो रामयन्ति। इमे सह स्सहस आ नमन्ति। इमे शꣳसँ वनुष्यतो नि पान्ति।। 36।। ❀ गुरुद्वेषो अररुषे दधन्ति।।

卐 अरा इवेदचरमा अहेव। प्रप्रजायन्ते अकवा महोभिः। पृश्ञेः पुत्रा उपमासो रभिष्ठाः। स्वया मत्या मरुत स्सं मिमिक्षुः।।

卐 अनु ते दायि मह इन्द्रियाय। सत्रा ते विश्व मनु वृत्रहत्ये। अनु क्षत्र मनु सहो यजत्र। इन्द्र देवेभि रनु ते नृषह्ये।।

卐 य इन्द्र शुष्मो मघवन्ते अस्ति।। 37।। ❀ शिक्षा सखिभ्यः पुरुहूत नृभ्यः। त्वꣳ हि दृढा मघवन्विचेताः। अपावृधि परिवृति न्न राधः।।

卐 इन्द्रो राजा जगतश्चर्षणीनाम्। अधि क्षमि विषुरूपँ यदस्ति। ततो ददातु दाशुषे वसूनि। चोदद्राध उपस्तुत श्चिदर्वाक्।।

卐 तमुष्टुहि यो अभिभूत्योजाः। वन्व न्नवातः पुरुहूत इन्द्रः। अषाढ मुग्रꣳ सहमान माभिः।। 38।। ❀ गीर्भि र्वर्ध वृषभ ञ्चर्षणीनाम्।।

卐 स्थूरस्य रायो बृहतो य ईशे। तमुष्टवाम विदथेष्विन्द्रम्। यो वायुना जयति गोमतीषु। प्र धृष्णुया नयति वस्यो अच्छ।।

卐 आ ते शुष्मो वृषभ एतु पश्चात्। ओत्तरा दधरागा पुरस्तात्। आ विश्वतो अभि समेत्वर्वाङ्। इन्द्र द्युम्नꣳ सुवर्वद्धेह्यस्मे।। 39।। (वराहँ विश्वहाऽजनिष्ट पूषोद्वरीवृज त्वादयो वः पान्त्यस्त्याभि नव च। 5।)

☬❀ 卐 आ देवो यातु सविता सुरत्नः। अन्तरिक्षप्रा वहमानो अश्वैः। हस्ते दधानो नर्या पुरूणि। निवेशयन्च प्रसुवञ्च भूम।।

卐 अभीवृत ङ्कृशनै र्विश्वरूपम्। हिरण्यशम्यँ यजतो बृहन्तम्। आऽस्थाद्रथꣳ सविता चित्रभानुः। कृष्णा रजाꣳसि तविषी न्दधानः।।

卐 सघा नो देव स्सविता सवाय। आऽसाविष द्वसुपति र्वसूनि।। 40।। ❀ विश्रयमाणो अमति मुरूचीम्। मर्तभोजन मध रासते न।

卐 वि जना ञ्छ्यावा श्शितिपादो अख्यन्न्। रथꣳ हिरण्यप्रउगँ वहन्तः। शश्वद्दिश स्सवितु र्दैव्यस्य। उपस्थे विश्वा भुवनानि तस्थुः।।

卐 वि सुपर्णो अन्तरिक्षाण्यख्यत्। गभीरवेपा असुर स्सुनीथः। क्वेदानीꣳ सूर्यः कश्चिकेत। कतमान्द्याꣳ रश्मि रस्याऽऽततान।। 41।।

❀ 卐 भग न्धियँ वाजयन्तः पुरन्धिम्। नराशꣳसो ग्नास्पतिर्नो अव्यात्। आ ये वामस्य सङ्गथे रयीणाम्। प्रिया देवस्य सवितु स्स्याम।।

卐 आ नो विश्वे अस्क्रागमन्तु देवाः। मित्रो अर्यमा वरुण स्सजोषाः। भुवन् यथा नो विश्वे वृधासः। करन्थ्सुषाहा विथुरन्न शवः।।

卐 शन्नो देवा विश्वदेवा भवन्तु। शꣳ सरस्वती सह धीभि रस्तु।। 42।। ❀ शमभिषाच श्शमु रातिषाचः। शन्नो दिव्याः पार्थिवा श्शन्नो अप्याः।।

卐 ये सवितु स्सत्यसवस्य विश्वे। मित्रस्य व्रते वरुणस्य देवाः। ते सौभगँ वीरव द्गोमदप्नः। दधातन द्रविणञ्चित्र मस्मे।।

卐 अग्ने याहि दूत्यँ वारिषेण्यः। देवाꣳ अच्छा ब्रह्मकृता गणेन। सरस्वतीं मरुतो अश्विनाऽपः। यक्षि देवा न्रत्नधेयाय विश्वान्।। 43।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

❀ 卐 द्यौः पितः पृथिवि मात रध्रुक्। अग्ने भ्रात र्वसवो मृडता नः। विश्व आदित्या अदिते सजोषाः। अस्मभ्यं शर्म बहुलँ वियन्त।।

卐 विश्वे देवा श्शृणुतेमं हवं मे। ये अन्तरिक्षे य उप द्यविष्ठ। ये अग्निजिह्वा उत वा यजत्राः। आसद्यास्मि न्बर्हिषि मादयध्वम्।।

卐 आ वां मित्रावरुणा हव्यजुष्टिम्। नमसा देवा ववसा ववृत्याम्।। 44।। ❀ अस्माकं ब्रह्म पृतनासु सह्या अस्माकम्। वृष्टि र्दिव्या सुपारा।।

卐 युवँ वस्त्राणि पीवसा वसाथे। युवो रच्छिद्रा मन्तवो ह सर्गाः। अवातिरत मनृतानि विश्वा। ऋतेन मित्रावरुणा सचेथे।।

卐 तथ्सुवां मित्रावरुणा महित्वम्। ईर्मा तस्थुषी रहभि र्दुदुह्रे। विश्वाः पिन्वथ स्वसरस्य धेनाः। अनु वामेकः पवि राववर्ति।। 45।।

❀ 卐 यद्बंहिष्ठ न्नातिविदे सुदानू। अच्छिद्रं शर्म भुवनस्य गोपा। ततो नो मित्रावरुणा ववीष्टम्। सिषासन्तो जीगिवांस स्स्याम।।

卐 आ नो मित्रावरुणा हव्यदातिम्। घृतै र्गव्यूति मुक्षत मिडाभिः। प्रति वा मत्र वर माजनाय। पृणीत मुद्नो दिव्यस्य चारोः।।

卐 प्र बाहवा सिसृत ञ्जीवसे नः। आ नो गव्यूति मुक्षतङ्घृतेन।। 46।। ❀ आ नो जने श्रवयतँ युवाना। श्रुतं मे मित्रावरुणा हवेमा।।

卐 इमा रुद्राय स्थिरधन्वने गिरः। क्षिप्रेषवे देवाय स्स्वधाम्ने। अषाढाय सहमानाय मीढुषे। तिग्मायुधाय भरता श्शृणोतन।।

卐 त्वादत्तेभी रुद्र शन्तमेभिः। शतं हिमा अशीय भेषजेभिः। व्यस्मद्द्वेषो वितरँ व्यंहः। व्यमीवां श्चातयस्वा विषूचीः।। 47।।

❀ 卐 अर्ह न्बिभर्षि[1] ❀ 卐 मान स्तोके[2] ❀।

1

2

卐 आ ते पित र्मरुता॒ सुम्न मेतु। मा न स्सूर्यस्य सन्दृशो युयोथाः। अभि नो वीरो अर्वति क्षमेत। प्र जायेमहि रुद्र प्रजाभिः।।

卐 एवा बभ्रो वृषभ चेकितान। यथा देव न हृणीषे न हꣳसि। हावनश्रूर्नो रुद्रेह बोधि। बृह द्वदेम विदथे सुवीराः।।

卐 परि णो रुद्रस्य हेति[1]❃ 卐स्स्तुहि श्रुतम्[2]❃। 卐 मीढुष्टमा[3]❃卐ऽर्ह न्बिभरषि[4]❃।卐 त्वमग्ने रुद्र[5]❃ 卐 आ वो राजानम्[6]❃।। 48।। (वसूनि ततानास्तु विश्वान् ववृत्याँ ववर्ति घृतेन विषूची श्श्रुतन्द्वे च। 6।)

❀ 卐 सूर्यो देवी मुषसꣳ रोचमाना मर्यः। न योषा मभ्येति पश्चात्। यत्रा नरो देवयन्तो युगानि। वितन्वते प्रति भद्राय भद्रम्।।

卐 भद्रा अश्वा हरित स्सूर्यस्य। चित्रा एदग्वा अनु माद्यासः। नमस्यन्तो दिव आ पृष्ठ मस्थुः। परि द्यावा पृथिवी यन्ति सद्यः।।

卐 तथ्सूर्यस्य देवत्व न्तन्महित्वम्। मध्या कर्तो र्विततꣳ सञ्जभार।। 49।। ❀ यदेदयुक्त हरित स्सधस्थात्। आद्रात्री वास स्तनुते सिमस्मै।।

卐 तन्मित्रस्य वरुणस्याभिचक्षे। सूर्यो रूप ङ्कृणुते द्योरुपस्थे। अनन्त मन्यद्रुश दस्य पाजः। कृष्ण मन्यद्धरित स्सम्भरन्ति।।

卐 अद्या देवा उदिता सूर्यस्य। निरꣳहसः पिपृता न्निरवद्यात्। तन्नो मित्रो वरुणो मामहन्ताम्। अदिति स्सिन्धुः पृथिवी उत द्यौः।। 50।।

❀ 卐 दिवो रुक्म उरुचक्षा उदेति। दूरे अर्थ स्तरणि र्भ्राजमानः। नून ञ्जना स्सूर्येण प्रसूताः। आय न्नर्थानि कृणव न्नपाꣳसि।।

1
2
3
4
5
6

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore

卐 शन्नो भव चक्षसा शन्नो अह्ना। शं भानुना श९ हिमा शङ्घृणेन। यथा शमस्मै शमस दुरोणे। तथ्सूर्य द्रविण न्धेहि चित्रम्।।

卐 चित्र न्देवाना मुदगा दनीकम्। चक्षु र्मित्रस्य वरुणस्याग्नेः।। 51।। ❀ आऽप्रा द्यावापृथिवी अन्तरिक्षम्। सूर्य आत्मा जगत स्तस्थुषश्च।।

卐 त्वष्टा दध[1]❉ 卐 त्तन्न स्तुरीपम्[2]❉। 卐 त्वष्टा वीरं[3]❉ 卐 पिशङ्गरूपः[4]❉।

卐 दशेम न्त्वष्टु र्जनयन्त गर्भम्। अतन्द्रासो युवतयो बिभर्त्रम्। तिग्मानीकङ् स्वयशस ञ्जनेषु। विरोचमानं परिषीन्नयन्ति।।

卐 आ विष्यो वर्धते चारु रासु। जिह्मानां मूर्ध्व स्स्वयशा उपस्थे।। 52।। ❀ उभे त्वष्टु र्बिभ्यतु र्जायमानात्। प्रतीची सि९हं प्रति जोषयेते।

卐 मित्रो जना[5]❉ 卐 न्प्रस मित्र[6]❉।

卐 अयं मित्रो नमस्य स्सुशेवः। राजा सुक्षत्रो अजनिष्ट वेधाः। तस्य वय९ सुमतौ यज्ञियस्य। अपि भद्रे सौमनसे स्याम।।

卐 अनमीवास इडया मदन्तः। मितज्ञवो वरिम न्नापृथिव्याः। आदित्यस्य व्रत मुपक्ष्यन्तः।। 53।। ❀ वयं मित्रस्य सुमतौ स्याम।।

卐 मित्रन्न ई९ शिम्या गोषु गव्यवत्। स्वाधियो विदथे अप्स्वजीजनन्न्। अरे जयता९ रोदसी पाजसा गिरा। प्रति प्रियँ यजत ञ्जनुषा मवः।।

卐 महा९ आदित्यो नमसोपसद्यः। यातयज्जनो गृणते सुशेवः। तस्मा एत त्पन्यतमाय जुष्टम्। अग्नौ मित्राय हवि रा जुहोत।।

卐 आ वा९ रथो रोदसी बद्बधानः।। 54।। ❀ हिरण्ययो वृषभि र्यात्वश्वैः। घृतवर्तनिः पविभी रुचानः। इषाँ वोढा नृपति र्वाजिनीवान्।।

---

1

2

3

4

5

6

卐 स पप्रथानो अभि पञ्च भूम। त्रिवन्धुरो मनसाऽऽयातु युक्तः। विशो येन गच्छथो देवयन्तीः। कुत्रा चिद्याम मश्विना दधाना।।

卐 स्वश्वा यशसाऽऽयात मर्वाक्। दस्त्रा निधिं मधुमन्तं पिबाथः। वि वा॰ रथो वध्वा यादमानः।। 55।। ❀ अन्तान्दिवो बाधते वर्तनिभ्याम्।।

卐 युवो श्रियं परि योषा वृणीत। सूरो दुहिता परितक्मियायाम्। यद्देवयन्त मवथ श्शचीभिः। परिघ्र॰स वां मना वाँ वयो गाम्।।

卐 यो ह स्य वा॰ रथिरा वस्त उस्राः। रथो युजानः परियाति वर्तिः। तेन न श्शँ यो रुषसो व्युष्टौ। न्यश्विना वहतँ यज्ञे अस्मिन्न्।।

卐 युवं भुज्यु मववि‌द्ध॰ समुद्रे।। 56।। ❀ उदूहथु रर्णसो अस्त्रिधानैः। पतत्रिभि रश्रमै रव्यथिभिः। द॰सनाभि रश्विना पारयन्ता।।

卐 अग्नीषोमा यो अद्य वाम्। इदँ वच स्सपर्यति। तस्मै धत्त॰ सुवीर्यम्। गवां पोषꣳ स्वश्वियम्।।

卐 यो अग्नीषोमा हविषा सपर्यात्। देवद्रीचा मनसा यो घृतेन। तस्य व्रत॰ रक्षतं पात म॰हसः।। 57।। ❀ विशे जनाय महि शर्म यच्छतम्।।

卐 अग्नीषोमा य आहुतिम्। यो वा न्दाशा द्धविष्कृतिम्। स प्रजया सुवीर्यम्। विश्वमायु व्यश्नवत्।।

卐 अग्नीषोमा चेति तद्वीर्यँ वाम्। यदमुष्णीत मवसं पणिङ्गोः। अवातिरतं प्रथयस्य शेषः। अविन्दत ञ्ज्योति रेकं बहुभ्यः।।

卐 अग्नीषोमाविम॰ सु मे[1]❈ 卐ऽग्नीषोमा हविषः प्रस्थितस्य[2]❈।। 58।। (जभार द्यौ रग्ने रुपस्थ उपक्ष्यन्तो बद्धधानो यादमान स्समुद्रेऽ॰हसः प्रस्थितस्य। 7।)

❀ 卐 अह मस्मि प्रथमजा ऋतस्य। पूर्व न्देवेभ्यो अमृतस्य नाभिः। यो मा ददाति स इदेव मावाः। अह मन्न मन्न मदन्त मद्मि।।

---

1

2



Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 पूर्व मग्ने रपि दहत्यन्नम्। यत्तौ हाऽऽसाते अह मुत्तरेषु। व्यात्त मस्य पशव स्सुजम्भम्। पश्यन्ति धीरा॰ प्रचरन्ति पाकाः।।

卐 जहाम्यन्य न्न जहाम्यन्यम्। अह मन्नँ वश मिच्चरामि।। 59।। ❀ समान मर्थं पर्येमि भुञ्जत्। को मा मन्नं मनुष्यो दयेत।।

卐 पराके अन्न न्निहितँ लोक एतत्। विश्वै र्देवै॰ पितृभि र्गुप्त मन्नम्। यदद्यते लुप्यते यत्परोप्यते। शततमी सा तनू र्मे बभूव।।

卐 महान्तौ चरू सकृ द्दुग्धेन पप्रौ। दिवञ्च पृश्ञिञ्च पृथिवीञ्च साकम्। तत्सम्पिबन्तो न मिनन्ति वेधसः। नैत द्भूयो भवति नो कनीयः।। 60।।

❀ 卐 अन्नं प्राण मन्न मपान माहुः। अन्नं मृत्यु न्तमु जीवातु माहुः। अन्नं ब्रह्माणो जरसँ वदन्ति। अन्न माहु॰ प्रजननं प्रजानाम्।।

卐 मोघ मन्नँ विन्दते अप्रचेताः। सत्यं ब्रवीमि वध इथ्स तस्य। नार्यमणं पुष्यति नो सखायम्। केवलाघो भवति केवलादी।।

卐 अहं मेघ स्तनयन्वर्ष न्नस्मि। मामद न्त्यह मद्म्यन्यान्।। 61।। ❀ अह॰ सदमृतो भवामि। मदादित्या अधि सर्वे तपन्ति।।

卐 देवीँ वाचमजनयन्त[1]❀ 卐 यद्वाग्वदन्ती[2]❀।

卐 अनन्ता मन्ता दधि निर्मितां महीम्। यस्या न्देवा अदधु र्भोजनानि। एकाक्षरा न्द्विपदा॰ षद्पदाञ्च। वाच न्देवा उप जीवन्ति विश्वे।।

卐 वाच न्देवा उप जीवन्ति विश्वे। वाच ङ्गन्धर्वा॰ पशवो मनुष्याः। वाचीमा विश्वा भुवना न्यर्पिता।। 62।। ❀ सा नो हव ञ्जुषता मिन्द्रपत्नी।।

卐 वागक्षरं प्रथमजा ऋतस्य। वेदानां माताऽमृतस्य नाभिः। सा नो जुषाणोप यज्ञ माऽगात्। अवन्ती देवी सुहवा मे अस्तु।।

1

2

卐 यामृषयो मन्त्रकृतो मनीषिणः। अन्वैच्छ न्देवा स्तपसा श्रमेण। ता न्देवीँ वाच९ हविषा यजामहे। सा नो दधातु सुकृतस्य लोके।।

卐 चत्वारि वाक्परिमिता पदानि।। 63।।❀ तानि विदु र्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति। तुरीयँ वाचो मनुष्या वदन्ति।।

卐 श्रद्धयाऽग्नि स्समिध्यते। श्रद्धया विन्दते हविः। श्रद्धां भगस्य मूर्धनि। वचसा ऽऽवेदयामसि।।

卐 प्रियङ् श्रद्धे ददतः। प्रियङ् श्रद्धे दिदासतः। प्रियं भोजेषु यज्वसु।। 64।।❀ इदं म उदित ङ्कृधि।।

卐 यथा देवा असुरेषु। श्रद्धा मुग्रेषु चक्रिरे। एवं भोजेषु यज्वसु। अस्माक मुदित ङ्कृधि।।

卐 श्रद्धा न्देवा यजमानाः। वायुगोपा उपासते। श्रद्धा९ हृदय्यया ऽऽकूत्या। श्रद्धया हूयते हविः।।

卐 श्रद्धां प्रातर् हवामहे।। 65।।❀ श्रद्धां मध्यन्दिनं परि। श्रद्धा९ सूर्यस्य निम्रुचि। श्रद्धे श्रद्धापयेह मा।।

卐 श्रद्धा देवा नधि वस्ते। श्रद्धा विश्व मिद ञ्जगत्। श्रद्धा ङ्कामस्य मातरम्। हविषा वर्धयामसि।।

卐 ब्रह्म जज्ञानं प्रथमं पुरस्तात्। विसीमत स्सुरुचो वेन आवः। स बुध्निया उपमा अस्य विष्ठाः।। 66।।❀ सतश्च योनि मसतश्च विवः।।

卐 पिता विराजा मृषभो रयीणाम्। अन्तरिक्षँ विश्वरूप आ विवेश। तमर्कै रभ्यर्चन्ति वथ्सम्। ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः।।

卐 ब्रह्म देवा नजनयत्। ब्रह्म विश्व मिद ञ्जगत्। ब्रह्मणः~ क्षत्र न्निर्मितम्। ब्रह्म ब्राह्मण आत्मना।।

卐 अन्तरस्मि न्निमे लोकाः।। 67।।❀ अन्त र्विश्व मिदञ्जगत्। ब्रह्मैव भूताना ञ्ज्येष्ठम्। तेन कोऽर्हति स्पर्धितुम्।।

卐 ब्रह्म न्देवा स्त्रयस्त्रि९शत्। ब्रह्म न्निन्द्रप्रजापती। ब्रह्मन् ह विश्वा भूतानि। नावीवान्त स्समाहिता।।

卐 चतस्र आशाः प्रचरन्त्वग्नयः। इमन्नो यज्ञ न्नयतु प्रजानन्न्। घृतं पिन्व न्नजर९ सुवीरम्।। 68।।❀ ब्रह्म समिद्भवत्याहुतीनाम्।।



Sri Ganapati Sachchidananda Avadhoota Datta Peetham

卐 आ गावो अग्म न्नुत भद्र मक्रन्न्। सीदन्तु गोष्ठे रणय न्त्वस्मे। प्रजावतीः पुरुरूपा इह स्युः। इन्द्राय पूर्वी रुषसो दुहानाः।।

卐 इन्द्रो यज्वने पृणते च शिक्षति। उपेद्ददाति न स्वं मुषायति। भूयोभूयो रयि मिदस्य वर्धयन्न्। अभिन्ने खिल्ले निदधाति देवयुम्।।

卐 न ता नशन्ति[1]❋ 卐 न ता अर्वा[2]❋।। 69।।

❀ 卐 गावो भगो गाव इन्द्रो मे अच्छात्। गाव स्सोमस्य प्रथमस्य भक्षः। इमा या गाव स्स जनास इन्द्रः। इच्छामीद्धृदा मनसा चिदिन्द्रम्।।

卐 यूयङ्गावो मेदयथा कृशञ्चित्। अश्लीलञ्चि त्कृणुथा सुप्रतीकम्। भद्र ङ्गृह ङ्कृणुथ भद्रवाचः। बृहद्वो वय उच्यते सभासु।।

卐 प्रजावती स्सूयवस९ रिशन्तीः। शुद्धा अप स्सुप्रपाणे पिबन्तीः। मा वस्स्तेन ईशत माऽघश९सः। परि वो हेती रुद्रस्य वृञ्ज्यात्।।

卐 उपेद मुपपर्चनम्। आसु गोषूप पृच्यताम्। उपर्षभस्य रेतसि। उपेन्द्र तव वीर्ये।। 70।।

(चरामि कनीयोऽन्या नर्पिता पदानि यज्वसु हवामहे विष्ठा लोका स्सुवीर मर्वा पिबन्ती ष्षड्व। 8।)

**वै।का। 3सूक्तमन्त्राः 9(एकोऽनुवाकः 1)**

❀ 卐 ता सूर्याचन्द्रमसा विश्वभृत्तमा महत्। तेजो वसुम द्राजतो दिवि। सामाऽऽत्माना चरत स्सामचारिणा। ययो र्व्रत न्न ममे जातु देवयोः।।

卐 उभा वन्तौ परि यात अम्र्या। दिवो न रश्मी९ स्तनुतो व्यर्णवे। उभा भुवन्ती भुवना कविक्रतू। सूर्या न चन्द्रा चरतो हतामती।।

卐 पती द्युमद्विश्वविदा उभा दिवः। सूर्या उभा चन्द्रमसा विचक्षणा।। 71।। ❀ विश्ववारा वरिवोभा वरेण्या। ता नोऽवतं मतिमन्ता महिव्रता।।

1

2

卐 विश्ववपरी प्रतरणा तरन्ता। सुवर्विदा दृशये भूरिरश्मी। सूर्या हि चन्द्रा वसु त्वेष दर्शता। मनस्विनो भानु चरतोऽनु सन्दिवम्।।

卐 अस्य श्रवो नद्य स्सप्त बिभ्रति। द्यावा क्षामा पृथिवी दर्शतँ वपुः। अस्मे सूर्याचन्द्रमसाऽभिचक्षे। श्रद्धेक मिन्द्र चरतो विचर्तुरम्।। 72।।

❀ 卐 पूर्वापर ञ्चरतो माययैतौ। शिशू क्रीडन्तौ परि यातो अध्वरम्। विश्वान्यन्यो भुवनाऽभिचष्टे। ऋतू नन्यो विदध ज्जायते पुनः।।

卐 हिरण्यवर्णा श्शुचयः पावका[1]❃ 卐 यासाँ राजा[2]❃। 卐 यासा न्देवा[3]❃ 卐 शिवेन मा चक्षुषा पश्यत[4]❃। 卐 आपो भद्रा[5]❃ 卐 आदि त्पश्यामि❃[6]।

卐 नासदासी न्नो सदासी त्तदानीम्। नाऽऽसीद्रजो नो व्योमा परो यत्। कि मावरीवः कुह कस्य शर्मन्न्।। 73।। ❀ अम्भः किमासी द्गहनङ्गभीरम्।।

卐 न मृत्यु रमृत न्तर्हि न। रात्रिया अह्न आसी त्प्रकेतः। आनी दवातँ स्वधया तदेकम्। तस्मा द्धान्यन्न परः किञ्चनाऽऽस।।

卐 तम आसी त्तमसा गूढ मग्रे प्रकेतम्। सलिलँ सर्वमा इदम्। तुच्छेनाभ्वपिहितँ यदाऽऽसीत्। तमस स्तन्महिनाऽजाय तैकम्।।

卐 काम स्तदग्रे समवर्तताधि।। 74।। ❀ मनसो रेतः प्रथमँ यदाऽऽसीत्। सतो बन्धु मसति निरविन्दन्न्। हृदि प्रतीष्या कवयो मनीषा।।

卐 तिरश्चीनो विततो रश्मि रेषाम्। अध स्विदासी '3' दुपरि स्विदासी '3' त्। रेतोधा आस न्महिमान आसन्न्। स्वधा अवस्ता त्प्रयतिः परस्तात्।।

卐 को अद्धा वेद क इह प्र वोचत्। कुत आजाता कुत इयँ विसृष्टिः। अर्वा ग्देवा अस्य विसर्जनाय।। 75।। ❀ अथा को वेद यत आ बभूव।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

---

1

2

3

4

5

6

卐 इयँ विसृष्टि र्यत आबभूव। यदि वा दधे यदि वा न। यो अस्याध्यक्षः परमे व्योमन्न्। सो अङ्ग वेद यदि वा न वेद।।

卐 किꣳ स्वि द्वन ङ्क उ स वृक्ष आसीत्। यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तत्। यदध्यतिष्ठ द्भुवनानि धारयन्न्।।

卐 ब्रह्म वनं ब्रह्म स वृक्ष आसीत्।। 76।। ❀ यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा वि ब्रवीमि वः। ब्रह्माऽध्यतिष्ठ द्भुवनानि धारयन्न्।।

卐 प्रात रग्निं प्रातरिन्द्रꣳ हवामहे। प्रात र्मित्रावरुणा प्रात रश्विना। प्रात र्भगं पूषणं ब्रह्मणस्पतिम्। प्रातस्सोम मुत रुद्रꣳ हुवेम।।

卐 प्रातर्जितं भग मुग्रꣳ हुवेम। वयं पुत्र मदिते र्यो विधर्ता। आध्र श्चिद्यं मन्यमान स्तुरश्चित्।। 77।। ❀ राजा चिद्यं भगं भक्षीत्याह।।

卐 भग प्रणेत र्भग सत्यराधः। भगेमा न्धिय मुदवा ददन्नः। भग प्रणो जनय गोभि रश्वैः। भग प्र नृभि र्नृवन्त स्स्याम।।

卐 उतेदानीं भगवन्त स्स्याम। उत प्र पित्व उत मध्ये अह्नाम्। उतोदिता मघव'2'न्थ्सूर्यस्य। वय न्देवानाꣳ सुमतौ स्याम।।

卐 भग एव भगवाꣳ अस्तु देवाः।। 78।। ❀ तेन वयं भगवन्त स्स्याम। तन्त्वा भग सर्व इज्जोहवीमि। स नो भग पुरएता भवेह।।

卐 समध्वरायोषसो नमन्त। दधिक्रावेव शुचये पदाय। अर्वाचीनँ वसुविदं भगन्नः। रथ मिवाश्वा वाजिन आ वहन्तु।।

卐 अश्वावती र्गोमती र्न उषासः। वीरवती स्सद मुच्छन्तु भद्राः। घृत न्दुहाना विश्वतः प्रपीनाः। यूयं पात स्वस्तिभि स्सदा नः।। 79।। (विचक्षणा विचर्तुरꣳ शर्म न्नधि विसर्जनाय ब्रह्म वनं ब्रह्म स वृक्ष आसी त्तुरश्चि द्देवाः प्रपीना एकञ्च। 9।)

(पीवोन्ना न्ते शुक्रास स्सोमो धेनु मिन्द्र स्तरस्वा न्छुचि मा देवो यातु सूर्यो देवी मह मस्मि ता सूर्याचन्द्रमसा नव। 9। पीवोन्ना मग्ने त्वं पारयानाधृष्य श्शुचिन्नु विश्रयमाणो दिवो रुक्मोऽन्नं प्राण मन्न न्ता सूर्याचन्द्रमसा नवसप्ततिः। 79। पीवोन्नाँ यूयं पात स्वस्तिभि स्सदा नः।)

## ॐ तृतीयाष्टकम्

## ॐ तृतीयाष्टके प्रथमः प्रपाठकः

### वै।का। 1नक्षत्रेष्टि मन्त्राः 4(त्रयोऽनुवाकाः 3)

❀ 卐 अग्निर्नः पातु कृत्तिकाः। नक्षत्र न्देव मिन्द्रियम्। इदमासाँ विचक्षणम्। हवि रास ञ्जुहोतन।।
卐 यस्य भान्ति रश्मयो यस्य केतवः। यस्येमा विश्वा भुवनानि सर्वा। स कृत्तिकाभि रभि सँवसानः। अग्नि र्नो देव स्सुविते दधातु।।
卐 प्रजापते रोहिणी वेतु पत्नी। विश्वरूपा बृहती चित्रभानुः।। 1।। ❀ सा नो यज्ञस्य सुविते दधातु। यथा जीवेम शरद स्सवीराः।।
卐 रोहिणी देव्युदगा त्पुरस्तात्। विश्वा रूपाणि प्रतिमोदमाना। प्रजापतिꣳ हविषा वर्धयन्ती। प्रिया देवाना मुप यातु यज्ञम्।।
卐 सोमो राजा मृगशीर्षेण आगन्न्। शिव न्नक्षत्रं प्रियमस्य धाम। आप्यायमानो बहुधा जनेषु। रेतः प्रजाँ यजमाने दधातु।। 2।।
❀ 卐 यत्ते नक्षत्रं मृगशीर्षमस्ति। प्रियꣳ राज न्प्रियतमं प्रियाणाम्। तस्मै ते सोम हविषा विधेम। शन्न एधि द्विपदे शञ्चतुष्पदे।।
卐 आर्द्रया रुद्रः प्रथमान एति। श्रेष्ठो देवानां पति रघ्नियानाम्। नक्षत्र मस्य हविषा विधेम। मा नः प्रजाꣳ रीरिष न्मोत वीरान्।।
卐 हेती रुद्रस्य परि णोवृणुक्तु। आर्द्रा नक्षत्त्र ञ्जुषताꣳ हविर्नः। 3।। ❀ प्रमुञ्चमानौ दुरितानि विश्वा। अपाघशꣳस न्नुदता मरातिम्।।
卐 पुनर्नो देव्यदिति स्स्पृणोतु। पुनर्वसू नः पुनरेताँ यज्ञम्। पुनर्नो देवा अभि यन्तु सर्वे। पुनः पुनर्वो हविषा यजामः।।
卐 एवा न देव्यदिति रनर्वा। विश्वस्य भर्त्री जगतः प्रतिष्ठा। पुनर्वसू हविषा वर्धयन्ती। प्रिय न्देवाना मप्येतु पाथः। 4।।
❀ 卐 बृहस्पतिः प्रथम ञ्जायमानः। तिष्य न्नक्षत्र मभि सं बभूव। श्रेष्ठो देवानां पृतनासु जिष्णुः। दिशोऽनु सर्वा अभयन्नो अस्तु।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

卐 तिष्य॰ पुरस्ता दुत मध्यतो नः। बृहस्पतिर्न॰ परिपातु पश्चात्। बाधेता न्द्वेषो अभय ङ्कृणुताम्। सुवीर्यस्य पतयस्स्याम।।

卐 इद९ सर्पेभ्यो हविरस्तु जुष्टम्। आश्रेषा येषा मनु यन्ति चेतः। 5।। ❀ ये अन्तरिक्षं पृथिवी क्षियन्ति। ते न स्सर्पासो हव मा गमिष्ठाः।।

卐 ये रोचने सूर्यस्यापि सर्पाः। ये दिव न्देवी मनु सञ्चरन्ति। येषा माश्रेषा अनुयन्ति कामम्। तेभ्य स्सर्पेभ्यो मधुमज्जुहोमि।।

卐 उपहूता॰ पितरो ये मघासु। मनोजवस स्सुकृत स्सुकृत्याः। ते नो नक्षत्रे हव मा गमिष्ठाः। स्वधाभि र्यज्ञं प्रयत ञ्जुषन्ताम्। 6।।

❀ 卐 ये अग्निदग्धा येऽनग्निदग्धाः। येऽमुँ लोकं पितरः~ क्षियन्ति। या९श्च विद्म या९ उ च न प्रविद्म। मघासु यज्ञ९ सुकृत ञ्जुषन्ताम्।।

卐 गवां पति॰ फल्गुनीना मसि त्वम्। तदर्यमन्वरुण मित्र चारु। तन्त्वा वय९ सनितार९ सनीनाम्। जीवा जीवन्त मुप सँ विशेम।।

卐 येनेमा विश्वा भुवनानि सञ्जिता। यस्य देवा अनुसँयन्ति चेतः। 7।। ❀ अर्यमा राजाऽजर स्तुविष्मान्। फल्गुनीना मृषभो रोरवीति।।

卐 श्रेष्ठो देवानां भगवो भगासि। तत्त्वाविदु॰ फल्गुनी स्तस्य वित्तात्। अस्मभ्य ङ्क्षत्र मजर९ सुवीर्यम्। गोम दश्ववदुप सन्नुदेह।।

卐 भगो ह दाता भग इत्प्रदाता। भगो देवी॰ फल्गुनी रा विवेश। भगस्येत्तं प्रसव ङ्गमेम। यत्र देवै स्सधमादं मदेम। 8।।

❀ 卐 आ यातु देव स्सवितोप यातु। हिरण्ययेन सुवृता रथेन। वहन् हस्त९ सुभगँ विद्मनापसम्। प्रयच्छन्तं पपुरि पुण्य मच्छ।।

卐 हस्त॰ प्रयच्छ त्वमृतँ वसीयः। दक्षिणेन प्रति गृभ्णीम एनत्। दातार मद्य सविता विदेय। यो नो हस्ताय प्रसुवाति यज्ञम्।।

卐 त्वष्टा नक्षत्र मभ्येति चित्राम्। सुभ९ससँ युवति९ रोचमानाम्। 9।। ❀ निवेशय न्नमृता न्मर्त्या९श्च। रूपाणि पि९श न्भुवनानि विश्वा।।

卐 तन्न स्त्वष्टा तदु चित्रा विचष्टाम्। तन्नक्षत्रं भूरिदा अस्तु मह्यम्। तन्नः प्रजाँ वीरवतीꣳ सनोतु। गोभिर्नो अश्वै स्समनक्तु यज्ञम्।।

卐 वायु र्नक्षत्र मभ्येति निष्ट्याम्। तिग्मश्रृङ्गो वृषभो रोरुवाणः। समीरय न्भुवना मातरिश्वा। अप द्वेषाꣳसि नुदता मरातीः। 10।।

❀ 卐 तन्नो वायु स्तदु निष्ट्या श्रृणोतु। तन्नक्षत्रं भूरिदा अस्तु मह्यम्। तन्नो देवासो अनु जानन्तु कामम्। यथा तरेम दुरितानि विश्वा।।

卐 दूर मस्म च्छत्रवो यन्तु भीताः। तदिन्द्राग्नी कृणुता न्तद्विशाखे। तन्नो देवा अनु मदन्तु यज्ञम्। पश्चा त्पुरस्ता दभयन्नो अस्तु।।

卐 नक्षत्राणा मधिपत्नी विशाखे। श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ। 11।। ❀ विषूच श्शत्रू नपबाधमानौ। अप क्षुध न्नुदता मरातिम्।।

卐 पूर्णा पश्चा दुत पूर्णा पुरस्तात्। उन्मध्यतः पौर्णमासी जिगाय। तस्या न्देवा अधि सँवसन्तः। उत्तमे नाक इह मादयन्ताम्।।

卐 पृथ्वी सुवर्चा युवति स्सजोषाः। पौर्णमा स्युदगा च्छोभमाना। आप्याययन्ती दुरितानि विश्वा। उरु न्दुहाँ यजमानाय यज्ञम्। 12।। (चित्रभानु र्यजमाने दधातु हवि र्नः पाथ श्वेतो जुषन्ता श्चेतो मदेम रोचमाना मराती र्गोपौ यज्ञम्। 1।)

❀ 卐 ऋध्यास्म हव्यै र्नमसोपसद्य। मित्रन्देवं मित्रधेयन्नो अस्तु। अनूराधान् हविषा वर्धयन्तः। शत ञ्जीवेम शरद स्सवीराः।।

卐 चित्र न्नक्षत्र मुदगा त्पुरस्तात्। अनूराधास इति यद्वदन्ति। तन्मित्र एति पथिभि र्देवयानैः। हिरण्ययै र्विततै रन्तरिक्षे।।

卐 इन्द्रो ज्येष्ठा मनु नक्षत्र मेति। यस्मिन्वृत्रँ वृत्रतूर्ये ततार। 13।। ❀ तस्मिन्वय ममृत न्दुहानाः। क्षुध न्तरेम दुरिति न्दुरिष्टिम्।।

卐 पुरन्दराय वृषभाय धृष्णवे। अषाढाय सहमानाय मीढुषे। इन्द्राय ज्येष्ठा मधुम द्दुहाना। उरु ङ्कृणोतु यजमानाय लोकम्।।

卐 मूलं प्रजाँ वीरवतीँ विदेय। पराच्येतु निरृतिः पराचा। गोभि र्नक्षत्रं पशुभि स्समक्तम्। अह र्भूया द्यजमानाय मह्यम्। 14।।

❀ 卐 अहर्नो अद्य सुविते दधातु। मूल न्नक्षत्रमिति यद्वदन्ति। पराचीँ वाचा निरृत्रति न्नुदामि। शिवं प्रजायै शिवमस्तु मह्यम्।।

卐 या दिव्या आपः पयसा सम्बभूवुः। या अन्तरिक्ष उत पार्थिवी र्याः। यासा मषाढा अनुयन्ति कामम्। ता न आप श्शङ् स्योना भवन्तु।।

卐 याश्च कूप्या याश्च नाद्या स्समुद्रियाः। याश्च वैशन्ती रुत प्रासची र्याः। 15।। ❀ यासा मषाढा मधु भक्षयन्ति। ता न आप श्शङ् स्योना भवन्तु।।

卐 तन्नो विश्वे उप शृण्वन्तु देवाः। तदषाढा अभि सँ यन्तु यज्ञम्। तन्नक्षत्रं प्रथतां पशुभ्यः। कृषि र्वृष्टि र्यजमानाय कल्पताम्।।

卐 शुभ्राः कन्या युवतय स्सुपेशसः। कर्मकृत स्सुकृतो वीर्यावतीः। विश्वा न्देवान् हविषा वर्धयन्तीः। अषाढाः काम मुपयान्तु यज्ञम्। 16।।

❀ 卐 यस्मि न्ब्रह्माऽभ्यजय थ्सर्व मेतत्। अमुञ्च लोक मिद मूच सर्वम्। तन्नो नक्षत्र मभिजि द्विजित्य। श्रिय न्दधा त्वहृणीयमानम्।।

卐 उभौ लोकौ ब्रह्मणा सञ्जितेमौ। तन्नो नक्षत्र मभिजि द्विचष्टाम्। तस्मिन्वयं पृतना स्सञ्जयेम। तन्नो देवासो अनुजानन्तु कामम्।।

卐 शृण्वन्ति श्रोणा ममृतस्य गोपाम्। पुण्यामस्या उपशृणोमि वाचम्। 17।। ❀ मही न्देवीं विष्णुपत्नी मजूर्याम्। प्रतीचीमेनाँ हविषा यजामः।।

卐 त्रेधा विष्णु रुरुगायो विचक्रमे। महीन्दिवं पृथिवी मन्तरिक्षम्। तच्छ्रोणैति श्रव इच्छमाना। पुण्यङ् श्लोकँ यजमानाय कृण्वती।।

卐 अष्टौ देवा वसव स्सोम्यासः। चतस्रो देवी रजरा श्श्रविष्ठाः। ते यज्ञं पान्तु रजसः परस्तात्। सँवथ्सरीण ममृतङ् स्वस्ति। 18।।

❀ 卐 यज्ञन्नः पान्तु वसवः पुरस्तात्। दक्षिणतोऽभियन्तु श्रविष्ठाः। पुण्य न्नक्षत्र मभि सँ विशाम। मा नो अराति रघशँसाऽगन्न्।।

卐 क्षत्रस्य राजा वरुणोऽधिराजः। नक्षत्राणाँ शतभिष ग्वसिष्ठः। तौ देवेभ्यः कृणुतो दीर्घ मायुः। शतँ सहस्रा भेषजानि धत्तः।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore

卐 यज्ञन्नो राजा वरुण उपयातु। तन्नो विश्वे अभि सँ यन्तु देवाः। 19।।❀ तन्नो नक्षत्रꣳ शतभिषग्जुषाणम्। दीर्घमायुः प्रतिर द्द्वेषजानि।।

卐 अज एकपा दुदगा त्पुरस्तात्। विश्वा भूतानि प्रतिमोदमानः। तस्य देवाः प्रसवँ यन्ति सर्वे। प्रोष्ठपदासो अमृतस्य गोपाः।।

卐 विभ्राजमान स्समिधान उग्रः। आऽन्तरिक्ष मरुह द्ग न्द्याम्। तꣳ सूर्य न्देव मज मेकपादम्। प्रोष्ठपदासो अनुयन्ति सर्वे। 20।।

❀ 卐 अहि र्बुध्नियः प्रथमान एति। श्रेष्ठो देवाना मुत मानुषाणाम्। तं ब्राह्मणा स्सोमपा स्सोम्यासः। प्रोष्ठपदासो अभि रक्षन्ति सर्वे।।

卐 चत्वार एक मभि कर्म देवाः। प्रोष्ठपदास इति यान् वदन्ति। ते बुध्नियं परिषद्यङ् स्तुवन्तः। अहिꣳ रक्षन्ति नमसोपसद्य।।

卐 पूषा रेवत्यन्वेति पन्थाम्। पुष्टिपती पशुपा वाजबस्त्यौ। 21।।❀ इमानि हव्या प्रयता जुषाणा। सुगै र्नो यानै रुप याताँ यज्ञम्।।

卐 क्षुद्रा न्पशू न्रक्षतु रेवती नः। गावो नो अश्वाꣳ अन्वेतु पूषा। अन्नꣳ रक्षन्तौ बहुधा विरूपम्। वाजꣳ सनुताँ यजमानाय यज्ञम्।।

卐 तदश्विना वश्वयुजोपयाताम्। शुभङ्गमिष्ठौ सुयमेभि रश्वैः। स्वन्नक्षत्रꣳ हविषा यजन्तौ। मध्वा सम्पृक्तौ यजुषा समक्तौ। 22।।

❀ 卐 यौ देवानां भिषजौ हव्यवाहौ। विश्वस्य दूता वमृतस्य गोपौ। तौ नक्षत्र ञ्जुजुषाणोप याताम्। नमोऽश्विभ्या ङ्कृणुमोऽश्वयुग्भ्याम्।।

卐 अप पाप्मानं भरणी र्भरन्तु। तद्यमो राजा भगवान् विचष्टाम्। लोकस्य राजा महतो महान् हि। सुगन्नः पन्था मभय ङ्कृणोतु।।

卐 यस्मि न्नक्षत्रे यम एति राजा। यस्मिन्नेन मभ्यषिञ्चन्त देवाः। तदस्य चित्रꣳ हविषा यजाम। अपपाप्मानं भरणी र्भरन्तु।।

卐 निवेशनी[1]❀ 卐 यत्ते देवा अदधुः[2]❀। 23।। (ततार मह्यं प्रासची र्या यान्तु यज्ञँ वाचङ् स्वस्ति देवा अनु यन्ति सर्वे वाजबस्त्यौ समक्तौ देवा स्त्रीणि च। 2।)

---

1

2

Sri Ganapati Sachchidananda Avadhoota Datta Peetam • Mysore •

卐 नवोनवो भवति जायमानो[1]❃ 卐 यमादित्या अ॰शु माप्यायमयन्ति[2]❃।

卐 ये विरूपे समनसा सँव्ययन्ती। समान न्तन्तुं परितातनाते। विभू प्रभू अनुभू विश्वतो हुवे। ते नो नक्षत्रे हव मागमेतम्।।

卐 वय न्देवी ब्रह्मणा सँविदानाः। सुरत्नासो देववीति न्दधानाः। अहोरात्रे हविषा वर्धयन्तः। अति पाप्मान मतिमुक्त्या गमेम।।

卐 प्रत्यु वदृश्यायती । 24।। ❀ व्युच्छन्ती दुहिता दिवः। अपो मही वृणुते चक्षुषा।।

卐 तमो ज्योतिष्कृणोति सूनरी। उदुस्त्रिया स्सचते सूर्यः। सचा उद्य न्नक्षत्र मर्चिमत्। तवेदुषो व्युषि सूर्यस्य च।।

卐 सं भक्तेन गमेमहि। तन्नो नक्षत्र मर्चिमत्। भानुम त्तेज उच्चरत्। उप यज्ञ मिहाऽऽ गमत्। 25।।

❀ 卐 प्र नक्षत्त्राय देवाय। इन्द्रायेन्दु॰ हवामहे। स न स्सविता सुवथ्सनिम्। पुष्टिदाँ वीरवत्तमम्।।

卐 उदुत्य[3]❃ 卐 च्चित्रम्❃[4]। 卐 अदितिर्न उरुष्यतु[5]❃ 卐 मही मूषु मातरम्[6]❃।

卐 इदँ विष्णु॰[7]❃ 卐 प्रतद्विष्णुः[8]❃। 卐 अग्नि मूर्धा[9]❃ 卐 भुवः[10]❃। 卐 अनुनोऽद्यानुमति[11]❃ 卐रन्विदनुमते त्वम्[12]❃। 卐 हव्यवाह॰[13]❃ 卐 स्विष्टम्[14]❃। 26।। (आयत्यगम थ्स्विष्टम्। 3।)

## वै।का।नक्षत्रेष्टि ब्राह्मण 4म्, मन्त्राश्च 3(त्रयोऽनुवाकाः 3)

❀ अग्नि र्वा अकामयत। अन्नादो देवाना॰ स्यामिति। स एत मग्नये कृत्तिकाभ्य॰ पुरोडाश मष्टाकपाल न्निरवपत्। ततो वै सोऽन्नादो देवाना मभवत्। अग्निर्वै देवाना मन्नादः। यथा ह वा अग्नि

1

2

3

4

5

6

7

8

9

10

11

12

13

14

देवाना मन्नादः। एवꣳ ह वा एष मनुष्याणां भवति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 अग्नये स्वाहा 卐 कृत्तिकाभ्य स्स्वाहा। 卐 अम्बायै स्वाहा 卐 दुलायै स्वाहा। 卐 नितत्न्यै स्वाहा卐ऽभ्रयन्त्यै स्वाहा। 卐 मेघयन्त्यै स्वाहा 卐 वर्षयन्त्यै स्वाहा। 卐 चुपुणीकायै स्वाहे-ति।। 27।।

❀ प्रजापतिः प्रजा असृजत। ता अस्माथ्सृष्टाः पराची रायन्न्। तासाꣳ रोहिणी मभ्यध्यायत्। सोऽकामयत। उप माऽऽवर्तेत। समेनया गच्छेयेति। स एतं प्रजापतये रोहिण्यै चरु न्निरवपत्। ततो वै सा त मुपाऽऽवर्तत। समेनयाऽगच्छत। उप ह वा एनं प्रिय मा वर्तते। सं प्रियेण गच्छते। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 प्रजापतये स्वाहा 卐 रोहिण्यै स्वाहा। 卐 रोचमानायै स्वाहा 卐 प्रजाभ्य स्स्वाहे-ति।। 28।।

❀ सोमो वा अकामयत। ओषधीनाꣳ राज्य मभि जयेयमिति। स एतꣳ सोमाय मृगशीर्षाय श्यामाक ञ्चरुं पयसि निरवपत्। ततो वै स ओषधीनाꣳ राज्य मभ्यजयत्। समानानाꣳ ह वै राज्य मभि जयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 सोमाय स्वाहा 卐 मृगशीर्षाय स्वाहा। 卐 इन्वकाभ्य स्स्वाहौ卐षधीभ्य स्स्वाहा। 卐 राज्याय स्वाहा卐ऽभिजित्यै स्वाहे-ति।। 29।।

❀ रुद्रो वा अकामयत। पशुमान्थ्स्यामिति। स एतꣳ रुद्रायाऽऽर्द्रायै प्रैय्यङ्गव ञ्चरुं पयसि निरवपत्। ततो वै स पशुमानभवत्। पशुमान् ह वै भवति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 रुद्राय स्वाहा卐ऽऽर्द्रायै स्वाहा। 卐 पिन्वमानायै स्वाहा 卐 पशुभ्यस्स्वाहे-ति।। 30।।

❀ ऋक्षा वा इय मलोमकाऽऽसीत्। साऽकामयत। ओषधीभि र्वनस्पतिभिः प्र जायेयेति। सैत मदित्यै पुनर्वसुभ्या ञ्चरु न्निरवपत्। ततो वा इय मोषधीभि र्वनस्पतिभिः प्राजायत। प्र जायते ह वै प्रजया पशुभिः। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 अदित्यै स्वाहा 卐 पुनर्वसुभ्याम्। स्वाहा卐ऽऽभूत्यै स्वाहा 卐 प्रजात्यै स्वाहे-ति।। 31।।

❀ बृहस्पतिर्वा अकामयत। ब्रह्मवर्चसी स्यामिति। स एतं बृहस्पतये तिष्याय नैवार ञ्चरुं पयसि निरवपत्। ततो वै स ब्रह्मवर्चस्यभवत्। ब्रह्मवर्चसी ह वै भवति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।卐 बृहस्पतये स्वाहा 卐 तिष्याय स्वाहा। 卐 ब्रह्मवर्चसाय स्वाहे-ति।। 32।।

❀ देवासुरा स्सँयत्ता आसन्न्। ते देवा स्सर्पेभ्य आश्रेषाभ्य आज्ये करम्भ न्निरवपन्न्। तानेताभि रेव देवताभि रुपानयन्न्। एताभिर् ह वै देवताभि र्द्विषन्तं भ्रातृव्य मुप नयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।卐 सर्पेभ्य स्स्वाहा 卐 ऽऽश्रेषाभ्य स्स्वाहा। 卐 दन्दशूकेभ्य स्स्वाहे-ति।। 33।।

❀ पितरो वा अकामयन्त। पितृलोक ऋद्ध्नुयामेति। त एतं पितृभ्यो मघाभ्यः पुरोडाश९ षट्कपाल न्निरवपन्न्। ततो वै ते पितृलोक आर्ध्नुवन्न्। पितृलोके ह वा ऋद्ध्नोति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 पितृभ्य स्स्वाहा 卐 मघाभ्यः। स्वाहा卐ऽनघाभ्य स्स्वाहा 卐 गदाभ्यः। स्वाहा 卐ऽरुन्धतीभ्य स्स्वाहे-ति।। 34।।

❀ अर्यमा वा अकामयत। पशुमान्थ्स्यामिति। स एत मर्यम्णे फल्गुनीभ्या ञ्चरु न्निरवपत्। ततो वै स पशुमा नभवत्। पशुमान् ह वै भवति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।卐 अर्यम्णे स्वाहा 卐 फल्गुनीभ्या९ स्वाहा। 卐 पशुभ्य स्स्वाहे-ति।। 35।।

❀ भगो वा अकामयत। भगी श्रेष्ठी देवाना९ स्यामिति। स एतं भगाय फल्गुनीभ्या ञ्चरु न्निरवपत्। ततो वै स भगी श्रेष्ठी देवाना मभवत्। भगी ह वै श्रेष्ठी समानानां भवति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 भगाय स्वाहा 卐 फल्गुनीभ्या९ स्वाहा। 卐 श्रैष्ठ्याय स्वाहे-ति।। 36।।

❀ सविता वा अकामयत। श्रन्मे देवा दधीरन्न्। सविता स्यामिति। स एत९ सवित्रे हस्ताय पुरोडाश न्द्वादशकपाल न्निरवप दाशूनाँ व्रीहीणाम्। ततो वै तस्मै श्रद्देवा अदधत। सविताऽभवत्। श्रद्ध वा अस्मै मनुष्या दधते। सविता समानानां भवति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।।

卐 सवित्रे स्वाहा 卐 हस्ताय। स्वाहा 卐 ददते स्वाहा 卐 पृणते। स्वाहा 卐 प्रयच्छते स्वाहा 卐 प्रतिगृभ्णते स्वाहे-ति।। 37।।

❀ त्वष्टा वा अकामयत। चित्रं प्रजाँ विन्देयेति। स एत न्त्वष्ट्रे चित्रायै पुरोडाश मष्टाकपाल न्निरवपत्। ततो वै स चित्रं प्रजा मविन्दत। चित्र९ ह वै प्रजाँ विन्दते। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 त्वष्ट्रे स्वाहा 卐 चित्रायै स्वाहा। 卐 चैत्राय स्वाहा 卐 प्रजायै स्वाहे-ति।। 38।।

❀ वायुर्वा अकायमत। कामचार मेषु लोकेष्वभि जयेय मिति। स एत द्वायवे निष्ठ्यायै गृष्ट्यै दुग्धं पयो निरवपत्। ततो वै स कामचार मेषु लोकेष्वभ्यजयत्। कामचार९ ह वा एषु लोकेष्वभि जयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 वायवे स्वाहा 卐 निष्ठ्यायै स्वाहा। 卐 कामचाराय स्वाहा卐ऽभिजित्यै स्वाहे-ति।। 39।।

❀ इन्द्राग्नी वा अकामयेताम्। श्रैष्ठ्य न्देवाना मभि जयेवेति। तावेत मिन्द्राग्निभ्याँ विशाखाभ्यां पुरोडाश मेकादशकपाल न्निरवपताम्। ततो वै तौ श्रैष्ठ्य न्देवाना मभ्यजयताम्। श्रैष्ठ्य९ ह वै समानाना मभि जयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।卐 इन्द्राग्निभ्या९ स्वाहा 卐 विशाखाभ्या९ स्वाहा। 卐 श्रैष्ठ्याय स्वाहा卐ऽभिजित्यै स्वाहे-ति।। 40।।

❀ अथैत त्पौर्णमास्या आज्य न्निर्वपति। कामो वै पौर्णमासी। काम आज्यम्। कामेनैव काम९ समर्धयति। क्षिप्रमेन९ स काम उपनमति। येन कामेन यजते। सोऽत्र जुहोति।

卐 पौर्णमास्यै स्वाहा 卐 कामाय स्वाहा卐ऽगत्यै स्वाहे-ति।। 41।।

❀ मित्रो वा अकामयत। मित्रधेय मेषु लोकेष्वभि जयेयमिति। स एतं मित्रायानूराधेभ्य श्चरु न्निरवपत्। ततो वै स मित्रधेय मेषु लोकेष्वभ्यजयत्। मित्रधेय९ ह वा एषु लोकेष्वभि जयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 मित्राय स्वाहा卐ऽनूराधेभ्य स्स्वाहा। 卐 मित्रधेयाय स्वाहा卐ऽभिजित्यै स्वाहे-ति।। 42।।

❀ इन्द्रो वा अकामयत। ज्यैष्ठ्य न्देवाना मभि जयेय मिति। स एत मिन्द्राय ज्येष्ठायै पुरोडाश मेकादशकपाल न्निरवप न्महाव्रीहीणाम्। ततो वै स ज्यैष्ठ्य न्देवाना मभ्यजयत्। ज्यैष्ठ्य९ ह वै समानाना मभि जयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 इन्द्राय स्वाहा 卐 ज्येष्ठायै स्वाहा। 卐 ज्यैष्ठ्याय स्वाहा卐ऽभिजित्यै स्वाहे-ति।। 43।।

❀ प्रजापतिर्वा अकामयत। मूलं प्रजाँ विन्देयेति। स एतं प्रजापतये मूलाय चरु न्निरवपत्। ततो वै स मूलं प्रजा मविन्दत। मूल९ ह वै प्रजाँ विन्दते। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 प्रजापतये स्वाहा 卐 मूलाय स्वाहा। 卐 प्रजायै स्वाहे-ति।। 44।।

❀ आपो वा अकामयन्त। समुद्र ङ्काम मभि जयेमेति। ता एत मद्भ्योऽषाढाभ्य श्चरु न्निरवपन्न्। ततो वै ता स्समुद्र ङ्काम मभ्यजयन्न्। समुद्र९ ह वै काम मभि जयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 अद्भ्य स्स्वाहा卐ऽषाढाभ्य स्स्वाहा। 卐 समुद्राय स्वाहा 卐 कामाय स्वाहा। 卐 अभिजित्यै स्वाहे-ति।। 45।।

❀ विश्वे वै देवा अकामयन्त। अनपजय्य ञ्जयेमेति। त एतँ विश्वेभ्यो देवेभ्यो ऽषाढाभ्य श्चरु न्निरवपन्न्। ततो वै तेऽनपजय्य मजयन्न्। अनपजय्य९ ह वै जयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 विश्वेभ्यो देवेभ्य स्स्वाहा卐ऽषाढाभ्य स्स्वाहा। 卐 अनपजय्याय स्वाहा 卐 जित्यै स्वाहे- ति।। 46।।

❀ ब्रह्म वा अकामयत। ब्रह्मलोक मभि जयेय मिति। तदेतं ब्रह्मणेऽभिजिते चरु न्निरवपत्। ततो वै तद्ब्रह्मलोक मभ्यजयत्। ब्रह्मलोक९ ह वा अभि जयति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 ब्रह्मणे स्वाहा卐ऽभिजिते स्वाहा। 卐 ब्रह्मलोकाय स्वाहा卐ऽभिजित्यै स्वाहे-ति।। 47।।

❀ विष्णुर्वा अकामयत। पुण्यङ्ग् श्लोक९ शृण्वीय। न मा पापी कीर्ति रा गच्छेदिति। स एतँ विष्णवे श्रोणायै पुरोडाश न्त्रिकपाल न्निरवपत्। ततो वै स पुण्यङ्ग् श्लोक मशृणुत। नैनं पापी कीर्ति राऽगच्छत्। पुण्य९ ह वै श्लोक९ शृणुते। नैनं पापी कीर्ति रा गच्छति। य एतेन हविषा यजते। य उ चैनदेवँ वेद। सोऽत्र जुहोति।

卐 विष्णवे स्वाहा 卐 श्रोणायै स्वाहा। 卐 श्लोकाय स्वाहा 卐 श्रुताय स्वाहे-ति।। 48।।

ग्राम्या न्पशू न्नियुञ्जन्ति। आरोके ष्वारण्या न्धारयन्ति। पशूनाँ व्यावृत्त्यै। आ ग्राम्या न्पशू न्लभन्ते। प्रारण्या न्थ्सृजन्ति। पाप्मनोऽप हत्यै।। 76।। (अश्वस्य व्यावृत्त्यै त्रीणि च। 19।)

❀ राज्जुदाल मग्निष्ठं मिनोति। भ्रूणहत्याया अपहत्यै। पौतुद्रवा वभितो भवतः। पुण्यस्य गन्धस्यावरुद्ध्यै। भ्रूणहत्या मेवास्मा दपहत्य। पुण्येन गन्धेनोभयतꣳ परि गृह्णाति। षड् बैल्वा भवन्ति। ब्रह्मवर्चस स्यावरुद्ध्यै। षट् खादिराः। तेजसोऽवरुद्ध्यै।। 77।। ❀ षट् पालाशाः। सोमपीथ स्यावरुद्ध्यै। एकविꣳशति स्सं पद्यन्ते। एकविꣳशतिर्वै देवलोकाः। द्वादश मासाꣳ पञ्चर्तवः। त्रय इमे लोकाः। असावादित्य एकविꣳशः। एष सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै। शतं पशवो भवन्ति।। 78।। ❀ शताऽऽयुꣳ पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति। सर्वँ वा अश्वमेध्याप्नोति। अपरिमिता भवन्ति। अपरिमितस्यावरुद्ध्यै। ब्रह्मवादिनो वदन्ति। कस्माथ्सत्यात्। दक्षिणतोऽन्येषां पशूना मवद्यन्ति। उत्तरतोऽश्वस्येति। वारुणो वा अश्वः।। 79।। ❀ एषा वै वरुणस्य दिक्। स्वाया मेवास्य दिश्यव द्यति। यदितरेषां पशूना मवद्यति। शतदेवत्य न्तेनाव रुन्धे। चितेऽग्ना वधि वैतसे कटेऽश्व ञ्चिनोति। अफ्सुयोनि र्वा अश्वः। अफ्सुजो वेतसः। स्व एवैनँ योनौ प्रतिष्ठापयति। पुरस्ता त्प्रत्यञ्च न्तूपर ञ्चिनोति। पश्चा त्प्राचीन ङ्गोमृगम्।। 80।। ❀ प्राणापाना वेवास्मि थ्सम्यञ्चौ दधाति। अश्व न्तूपर ङ्गोमृग मिति सर्वहुत एता न्जुहोति। एषाँ लोकाना मभिजित्यै। आत्मनाऽभि जुहोति। साऽऽत्मान मेवैनꣳ सतनु ङ्करोति। साऽऽत्माऽमुष्मि न्लोके भवति। य एवँ वेद। अथो वसोरेव धारा न्तेनाव रुन्धे। 卐 इलुवर्दाय स्वाहा 卐 बलिवर्दाय स्वाहे- त्याह। सँवथ्सरो वा इलुवर्दः। परिवथ्सरो बलिवर्दः। सँवथ्सरा देव परिवथ्सरा दायु रव रुन्धे। आयु रेवास्मि न्दधाति। तस्मा दश्वमेधयाजी जरसाऽविस्रसाऽमुँ लोक मेति।। 81।। (तेजसोऽवरुद्ध्यै भव न्त्यश्वो गोमृग मिलुवर्द श्चत्वारि च। 20।)

❀ एकविꣳशोऽग्नि र्भवति। एकविꣳश स्स्तोमः। एकविꣳशति र्यूपाः। यथा वा अश्वा वर्षभा वा वृषाण स्सꣳस्फुरेरन्न्। एव मेतथ्स्तोमा स्सꣳस्फुरन्ते। यदेकविꣳशाः। ते यथ्समृच्छेरन्न्। हन्येतास्य यज्ञः। द्वादश एवाग्निस्स्या दित्याहुः। द्वादश स्स्तोमः।। 82।। ❀ एकादश यूपाः। यद्द्वादशोऽग्नि र्भवति। द्वादश मासा स्सँवथ्सरः। सँवथ्सरेणैवास्मा अन्न मव रुन्धे। यद्दश यूपा भवन्ति। दशाक्षरा विराट्। अन्नँ विराट्। विराजैवान्नाद्य मव रुन्धे। य एकादशः। स्तन एवास्यै सः।। 83।। ❀ दुह एवैना न्तेन। तदाहुः। यद्द्वादशोऽग्नि स्स्याद्द्वादश स्स्तोम एकादश यूपाः। यथा स्थूरिणा यायात्। तादृक्तत्।

एकवि॒॰श ए॒वाग्नि स्स्यादि॒त्या॑हुः। ए॒कवि॒॰श स्स्तोमः। एक॑वि॒॰शति॒ र्यूपाः। यथा॑ प्र॒ष्टिभि॒ र्याति॑। ता॒दृगे॒व तत्।। 84।। ❀ यो वा अश्वमे॒धे ति॒स्रः क॒कुभो॑ वेद॑। क॒कुद्ध राज्ञां॑ भवति। ए॒कवि॒॰शो॑ऽग्नि भ॑वति। ए॒कवि॒॰श स्स्तोमः। एक॑वि॒॰शति॒ र्यूपाः। ए॒ता वा अश्वमे॒धे ति॒स्रः क॒कुभः। य ए॒वँ वेद॑। क॒कुद्ध राज्ञां॑ भवति। यो वा अश्वमे॒धे त्रीणि॑ शी॒र्षाणि॒ वेद॑। शिरो॑ ह॒ राज्ञां॑ भवति। ए॒कवि॒॰शो॑ऽग्नि भ॑वति। ए॒कवि॒॰श स्स्तोमः। एक॑वि॒॰शति॒ र्यूपाः। ए॒तानि॒ वा अश्वमे॒धे त्रीणि॑ शी॒र्षाणि॑। य ए॒वँ वेद॑। शिरो॑ ह॒ राज्ञां॑ भवति।। 85।। (द्वा॒द॒शस्तो॒म स्स ए॒व त॒च्छिरो॑ ह॒ राज्ञां॑ भवति॒ षट्च॑। 21।)

❀ दे॒वा वा अश्वमे॒धे पव॑माने। सु॒व॒र्गँ लो॒कन्न प्राजा॑नन्न्। तमश्वः॑ प्राजा॑नात्। यद॑श्वमे॒धेऽश्वे॑न मेध्ये॒नोदञ्चो॑ बहिष्पवमा॒नं॰ सर्प॑न्ति। सु॒व॒र्गस्य॑ लो॒कस्य॒ प्रज्ञात्यै। न वै म॑नु॒ष्य॑ स्सुव॒र्गँ लो॒क मञ्ज॑सा वेद॑। अश्वो॑ वै सु॒व॒र्गँ लो॒क मञ्ज॑सा वेद॑। यदु॑द्गा॒तोद्गा॒येत्। यथा॑ऽक्षेत्र॒ज्ञोऽन्ये॒न प॒था प्र॑तिपा॒दये॑त्। ता॒दृक्तत्।। 86।। ❀ उ॒द्गा॒तार॑ मप॒रुध्य॑। अश्व मु॒द्गी॒थाय वृणीते। यथा॑ क्षेत्र॒ज्ञोऽञ्ज॑सा न॒यति॑। ए॒व मे॒वैन॒ मश्व॒ स्सु॒व॒र्गँ लो॒क मञ्ज॑सा नयति। पुच्छ॒ म॒न्वार॑भन्ते। सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै। ॥ हि-ङ्क॑रोति। सामै॒वाकः। हिङ्क॑रोति। उ॒द्गी॒थ ए॒वास्य॒ सः।। 87।। ❀ व॒ड॒बा॒ उप॑ रुन्धन्ति। मि॒थु॒न॒त्वाय॒ प्रजात्यै। अथो॑ यथो॒प॒गा॒तार॑ उप॒गाय॑न्ति। ता॒दृगे॒व तत्। ॥ उदगासी द॒श्वो मेध्य- इत्या॑ह। प्रा॒जा॒प॒त्यो वा अश्वः। प्र॒जाप॑ति रु॒द्गी॒थः। उ॒द्गी॒थ मे॒वाव॑ रुन्धे। अथो॑ ऋ॒क्साम॒यो रे॒व प्रति॑ तिष्ठति। हिर॑ण्ये॒नोपा॒ऽऽक॑रोति। ज्योति॒र्वै हिर॑ण्यम्। ज्योति॑रे॒व मु॒ख॒तो द॑धाति। यज॑माने च प्र॒जासु॑ च। अथो॑ हिर॑ण्यज्योति रे॒व यज॑मान स्सुव॒र्गँ लो॒क मे॑ति।। 88।। (त॒थ्स उपा॒ऽऽक॑रोति॒ चत्वा॑रि च। 22।)

❀ पुरु॑षो॒ वै य॒ज्ञः। य॒ज्ञः॑ प्र॒जाप॑तिः। यद॑श्वे प॒शू न्नि॑यु॒ञ्जन्ति॑। य॒ज्ञा दे॑व तद्य॒ज्ञं प्रयु॑ङ्क्ते। अश्व॒ न्तू॒प॒र ङ्गोमृ॒गम्। तान॑ग्नि॒ष्ठ आ ल॑भते। से॒ना॒मु॒ख मे॒व त॒थ्सं॰श्य॑ति। तस्मा॑ द्राजमु॒खं भीष्मं॑ भावु॒कम्। आ॒ग्ने॒य ङ्कृ॒ष्णग्री॑वं पु॒रस्ता॑ ल्लला॒टे। पू॒र्वा॒ग्नि मे॒व त॒ङ्कुरु॑ते।। 89।। ❀ तस्मा॑ त्पू॒र्वा॒ग्निं पु॒रस्ता॒थ्स्था॒पय॑न्ति। पौ॒ष्ण म॒न्व॒ञ्चम्। अन्नँ॑ वै पू॒षा। तस्मा॑ त्पू॒र्वा॒ग्ना वा॑हा॒र्य मा ह॑रन्ति। ऐ॒न्द्रा॒पौ॒ष्ण मु॒परि॑ष्टात्। ऐ॒न्द्रो वै रा॒ज॒न्यो॑ऽन्नं पू॒षा। अ॒न्ना॒द्ये॒नै॒वैन॒ मु॒भ॒य॒तः॑ परि॑ गृह्णाति। तस्मा॑ द्राज॒न्यो॑ऽन्ना॒दो भा॑वु॒कः। आ॒ग्ने॒यौ कृ॒ष्णग्री॑वौ बा॒हु॒वोः। बा॒हु॒वो रे॒व वी॒र्य॑ न्धत्ते।। 90।। ❀ तस्मा॑ द्राज॒न्यो॑ बाहु॒ब॒ली भा॑वु॒कः। त्वा॒ष्ट्रौ लो॒म॒श॒स॒क्थौ स॒क्थ्योः। स॒क्थ्योरे॒व वी॒र्य॑ न्धत्ते। तस्मा॑ द्राज॒न्य॑ ऊरु॒ब॒ली भा॑वु॒कः। शि॒ति॒पृ॒ष्ठौ बा॒र्॒ह॒स्प॒त्यौ पृ॒ष्ठे। ब्र॒ह्म॒व॒र्च॒स मे॒वोप॒रिष्टा॒ द्ध॑त्ते। अथो॑ क॒व॒चे ए॒वैते॑ अ॒भि॒तः॑ प॒र्यू॑हते। तस्मा॑ द्राज॒न्य॒ स्सन्न॑द्धो वी॒र्य॑ ङ्करोति। धा॒त्रे पृ॑षो॒द॒र म॒धस्ता॑त्। प्र॒ति॒ष्ठा मे॒वैता॑ ङ्कुरुते। अथो॑ इ॒यँ वै धा॒ता। अ॒स्या मे॒व

प्रति तिष्ठति। सौर्यं बलक्षं पुच्छे। उथ्सेध मेव तङ्कुरुते। तस्मा दुथ्सेधं भये प्रजा अभि सꣳश्रयन्ति।। 91।। (कुरुते धत्ते कुरुते पञ्च च। 23।)

(साङ्ग्रहण्या चतुष्टय्यो यो वै यः पितु श्चत्वारो यथा निक्तं प्रजापतये त्वा यथा प्रोक्षितं विभूराह प्रजापति रकामयताश्वमेधेन प्रजापतिर्न किञ्चन सावित्र माब्रह्म न्प्रजापति र्देवेभ्यः प्रजापती रक्षाꣳसि प्रजापति मीप्सति विभू रश्वनामा न्यम्भाꣳ स्येकयूपो राज्जुदाल मेकविꣳशो देवाः पुरुष स्त्रयोविꣳशतिः। 23। साङ्ग्रहण्या तस्मा दश्वमेधयाजी यत्परिमिता यद्यज्ञमुखे यो दीक्षा न्देवा नेव त्रय इमे सिताय प्राणापाना वेवास्मि न्तस्मा द्राजन्य एकनवतिः। 91। साङ्ग्रहण्या सꣳश्रयन्ति।।)

## तृतीयकाण्डे नवमः प्रपाठकः

### वै।का। 23अश्वमेध ब्राह्मणम् 13(त्रयो विंशत्यनुवाका: 23)

❀ प्रजापति रश्वमेध मसृजत। सोऽस्माथ्सृष्टोऽपाक्रामत्। तमष्टादशिभि रनु प्रायुङ्क्त। तमाप्नोत्। तमाप्त्वाऽष्टादशिभि रवारुन्ध। यदष्टादशिन आलभ्यन्ते। यज्ञमेव तै राप्त्वा यजमानोऽव रुन्धे। सँवथ्सरस्य वा एषा प्रतिमा। यदष्टादशिनः। द्वादश मासाः पञ्चर्तवः।। 1।। ❀ सँवथ्सरोऽष्टादशः। यदष्टादशिन आलभ्यन्ते। सँवथ्सर मेव तैराप्त्वा यजमानोऽव रुन्धे। अग्निष्ठेऽन्या न्पशू नुपाऽऽकरोति। इतरेषु यूपेष्वष्टादशिनो ऽजामित्वाय। नवनवाऽऽ लभ्यन्ते सवीर्यत्वाय। यदारण्यै स्सꣳस्थापयेत्। व्यव स्येतां पितापुत्रौ। व्यध्वानः क्रामेयुः। विदूर ङ्ग्रामयो र्ग्रामान्तौ स्याताम्।। 2।। ❀ ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिनी स्तस्करा अरण्येष्वा जायेरन्न्। तदाहुः। अपशवो वा एते। यदारण्याः। यदारण्यै स्सꣳस्थापयेत्। क्षिप्रे यजमान मरण्यं मृतꣳ हरेयुः। अरण्याऽऽयतना ह्यारण्याः पशव इति। यत्पशू न्नाऽऽलभेत। अनवरुद्धा अस्य पशव स्स्युः। यत्पर्यग्निकृता नुथ्सृजेत्।। 3।। ❀ यज्ञवेशस ङ्कुर्यात्। यत्पशू नालभते। तेनैव पशू नव रुन्धे। यत्पर्यग्निकृता नुथ्सृज त्ययज्ञवेशसाय। अवरुद्धा अस्य पशवो भवन्ति। न यज्ञवेशसं भवति। न यजमान मरण्यं मृतꣳ हरन्ति। ग्राम्यै स्सꣳस्थापयति। एते वै पशवः क्षेमो नाम। सं पिता पुत्रा वव स्यतः। समध्वानः क्रामन्ति। समन्तिक ङ्ग्रामयो र्ग्रामान्तौ भवतः। नर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिनी स्तस्करा अरण्येष्वा जायन्ते।। 4।। (ऋतव स्स्याता मुथ्सृजेथ्स्यत स्त्रीणि च। 1।)

प्रजापति रकामयतोभौ लोकाववरुन्धीयेति। स एता नुभया न्पशू नपश्यत्। ग्राम्याꣳश्चा ऽऽरण्याꣳश्च। ताना ऽलभत। तैर्वै स उभौ लोका ववारुन्ध। ग्राम्यैरेव पशुभि रिमँ लोक मवारुन्ध। आरण्यै रमुम्। यद्ग्राम्या न्पशू नालभते। इम मेव तैर्लोक मव रुन्धे। यदारण्यान्।। 5।। अमुन्तैः। अनवरुद्धो वा एतस्य सँवथ्सर इत्याहुः। य इतइत श्चातुर्मास्यानि सँवथ्सरं प्रयुङ्क्त इति। एतावान् वै सँवथ्सरः। यच्चातुर्मास्यानि। यदेते चातुर्मास्याꣳ पशव आलभ्यन्ते। प्रत्यक्ष मेव तैस्सँवथ्सरँ यजमानोऽव रुन्धे। वि वा एष प्रजया पशुभिर् ऋध्यते। य स्सँवथ्सरं प्रयुङ्क्ते। सँवथ्सर स्सुवर्गो लोकः।। 6।। सुवर्ग न्तु लोक न्नाप राध्नोति। प्रजा वै पशव एकादशिनी। यदेत ऐकादशिनाꣳ पशव आलभ्यन्ते। साक्षादेव प्रजां पशून् यजमानोऽव रुन्धे। प्रजापति र्विराज मसृजत। सा सृष्टाऽश्वमेधं प्राविशत्। तान्दशिभि रनु प्रायुङ्क्त। तामाप्नोत्। तामाप्त्वा दशिभि रवारुन्ध। यद्दशिन आलभ्यन्ते।। 7।। विराज मेव तैराप्त्वा यजमानोऽव रुन्धे। एकादश दशत आ लभ्यन्ते। एकादशाक्षरा त्रिष्टुप्। त्रैष्टुभाꣳ पशवः। पशू नेवाव रुन्धे। वैश्वदेवो वा अश्वः। नानादेवत्याꣳ पशवो भवन्ति। अश्वस्य सर्वत्वाय। नानारूपा भवन्ति। तस्मा न्नानारूपाꣳ पशवः। बहुरूपा भवन्ति। तस्मा द्बहुरूपाꣳ पशव स्समृद्ध्यै।। 8।। (आरण्या न्लोको दशिन आलभ्यन्ते नानारूपाꣳ पशवो द्वे च। 2।)

अस्मै वै लोकाय ग्राम्याꣳ पशव आ लभ्यन्ते। अमुष्मा आरण्याः। यद्ग्राम्या न्पशू नालभते। इम मेव तैर्लोक मव रुन्धे। यदारण्यान्। अमुन्तैः। उभया न्पशूना लभते। ग्राम्याꣳ श्चा ऽऽरण्याꣳश्च। उभयो र्लोकयो रवरुद्ध्यै। उभया न्पशूना लभते।। 9।। ग्राम्याꣳ श्चा ऽऽरण्याꣳश्च। उभय स्यान्नाद्य स्यावरुद्ध्यै। उभया न्पशूना लभते। ग्राम्याꣳ श्चा ऽऽरण्याꣳश्च। उभयेषां पशूना मवरुद्ध्यै। त्रयस्त्रयो भवन्ति। त्रय इमे लोकाः। एषाँ लोकाना माप्त्यै। ब्रह्मवादिनो वदन्ति। कस्माथ्सत्यात्।। 10।। अस्मि न्लोके बहवꣳ कामा इति। यथ्समानीभ्यो देवताभ्योऽन्येऽन्ये पशव आलभ्यन्ते। अस्मिन्नेव तल्लोके कामा न्दधाति। तस्मा दस्मि न्लोके बहवꣳ कामाः। त्रयाणान्त्रयाणाꣳ सह वपा जुहोति। त्र्यावृतो वै देवाः। त्र्यावृत इमे लोकाः। एषाँ लोकाना माप्त्यै। एषाँ लोकानां क्लृप्त्यै। पर्यग्निकृता ना ऽऽरण्या नुथ्सृज न्त्यहिꣳसायै।। 11।। (अवरुध्या उभया न्पशूना लभते सत्या दहिꣳसायै। 3।)

युञ्जन्ति ब्रध्न मित्याह। असौ वा आदित्यो ब्रध्नः। आदित्य मेवास्मै युनक्ति। अरुष मित्याह। अग्निर्वा अरुषः। अग्नि मेवास्मै युनक्ति। चरन्त मित्याह। वायुर्वै चरन्न्। वायु मेवास्मै युनक्ति। परि तस्थुष इत्याह।। 12।। इमे वै लोकाꣳ परि तस्थुषः। इमा नेवास्मै लोकान् युनक्ति। रोचन्ते रोचना

दिवीत्याह। नक्षत्राणि वै रोचना दिवि। नक्षत्राण्येवास्मै रोचयति। युञ्जन्त्यस्य काम्येत्याह। कामा नेवास्मै युनक्ति। हरी विपक्षसेत्याह। इमे वै हरी विपक्षसा। इमे एवास्मै युनक्ति।। 13।। ❀ शोणा धृष्णू नृवाहसेत्याह। अहोरात्रे वै नृवाहसा। अहोरात्रे एवास्मै युनक्ति। एता एवास्मै देवता युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै। केतु ङ्कृण्व न्नकेतव इति ध्वजं प्रति मुञ्चति। यश एवैनꣳ राज्ञा ङ्गमयति। जीमूतस्येव भवति प्रतीक मित्याह। यथायजु रेवैतत्। ये ते पन्थान स्सवितः पूर्व्यास इत्यध्वर्यु र्यजमानँ वाचय त्यभिजित्यै।। 14।। ❀ परा वा एतस्य यज्ञ एति। यस्य पशु रुपाऽऽकृतोऽन्यत्र वेद्या एति। एतꣳ स्तोत रेतेन पथा पुन रश्व मावर्तयासि न इत्याह। वायुर्वै स्तोता। वायु मेवास्य परस्ता द्दधा त्यावृत्त्यै। यथा वै हविषो गृहीतस्य स्कन्दति। एवँ वा एत दश्वस्य स्कन्दति। यदस्योपाऽऽकृतस्य लोमानि शीयन्ते। यद्वालेषु काचा नावयन्ति। लोमा न्येवास्य तथ्सं भरन्ति।। 15।। ❀ भू र्भुव स्सुवरिति प्राजापत्याभि रावयन्ति। प्राजापत्यो वा अश्वः। स्वयैवैन न्देवतया समर्धयन्ति। भूरिति महिषी। भुव इति वावाता। सुव रिति परिवृक्ती। एषाँ लोकाना मभिजित्यै। हिरण्ययाः काचा भवन्ति। ज्योतिर्वै हिरण्यम्। राष्ट्र मश्वमेधः।। 16।। ❀ ज्योति श्चैवास्मै राष्ट्रञ्च समीची दधाति। सहस्रं भवन्ति। सहस्रसम्मित स्सुवर्गो लोकः। सुवर्गस्य लोकस्याभिजित्यै। अप वा एतस्मा त्तेज इन्द्रियं पशव श्श्रीः क्रामन्ति। योऽश्वमेधेन यजते। वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसेति महिष्यभ्यनक्ति। तेजो वा आज्यम्। तेजो गायत्री। तेजसैवास्मै तेजोऽव रुन्धे।। 17।। ❀ रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसेति वावाता। तेजो वा आज्यम्। इन्द्रिय न्त्रिष्टुप्। तेजसैवास्मा इन्द्रिय मव रुन्धे। आदित्या स्त्वाऽञ्जन्तु जागतेन छन्दसेति परिवृक्ती। तेजो वा आज्यम्। पशवो जगती। तेजसैवास्मै पशू नव रुन्धे। पत्नयोऽभ्यञ्जन्ति। श्रिया वा एत द्रूपम्।। 18।। ❀ यत्पत्नयः। श्रिय मेवास्मि न्तद्दधति। नास्मा त्तेज इन्द्रियं पशव श्श्रीरप क्रामन्ति। लाजी '3' ञ्छाची '3' न् यशो ममाँ '4' इत्यतिरिक्त मन्न मश्वायोपाऽऽहरन्ति। प्रजा मेवान्नादी ङ्कुर्वते। एत द्देवा अन्न मत्तैत दन्न मद्धि प्रजापत इत्याह। प्रजाया मेवान्नाद्य न्दधते। यदि नावजिघ्रेत्। अग्निः पशु रासी दित्यव घ्रापयेत्। अव हैव जिघ्रति। आऽक्रान् वाजी क्रमै रत्यक्रमी द्वाजी द्यौस्ते पृष्ठं पृथिवी सधस्थ मित्यश्व मनु मन्त्रयते। एषाँ लोकाना मभिजित्यै। समिद्धो अञ्ज न्कृदरं मतीना मित्यश्वस्याऽऽप्रियो भवन्ति सरूपत्वाय।। 19।। (परि तस्थुष इत्याहेमे एवास्मै युनक्त्यभिजित्यै भरन्त्यश्वमेधो रुन्धे रूप ञ्जिघ्रति त्रीणि च। 4।)

तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते। योऽश्वमेधेन यजते। होता च ब्रह्मा च ब्रह्मोद्यँ वदतः। तेजसा चैवैनं ब्रह्मवर्चसेन च समर्धयतः। दक्षिणतो ब्रह्मा भवति। दक्षिणतआयतनो वै ब्रह्मा। बार्हस्पत्यो वै ब्रह्मा। ब्रह्मवर्चस मेवास्य दक्षिणतो दधाति। तस्मा द्दक्षिणोऽर्धो ब्रह्मवर्चसितरः। उत्तरतो होता भवति।। 20।। उत्तरतआयतनो वै होता। आग्नेयो वै होता। तेजो वा अग्निः। तेज एवास्योत्तरतो दधाति। तस्मा दुत्तरोऽर्ध स्तेजस्वितरः। यूप मभितो वदतः। यजमानदेवत्यो वै यूपः। यजमान मेव तेजसा च ब्रह्मवर्चसेन च समर्धयतः। किङ्ग् स्विदासी त्पूर्वचित्ति रित्याह। द्यौर्वै वृष्टिः पूर्वचित्तिः।। 21।। दिव मेव वृष्टि मव रुन्धे। किङ्ग् स्विदासी द्बृह द्वय इत्याह। अश्वो वै बृह द्वयः। अश्व मेवाव रुन्धे। किङ्ग् स्विदासी त्पिशङ्गिलेत्याह। रात्रिर्वै पिशङ्गिला। रात्रि मेवाव रुन्धे। किङ्ग् स्विदासी त्पिलिप्पिलेत्याह। श्रीर्वै पिलिप्पिला। अन्नाद्य मेवाव रुन्धे।। 22।। कस्स्वि देकाकी चरतीत्याह। असौ वा आदित्य एकाकी चरति। तेज एवाव रुन्धे। क उ स्विज्जायते पुन रित्याह। चन्द्रमा वै जायते पुनः। आयु रेवाव रुन्धे। किङ्ग्स्विद्धिमस्य भेषज मित्याह। अग्निर्वै हिमस्य भेषजम्। ब्रह्मवर्चस मेवाव रुन्धे। किङ्ग् स्वि दावपनं महदित्याह।। 23।। अयँ वै लोक आवपनं महत्। अस्मिन्नेव लोके प्रति तिष्ठति। पृच्छामि त्वा पर मन्तं पृथिव्या इत्याह। वेदिर्वै परोऽन्तः पृथिव्याः। वेदि मेवाव रुन्धे। पृच्छामि त्वा भुवनस्य नाभि मित्याह। यज्ञो वै भुवनस्य नाभिः। यज्ञ मेवाव रुन्धे। पृच्छामि त्वा वृष्णो अश्वस्य रेत इत्याह। सोमो वै वृष्णो अश्वस्य रेतः। सोमपीथ मेवाव रुन्धे। पृच्छामि वाचः परमँ व्योमेत्याह। ब्रह्म वै वाचः परमँ व्योम। ब्रह्मवर्चस मेवाव रुन्धे।। 24।। (होता भवति वै वृष्टिः पूर्वचित्ति रन्नाद्य मेवाव रुन्धे मह दित्याह सोमो वै वृष्णो अश्वस्य रेत श्चत्वारि च। 5।)

अप वा एतस्मा त्प्राणाः क्रामन्ति। योऽश्वमेधेन यजते। प्राणाय स्वाहा व्यानाय स्वाहेति सँ'2'ज्ञप्यमान आहुती र्जुहोति। प्राणा नेवास्मि न्दधाति। नास्मा त्प्राणा अप क्रामन्ति। अवन्ती स्थावन्ती स्त्वावन्तु। प्रियन्त्वा प्रियाणाम्। वर्षिष्ठ माप्यानाम्। निधीनान्त्वा निधिपतिꣳ हवामहे वसो ममेत्याह। अपैवास्मै तद्नुवते।। 25।। अथो धुवन्त्येवैनम्। अथो न्येवास्मै ह्नुवते। त्रिः परि यन्ति। त्रय इमे लोकाः। एभ्य एवैनँ लोकेभ्यो धुवते। त्रिः पुनः परि यन्ति। षट्थ्सं पद्यन्ते। षड्वा ऋतवः। ऋतुभि रेवैन न्धुवते। अप वा एतेभ्यः प्राणाः क्रामन्ति।। 26।। ये यज्ञे धुवन न्तन्वते। नवकृत्वः परि यन्ति। नव वै पुरुषे प्राणाः। प्राणा नेवाऽऽत्म न्दधते। नैभ्यः प्राणा अप क्रामन्ति। अम्बे अम्बाल्यम्बिक इति पत्नी मुदानयति। अह्वतैवैनाम्। सुभगे काम्पीलवासिनीत्याह। तप एवैना मुप

नयति। सुवर्गे लोके सं प्रोर्ण्वाथा मित्याह।। 27।।❀ सुवर्ग मेवैनाँ लोक ङ्गमयति। आह मजानि गर्भध मा त्वमजासि गर्भध मित्याह। प्रजा वै पशवो गर्भः। प्रजा मेव पशू नात्म न्धत्ते। देवा वा अश्वमेधे पवमाने। सुवर्गँ लोकन्न प्राजानन्न्। तमश्वः प्राजानात्। यथ्सूचीभि रसिपथा न्कल्पयन्ति। सुवर्गस्य लोकस्य प्रज्ञात्यै। गायत्री त्रिष्टु ब्जगतीत्याह।। 28।।❀ यथायजु रेवैतत्। त्रय्य स्सूच्यो भवन्ति। अयस्मय्यो रजता हरिण्यः। अस्य वै लोकस्य रूप मयस्मय्यः। अन्तरिक्षस्य रजताः। दिवो हरिण्यः। दिशो वा अयस्मय्यः। अवान्तरदिशा रजताः। ऊर्ध्वा हरिण्यः। दिश एवास्मै कल्पयति। कस्त्वा छ्यति कस्त्वा वि शास्तीत्या.हाहिꣳसायै।। 29।। (ह्रुवते क्राम न्त्यूर्ण्वाथा मित्याह जगतीत्याह कल्पयत्येकञ्च। 6।)

❀ अप वा एतस्माच्छ्री राष्ट्र ङ्क्रामति। योऽश्वमेधेन यजते। ऊर्ध्वा मेना मुच्छ्रयता दित्याह। श्रीर्वै राष्ट्र मश्वमेधः। श्रिय मेवास्मै राष्ट्र मूर्ध्व मुच्छ्रयति। वेणुभार ङ्गिराविवेत्याह। राष्ट्रँ वै भारः। राष्ट्र मेवास्मै पर्यूहति। अथास्या मध्य मेधता मित्याह। श्रीर्वै राष्ट्रस्य मध्यम्।। 30।।❀ श्रिय मेवाव रुन्धे। शीते वाते पुन न्निवेत्याह। क्षेमो वै राष्ट्रस्य शीतो वातः। क्षेम मेवाव रुन्धे। यद्धरिणी यव मत्तीत्याह। विड्वै हरिणी। राष्ट्रँ यवः। विशञ्चैवास्मै राष्ट्रञ्च समीची दधाति। न पुष्टं पशु मन्यत इत्याह। तस्मा द्राजा पशून्न पुष्यति।। 31।।❀ शूद्रा यदर्यजारा न पोषाय धनायतीत्याह। तस्मा द्वैशीपुत्र न्नाभिषिञ्चन्ते। इयँ यका शकुन्तिकेत्याह। विड्वै शकुन्तिका। राष्ट्र मश्वमेधः। विशञ्चैवास्मै राष्ट्रञ्च समीची दधाति। आहल मिति सर्पतीत्याह। तस्मा द्राष्ट्राय विश स्सर्पन्ति। आहतङ्गभे पस इत्याह। विड्वै गभः।। 32।।❀ राष्ट्रं पसः। राष्ट्र मेव विश्याहन्ति। तस्मा द्राष्ट्रँ विशङ्घातुकम्। माता च ते पिता च त इत्याह। इयँ वै माता। असौ पिता। आभ्या मेवैनं परि ददाति। अग्रँ वृक्षस्य रोहत इत्याह। श्रीर्वै वृक्षस्याग्रम्। श्रिय मेवाव रुन्धे।। 33।।❀ प्र सुलामीति ते पिता गभे मुष्टि मतꣳसय दित्याह। विड्वै गभः। राष्ट्रं मुष्टिः। राष्ट्र मेव विश्याहन्ति। तस्मा द्राष्ट्रँ विशङ्घातुकम्। अप वा एतेभ्यः प्राणाः क्रामन्ति। ये यज्ञेऽपूतँ वदन्ति। दधिक्राव्ण्णो अकरिष मिति सुरभिमती मृचँ वदन्ति। प्राणा वै सुरभयः। प्राणा नेवाऽऽत्म न्दधते। नैभ्यः प्राणा अप क्रामन्ति। आपो हिष्ठा मयो भुव इत्यद्भि र्मार्जयन्ते। आपो वै सर्वा देवताः। देवताभि रेवाऽऽत्मानं पवयन्ते।। 34।। (राष्ट्रस्य मध्यं पुष्यति गभो रुन्धे दधते चत्वारि च। 7।)

☸❀ प्रजापतिः प्रजा स्सृष्ट्वा प्रेणाऽनु प्राविशत्। ताभ्यः पुन स्सम्भवितु न्नाशक्नोत्। सोऽब्रवीत्। ऋध्नव दित्थसः। यो मेतः पुन स्सम्भर दिति। तन्देवा अश्वमेधेनैव समभरन्न्। ततो वै त आर्ध्नुवन्न्। योऽश्वमेधेन यजते। प्रजापति मेव सं भर त्यृध्नोति। पुरुष मा लभते।। 35।।❀ वैराजो वै पुरुषः। विराज मेवाऽऽलभते। अथो अन्नँ वै विराट्। अन्न मेवाव रुन्धे। अश्व मा लभते। प्राजापत्यो वा अश्वः। प्रजापति मेवाऽऽलभते। अथो श्रीर्वा एकशफम्। श्रिय मेवाव रुन्धे। गामा लभते।। 36।।❀ यज्ञो वै गौः। यज्ञ मेवाऽऽलभते। अथो अन्नँ वै गौः। अन्न मेवाव रुन्धे। अजावी आ लभते भूम्ने। अथो पुष्टिर्वै भूमा। पुष्टि मेवाव रुन्धे। पर्यग्निकृतं पुरुष ञ्चाऽऽरण्याः श्चोथ्सृज न्त्यहिꣳसायै। उभौ वा एतौ पशू आ लभ्येते। यश्चावमो यश्च परमः। तेऽस्योभये यज्ञे बद्धाः। अभीष्टा अभिप्रीताः। अभिजिता अभिहुता भवन्ति। नैन न्द'2'ङ्क्षवः पशवो यज्ञे बद्धाः। अभीष्टा अभिप्रीताः। अभिजिता अभिहुता हिꣳसन्ति। योऽश्वमेधेन यजते। य उ चैन मेवँ वेद।। 37।। (लभते गामा लभते परमोऽष्टौ च। 8।)

☸❀ प्रथमेन वा एष स्तोमेन राद्ध्वा। चतुष्टोमेन कृतेनायाना मुत्तरेऽहन्न्। एकविꣳशे प्रतिष्ठायां प्रति तिष्ठति। एकविꣳशा त्प्रतिष्ठाया ऋतू नन्वारोहति। ऋतवो वै पृष्ठानि। ऋतव स्सँवथ्सरः। ऋतुष्वेव सँवथ्सरे प्रतिष्ठाय। देवता अभ्यारोहति। शक्वरयः पृष्ठं भव न्त्यन्यदन्य च्छन्दः। अन्येऽन्ये वा एते पशव आ लभ्यन्ते।। 38।।❀ उतेव ग्राम्याः। उतेवाऽऽरण्याः। अह रेव रूपेण समर्धयति। अथो अह्न एवैष बलिर् ह्रियते। तदाहुः। अपशवो वा एते। यदजावय श्चाऽऽरण्याश्च। एते वै सर्वे पशवः। यद्गव्या इति। गव्या न्पशू नुत्तमेऽह न्ना लभते।। 39।।❀ तेनैवोभया न्पशू नव रुन्धे। प्राजापत्या भवन्ति। अनभिजित.स्याभिजित्यै। सौरी र्नव श्वेता वशा अनूबन्ध्या भवन्ति। अन्तत एव ब्रह्मवर्चस मव रुन्धे। सोमाय स्वराज्ञेऽनोवाहा वनड्वाहा विति द्वन्द्विनः पशूना लभते। अहोरात्राणा मभिजित्यै। पशुभि र्वा एष व्यृध्यते। योऽश्वमेधेन यजते। छगल ङ्कल्माष ङ्किकिदीविँ विदीगय मिति त्वाष्ट्रा न्पशूना लभते। पशुभि रेवाऽऽत्मानꣳ समर्धयति। ऋतुभिर्वा एष व्यृध्यते। योऽश्वमेधेन यजते। पिशङ्गा स्त्रयो वासन्ता इत्यृतुपशूना लभते। ऋतुभि रेवाऽऽत्मानꣳ समर्धयति। आ वा एष पशुभ्यो वृश्च्यते। योऽश्वमेधेन यजते। पर्यग्निकृता उथ्सृजन्त्यनाव्रस्काय।। 40।। (लभ्यन्ते लभते त्वाष्ट्रा न्पशूना लभतेऽष्टौ च। 9।)

☸❀ प्रजापति रकामयत महा नन्नाद स्स्यामिति। स एता वश्वमेधे महिमाना वपश्यत्। तावगृह्णीत। ततो वै स महा नन्नादोऽभवत्। यः कामयेत महा नन्नाद स्स्यामिति। स एता वश्वमेधे महिमानौ गृह्णीत। महा नेवान्नादो भवति। यजमानदेवत्या वै वपा। राजा महिमा। यद्वपां महिम्नोभयतः

परियजति। यजमान मेव राज्येनोभयतः परि गृह्णाति। पुरस्ताथ्स्वाहाकारा वा अन्ये देवाः। उपरिष्टाथ्स्वाहाकारा अन्ये। ते वा एतेऽश्व एव मेध्य उभयेऽव रुध्यन्ते। यद्रूपां महिम्नोभयतः परियजति। तानेवोभया न्प्रीणाति।। 41।। (परियजति षड्च। 10।)

वैश्वदेवो वा अश्वः। तँ यत्प्राजापत्य ङ्कुर्यात्। या देवता अपिभागाः। ता भागधेयेन व्यर्धयेत्। देवताभ्य स्समद न्दध्यात्। स्तेगा न्दष्ट्राभ्यां मण्डूका न्जम्भ्येभि रिति। आज्य मवदान ङ्कृत्वा प्रतिसङ्ख्याय माहुती र्जुहोति। या एव देवता अपिभागाः। ता भागधेयेन समर्धयति। न देवताभ्य स्समद न्दधाति।। 42।। चतुर्दशैता ननुवाका न्जुहो त्यनन्तरित्यै। प्रयासाय स्वाहेति पञ्चदशम्। पञ्चदश वा अर्धमासस्य रात्रयः। अर्धमासश स्सँवथ्सर आप्यते। देवासुरा स्सँयत्ता आसन्न्। तेऽब्रुव न्नग्नय स्स्विष्टकृतः। अश्वस्य मेध्यस्य वय मुद्धार मुद्धरामहै। अथैता नभि भवामेति। ते लोहित मुदहरन्त। ततो देवा अभवन्न्।। 43।। पराऽसुराः। यथ्स्विष्टकृद्भ्यो लोहित ञ्जुहोति भ्रातृव्याभिभूत्यै। भवत्यात्मना। पराऽस्य भ्रातृव्यो भवति। गोमृगकण्ठेन प्रथमा माहुति ञ्जुहोति। पशवो वै गोमृगः। रुद्रोऽग्नि स्स्विष्टकृत्। रुद्रादेव पशू नन्त र्दधाति। अथो यत्रैषाऽऽहुतिर् हूयते। न तत्र रुद्रः पशू नभि मन्यते।। 44।। अश्वशफेन द्वितीया माहुति ञ्जुहोति। पशवो वा एकशफम्। रुद्रोऽग्नि स्स्विष्टकृत्। रुद्रा देव पशू नन्त र्दधाति। अथो यत्रैषाऽऽहुतिर् हूयते। न तत्र रुद्रः पशू नभि मन्यते। अयस्मयेन कमण्डलुना तृतीयाम्। आहुति ञ्जुहोत्यायाऽऽस्यो वै प्रजाः। रुद्रोऽग्नि स्स्विष्टकृत्। रुद्रा देव प्रजा अन्त र्दधाति। अथो यत्रैषाऽऽहुतिर् हूयते। न तत्र रुद्रः प्रजा अभि मन्यते।। 45।। (दधा त्यभव न्मन्यते प्रजा अन्त र्दधाति द्वे च। 11।)

अश्वस्य वा आलब्धस्य मेध उदक्रामत्। तदश्वस्तोमीय मभवत्। यदश्वस्तोमीय ञ्जुहोति। समेध मेवैन मा लभते। आज्येन जुहोति। मेधो वा आज्यम्। मेधोऽश्वस्तोमीयम्। मेधेनैवास्मि न्मेध न्दधाति। षड्त्रिꣳशत ञ्जुहोति। षड्त्रिꣳशदक्षरा बृहती।। 46।। बार्हताः पशवः। सा पशूनां मात्रा। पशू नेव मात्रया समर्धयति। ता यद्भूयसीर्वा कनीयसीर्वा जुहुयात्। पशू न्मात्रया व्यर्धयेत्। षड्त्रिꣳशत ञ्जुहोति। षड्त्रिꣳशदक्षरा बृहती। बार्हताः पशवः। सा पशूनां मात्रा। पशू नेव मात्रया समर्धयति।। 47।। अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति। द्विपाद्वै पुरुषो द्विप्रतिष्ठः। तदेनं प्रतिष्ठया समर्धयति। तदाहुः। अश्वस्तोमीयं पूर्वꣳ होतव्या '3' न्द्विपदा '3' इति। अश्वो वा अश्वस्तोमीयम्। पुरुषो द्विपदाः। अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति। तस्मा द्विपा च्चतुष्पाद मत्ति। अथो द्विपद्येव चतुष्पदः

प्रतिष्ठापयति। द्विपदा हुत्वा। नान्या मुत्तरा माहुति ञ्जुहुयात्। यदन्या मुत्तरा माहुति ञ्जुहुयात्। प्र प्रतिष्ठाया श्च्यवेत। द्विपदा अन्ततो जुहोति प्रतिष्ठित्यै।। 48।। (बृह त्यर्धयति स्थापयति पञ्च च। 12।)

प्रजापति रश्वमेध मसृजत। सोऽस्मा थ्सृष्टोऽपाक्रामत्। तँ यज्ञक्रतुभि रन्वैच्छत्। तँ यज्ञक्रतुभि र्नान्वविन्दत्। तमिष्टिभि रन्वैच्छत्। तमिष्टिभि रन्वविन्दत्। तदिष्टीना मिष्टित्वम्। यथ्सँवथ्सर मिष्टिभि र्यजते। अश्व मेव तदन्विच्छति। सावित्रियो भवन्ति।। 49।। इयँ वै सविता। यो वा अस्या न्नश्यति यो निलयते। अस्याँ वाव तँ विन्दन्ति। न वा इमा ङ्कश्चनेत्याहुः। तिर्यङ्गोर्ध्वोऽत्येतु मर्हतीति। यथ्सावित्रियो भवन्ति। सवितृप्रसूत एवैन मिच्छति। ईश्वरो वा अश्वः प्रमुक्तः परां परावत ङ्गन्तोः। यथ्सायन्धृती र्जुहोति। अश्वस्य यत्यै धृत्यै।। 50।। यत्प्रातरिष्टिभि र्यजते। अश्व मेव तदन्विच्छति। यथ्सायन्धृती र्जुहोति। अश्वस्यैव यत्यै धृत्यै। तस्माथ्सायं प्रजाः क्षेम्या भवन्ति। यत्प्रातरिष्टिभि र्यजते। अश्वमेव तदन्विच्छति। तस्माद्दिवा नष्टैष एति। यत्प्रातरिष्टिभि र्यजते सायन्धृती र्जुहोति। अहोरात्राभ्या मेवैन मन्विच्छति। अथो अहोरात्राभ्या मेवास्मै योगक्षेम ङ्कल्पयति।। 51।। (भवन्ति धृत्या एन मन्विच्छ त्येकञ्च। 13।)

अप वा एतस्माच्छ्री राष्ट्र ङ्क्रामति। योऽश्वमेधेन यजते। ब्राह्मणौ वीणागाथिनौ गायतः। श्रिया वा एत द्रूपम्। यद्वीणा। श्रिय मेवास्मि न्तद्धत्तः। यदा खलु वै पुरुष श्श्रिय मश्नुते। वीणाऽस्मै वाद्यते। तदाहुः। यदुभौ ब्राह्मणौ गायेताम्।। 52।। प्रभ्रꣳशुकाऽस्माच्छ्री स्स्यात्। न वै ब्राह्मणे श्री रमत इति। ब्राह्मणोऽन्यो गायेत्। राजन्योऽन्यः। ब्रह्म वै ब्राह्मणः। क्षत्रꣳ राजन्यः। तथा हास्य ब्रह्मणा च क्षत्रेण चोभयत श्श्रीः परिगृहीता भवति। तदाहुः। यदुभौ दिवा गायेताम्। अपास्मा द्राष्ट्र ङ्क्रामेत्।। 53।। न वै ब्राह्मणे राष्ट्रꣳ रमत इति। यदा खलु वै राजा कामयते। अथ ब्राह्मण ञ्जिनाति। दिवा ब्राह्मणो गायेत्। नक्तꣳ राजन्यः। ब्रह्मणो वै रूप महः। क्षत्रस्य रात्रिः। तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतो राष्ट्रं परिगृहीतं भवति। इत्यददा इत्ययजथा इत्यपच- इति ब्राह्मणो गायेत्। इष्टापूर्तँ वै ब्राह्मणस्य।। 54।। इष्टापूर्तेनैवैनꣳ स समर्धयति। इत्यजिना इत्ययुध्यथा इत्यमुꣳ सङ्ग्राम मह- न्निति राजन्यः। युद्धँ वै राजन्यस्य। युद्धेनैवैनꣳ स समर्धयति। अक्लृप्ता वा एतस्यर्तव इत्याहुः। योऽश्वमेधेन यजत इति। तिस्रोऽन्यो गायति तिस्रोऽन्यः। षट्थ्सं पद्यन्ते। षड्वा ऋतवः। ऋतू नेवास्मै कल्पयतः। ताभ्याꣳ सꣳस्थायाम्। अनोयुक्ते च शते च ददाति। शताऽऽयुः पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति तिष्ठति।। 55।। (गायेता ङ्क्रामे द्ब्राह्मणस्य कल्पयत श्चत्वारि च। 14।)

☸❀ सर्वेषु वा एषु लोकेषु मृत्यवोऽन्वायत्ताः। तेभ्यो यदाहुती न जुहुयात्। लोकेलोक एनं मृत्यु र्विन्देत्। 卐 मृत्यवे स्वाहा- मृत्यवे स्वाहेत्यभिपूर्व माहुती र्जुहोति। लोकाल्लोका देव मृत्यु मव यजते। नैनँ लोकेलोके मृत्यु र्विन्दति। यदमुष्मै स्वाहाऽमुष्मै स्वाहेति जुहु थ्सञ्चक्षीत। बहुं मृत्यु ममित्र ङ्कुर्वीत। मृत्यवे स्वाहेत्येकस्मा एवैका ञ्जुहुयात्। एको वा अमुष्मि न्लोके मृत्युः।। 56।। ❀ अशनया मृत्यु रेव। तमेवामुष्मि न्लोकेव यजते। 卐 भ्रूणहत्यायै स्वाहे- त्यवभृथ आहुति ञ्जुहोति। भ्रूणहत्या मेवाव यजते। तदाहुः। यद्भ्रूणहत्या पात्र्याथ। कस्मा द्यज्ञेऽपि क्रियत इति। अमृत्युर्वा अन्यो भ्रूणहत्याया इत्याहुः। भ्रूणहत्या वाव मृत्यु रिति। यद्भ्रूणहत्यायै स्वाहेत्यवभृथ आहुति ञ्जुहोति।। 57।। ❀ मृत्यु मेवाऽऽहुत्या तर्पयित्वा परिपाण ङ्कृत्वा। भ्रूणघ्ने भेषजङ्करोति। एताꣳ ह वै मुण्डिभ औदन्यवः। भ्रूणहत्यायै प्रायश्चित्तिँ विदाञ्चकार। यो हास्यापि प्रजायां ब्राह्मणꣳ हन्ति। सर्वस्मै तस्मै भेषज ङ्करोति। 卐 जुम्बकाय स्वाहे- त्यवभृथ उत्तमा माहुति ञ्जुहोति। वरुणो वै जुम्बकः। अन्तत एव वरुण मव यजते। खलते र्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्ध न्जुहोति। एतद्वै वरुणस्य रूपम्। रूपेणैव वरुण मव यजते।। 58।। (लोके मृत्यु र्जुहोति मूर्ध न्जुहोति द्वे च। 15।)

☸❀ वारुणो वा अश्वः। तन्देवतया व्यर्धयति। यत्प्राजापत्य ङ्करोति। नमो राज्ञे नमो वरुणायेत्याह। वारुणो वा अश्वः। स्वयैवैन न्देवतया समर्धयति। नमोऽश्वाय नमꣳ प्रजापतय इत्याह। प्राजापत्यो वा अश्वः। स्वयैवैन न्देवतया समर्धयति। नमोऽधिपतय इत्याह।। 59।। ❀ धर्मो वा अधिपतिः। धर्म मेवाव रुन्धे। अधिपति रस्यधिपतिं मा कुर्वधिपति रहं प्रजानां भूयास मित्याह। अधिपति मेवैनꣳ समानाना ङ्करोति। मा न्धेहि मयि धेहीत्याह। आशिष मेवैतामा शास्ते। उपाऽऽकृताय स्वाहेत्युपाऽऽकृते जुहोति। आलब्धाय स्वाहेति नियुक्ते जुहोति। हुताय स्वाहेति हुते जुहोति। एषाँ लोकाना मभिजित्यै।। 60।। ❀ प्र वा एष एभ्यो लोकेभ्य श्च्यवते। योऽश्वमेधेन यजते। आग्नेय मैन्द्राग्न माश्विनम्। तान्पशू नालभते प्रतिष्ठित्यै। यदाग्नेयो भवति। अग्नि स्सर्वा देवताः। देवता एवाव रुन्धे। ब्रह्म वा अग्निः। क्षत्र मिन्द्रः। यदैन्द्राग्नो भवति।। 61।। ❀ ब्रह्मक्षत्रे एवाव रुन्धे। यदाश्विनो भवति। आशिषा मवरुद्ध्यै। त्रयो भवन्ति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रति तिष्ठति। अग्नयेऽꣳहोमुचेऽष्टाकपाल इति दशहविष मिष्टि न्निर्वपति। दशाक्षरा विराट्। अन्नँ विराट्। विराजैवान्नाद्य मव रुन्धे। अग्ने मन्वे प्रथमस्य प्रचेतस इति याज्याऽनुवाक्या भवन्ति सर्वत्वाय।। 62।। (अधिपतय इत्याहाभिजित्या ऐन्द्राग्नो भवति रुन्ध एकञ्च। 16।)

☸❀ यद्यश्व मुपतप द्विन्देत्। आग्नेय मष्टाकपाल न्निर्वपेत्। सौम्य ञ्चरुम्। सावित्र मष्टाकपालम्। यदाग्नेयो भवति। अग्नि स्सर्वा देवताः। देवताभि रेवैनं भिषज्यति। यथ्सौम्यो भवति। सोमो वा ओषधीनाꣳ राजा। याभ्य एवैनँ विन्दति।। 63।। ❀ ताभि रेवैनं भिषज्यति। यथ्सावित्रो भवति। सवितृप्रसूत एवैनं भिषज्यति। एताभि रेवैन न्देवताभि र्भिषज्यति। अगदो हैव भवति। पौष्ण ञ्चरु न्निर्वपेत्। यदि श्लोण स्स्यात्। पूषा वै श्लौण्यस्य भिषक्। स एवैनं भिषज्यति। अश्लोणो हैव भवति।। 64।। ❀ रौद्र ञ्चरु न्निर्वपेत्। यदि महती देवताऽभिमन्येत। एतद्देवत्यो वा अश्वः। स्वयैवैन न्देवतया भिषज्यति। अगदो हैव भवति। वैश्वानर न्द्वादशकपाल न्निर्वपे न्मृगाऽऽखरे यदि नाऽऽगच्छेत्। इयँ वा अग्नि र्वैश्वानरः। इय मेवैन मर्चिभ्यां परिरोध मानयति। आहैव सुत्य मह गच्छति। यद्यधीयात्।। 65।। ❀ अग्नयेऽꣳहोमुचेऽष्टाकपालः। सौर्यं पयः। वायव्य आज्यभागः। यजमानो वा अश्वः। अꣳहसा वा एष गृहीतः। यस्याश्वो मेधाय प्रोक्षितोऽध्येति। यदꣳहोमुचे निर्वपति। अꣳहस एव तेन मुच्यते। यजमानो वा अश्वः। रेतसा वा एष व्यृध्यते।। 66।। ❀ यस्याश्वो मेधाय प्रोक्षितोऽध्येति। सौर्यꣳ रेतः। यथ्सौर्यं पयो भवति। रेतसैवैनꣳ स समर्धयति। यजमानो वा अश्वः। गर्भैर्वा एष व्यृध्यते। यस्याश्वो मेधाय प्रोक्षितोऽध्येति। वायव्या गर्भाः। यद्वायव्य आज्यभागो भवति। गर्भै रेवैनꣳ स समर्धयति। अथो यस्यैषाऽश्वमेधे प्रायश्चित्तिः क्रियते। इष्ट्वा वसीया न्भवति।। 67।। (विन्द त्यश्लोणो हैव भव त्यधीया दृध्यते गर्भै रेवैनꣳ स समर्धयति द्वे च। 17।)

☸❀ तदाहुः। द्वादश ब्रह्मौदना न्थ्सꣳस्थिते निर्वपेत्। द्वादशभि र्वेष्टिभि र्यजेतेति। यदिष्टिभि र्यजेत। उपनामुक एनँ यज्ञ स्स्यात्। पापीयाꣳस्तु स्यात्। आप्तानि वा एतस्य छन्दाꣳसि। य ईजानः। तानि क एताव दाशु पुनः प्रयुञ्जीतेति। सर्वा वै सꣳस्थिते यज्ञे वागाप्यते।। 68।। ❀ साऽऽप्ता भवति यातयाम्नी। क्रूरीकृतेव हि भव त्यरुष्कृता। सा न पुनः प्रयुज्येत्याहुः। द्वादशैव ब्रह्मौदना न्थ्सꣳस्थिते निर्वपेत्। प्रजापतिर्वा ओदनः। यज्ञः प्रजापतिः। उपनामुक एनँ यज्ञो भवति। न पापीया न्भवति। द्वादश भवन्ति। द्वादश मासा स्सँवथ्सरः। सँवथ्सर एव प्रति तिष्ठति।। 69।। (आप्यते सँवथ्सर एकञ्च। 18।)

☸❀ एष वै विभू र्नाम यज्ञः। सर्वꣳ ह वै तत्र विभु भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै प्रभू र्नाम यज्ञः। सर्वꣳ ह वै तत्र प्रभु भवति। यत्रैतेन यज्ञेन यजन्ते। एष वा ऊर्जस्वा न्नाम यज्ञः। सर्वꣳ ह वै तत्रोर्जस्व द्भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै पयस्वा न्नाम यज्ञः।। 70।। ❀ सर्वꣳ ह वै तत्र पयस्व

द्भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै विधृतो नाम यज्ञः। सर्व९ ह वै तत्र विधृतं भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै व्यावृत्तो नाम यज्ञः। सर्व९ ह वै तत्र व्यावृत्तं भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै प्रतिष्ठितो नाम यज्ञः। सर्व९ ह वै तत्र प्रतिष्ठितं भवति।। 71।।❀ यत्रैतेन यज्ञेन यजन्ते। एष वै तेजस्वी नाम यज्ञः। सर्व९ ह वै तत्र तेजस्वि भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै ब्रह्मवर्चसी नाम यज्ञः। आ ह वै तत्र ब्राह्मणो ब्रह्मवर्चसी जायते। यत्रैतेन यज्ञेन यजन्ते। एष वा अतिव्याधी नाम यज्ञः। आ ह वै तत्र राजन्योऽतिव्याधी जायते। यत्रैतेन यज्ञेन यजन्ते। एष वै दीर्घो नाम यज्ञः। दीर्घाऽऽयुषो ह वै तत्र मनुष्या भवन्ति। यत्रैतेन यज्ञेन यजन्ते। एष वै क्लृप्तो नाम यज्ञः। कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः। यत्रैतेन यज्ञेन यजन्ते।। 72।। (पयस्वा न्नाम यज्ञ॰ प्रतिष्ठितं भवति यत्रैतेन यज्ञेन यजन्ते षड्व। 19। एष वै विभू॰ प्रभू रूर्जस्वा न्पयस्वान् विधृतो व्यावृत्त॰ प्रतिष्ठित स्तेजस्वी ब्रह्मवर्च स्यतिव्याधी दीर्घ॰ क्लृप्तो द्वादश।)

❀ ताप्र्येणाश्व९ सं'2'ज्ञपयन्ति। यज्ञो वै ताप्र्यम्। यज्ञेनैवैन९ समर्धयन्ति। यामेन साम्ना प्रस्तोताऽनूप तिष्ठते। यमलोक मेवैन ङ्गमयति। ताप्र्ये च कृत्यधीवासे चाश्व९ सं'2'ज्ञपयन्ति। एतद्वै पशूना९ रूपम्। रूपेणैव पशूनव रुन्धे। हिरण्यकशिपु भवति। तेजसोऽवरुद्ध्यै।। 73।।❀ रुक्मो भवति। सुवर्गस्य लोकस्यानुख्यात्यै। अश्वो भवति। प्रजापते राप्त्यै। अस्य वै लोकस्य रूप न्ताप्र्यम्। अन्तरिक्षस्य कृत्यधीवासः। दिवो हिरण्यकशिपु। आदित्यस्य रुक्मः। प्रजापते रश्वः। इम मेव लोकन्ताप्र्येणाऽऽप्नोति।। 74।।❀ अन्तरिक्ष ङ्कृत्यधीवासेन। दिव९ हिरण्यकशिपुना। आदित्य९ रुक्मेण। अश्वेनैव मेध्येन प्रजापते स्सायुज्य९ सलोकता माप्नोति। एतासा मेव देवताना९ सायुज्यम्। सार्ष्टिता९ समानलोकता माप्नोति। योऽश्वमेधेन यजते। य उ चैन मेवँ वेद।। 75।। (अवरुद्ध्या आप्नोत्यष्टौ च। 20।)

❀ आदित्या श्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त। तेऽङ्गिरस आदित्येभ्यः। अमु मादित्य मश्वङ् श्वेतं भूत न्दक्षिणा मनयन्न्। तेऽब्रुवन्न्। यन्नोऽनेष्ट। स वर्योऽभूदिति। तस्मा दश्व९ सवर्ये त्याह्वयन्ति। तस्माद्यज्ञे वरो दीयते। यत्प्रजापति रालब्धोऽश्वोऽभवत्। तस्मा दश्वो नाम।। 76।।❀ यच्छ्वय दरु रासीत्। तस्मा दर्वा नाम। यथ्सद्यो वाजा न्थ्समजयत्। तस्माद्वाजी नाम। यदसुराणाँ लोकानाऽदत्त। तस्मा दादित्यो नाम। अग्निर्वा अश्वमेधस्य योनि रायतनम्। सूर्योऽग्ने र्योनि रायतनम्। यदश्वमेधेऽग्नौ चित्य उत्तरवेदि मुपवपति। योनिमन्त मेवैन मायतनवन्त ङ्करोति।। 77।।❀ योनिमा नायतनवा

न्भवति। य एवँ वेद। प्राणापानौ वा एतौ देवानाम्। यदर्काश्वमेधौ। प्राणापाना वेवाव रुन्धे। ओजो बलँ वा एतौ देवानाम्। यदर्काश्वमेधौ। ओजो बल मेवाव रुन्धे। अग्निर्वा अश्वमेधस्य योनि रायतनम्। सूर्योऽग्ने र्योनि रायतनम्। यदश्वमेधेऽग्नौ चित्य उत्तरवेदि श्चिनोति। तावर्काश्वमेधौ। अर्काश्वमेधा.वेवाव रुन्धे। अथो अर्काश्वमेधयो रेव प्रति तिष्ठति।। 78।। (नाम करोति सूर्योऽग्ने र्योनि रायतन श्चत्वारि च। 21।)

☸❀ प्रजापतिँ वै देवाः पितरम्। पशुं भूतं मेधायाऽऽलभन्त। तमालभ्योपावसन्न्। प्रात र्यष्टास्मह इति। एकँ वा एत द्देवाना महः। यथ्सँवथ्सरः। तस्मा दश्वः पुरस्ता थ्सँवथ्सर आ लभ्यते। यत्प्रजापति रालब्धोऽश्वोऽभवत्। तस्मादश्वः। यथ्सद्यो मेधोऽभवत्।। 79।। ❀ तस्मा दश्वमेधः। वेदुकोऽश्व माशुं भवति। य एवँ वेद। यद्वै तत्प्रजापति रालब्धोऽश्वोऽभवत्। तस्मा दश्वः प्रजापतेः पशूना मनुरूपतमः। आऽस्य पुत्रः प्रतिरूपो जायते। य एवँ वेद। सर्वाणि भूतानि सम्भृत्याऽऽलभते। समेन न्देवा स्तेजसे ब्रह्मवर्चसाय भरन्ति। योऽश्वमेधेन यजते।। 80।। ❀ य उ चैन मेवँ वेद। एतद्वै तद्देवा एता न्देवताम्। पशुं भूतं मेधायाऽऽलभन्त। यज्ञ मेव। यज्ञेन यज्ञ मयजन्त देवाः। कामप्रँ यज्ञ मकुर्वत। तेऽमृतत्व मकामयन्त। तेऽमृतत्व मगच्छन्न्। योऽश्वमेधेन यजते। देवाना मेवायनेनैति।। 81।। ❀ प्राजापत्येनैव यज्ञेन यजते कामप्रेण। अपुनर्मारमेव गच्छति। एतस्य वै रूपेण पुरस्ता त्प्राजापत्य मृषभ न्तूपरं बहुरूप मालभते। सर्वेभ्यः कामेभ्यः। सर्वस्याऽऽप्त्यै। सर्वस्य जित्यै। सर्व मेव तेनाऽऽप्नोति। सर्व ञ्जयति। योऽश्वमेधेन यजते। य उ चैन मेवँ वेद।। 82।। (मेधोऽभव द्यजत एति वेद। 22।)

☸❀ यो वा अश्वस्य मेध्यस्य लोमनी वेद। अश्वस्यैव मेध्यस्य लोमँलोम ञ्जुहोति। अहोरात्रे वा अश्वस्य मेध्यस्य लोमनी। यथ्सायंप्रात र्जुहोति। अश्वस्यैव मेध्यस्य लोमँलोम ञ्जुहोति। एतदनुकृति ह स्म वै पुरा। अश्वस्य मेध्यस्य लोमँलोम ञ्जुह्वति। यो वा अश्वस्य मेध्यस्य पदे वेद। अश्वस्यैव मेध्यस्य पदेपदे जुहोति। दर्शपूर्णमासौ वा अश्वस्य मेध्यस्य पदे।। 83।। ❀ यद्दर्शपूर्णमासौ यजते। अश्वस्यैव मेध्यस्य पदेपदे जुहोति। एतदनुकृति ह स्म वै पुरा। अश्वस्य मेध्यस्य पदेपदे जुह्वति। यो वा अश्वस्य मेध्यस्य विवर्तनँ वेद। अश्वस्यैव मेध्यस्य विवर्तनेविवर्तने जुहोति। असौ वा आदित्योऽश्वः। स आहवनीय मा गच्छति। तद्धि वर्तते। यदग्निहोत्र ञ्जुहोति। अश्वस्यैव मेध्यस्य विवर्तनेविवर्तने जुहोति। एतदनुकृति ह स्म वै पुरा। अश्वस्य मेध्यस्य विवर्तनेविवर्तने जुह्वति।। 84।। (पदे अग्निहोत्र ञ्जुहोति त्रीणि च।23।)

(प्रजापति स्तमष्टादशिभि॰ प्रजापति रकामयतोभावस्मै युञ्जन्ति तेजसाऽप प्राणा अप श्रीरूर्ध्वां प्रजापति॰ प्रेणाऽनु प्रथमेन प्रजापति रकामयत महान् वैश्वदेवो वा अश्वोऽश्वस्य प्रजापतिस्तँ यज्ञक्रतुभि रप श्रीर्ब्राह्मणौ सर्वेषु वारुणो यद्यश्व न्तदाहु रेष वै विभू स्ताप्र्येणाऽऽदित्या॰ प्रजापतिं पितरँ यो वा अश्वस्य मेध्यस्य लोमनी त्रयोवि९शतिः। 23। प्रजापति रस्मि न्लोक उत्तरत श्श्रिय मेव प्रजापति रकामयत महान् यत्प्रात॰ प्र वा एष एभ्यो लोकेभ्य स्सर्व९ ह वै तत्र पयस्वद्य उ चैन मेवँ वेद चत्वार्यशीतिः। 84। प्रजापति रश्वमेध ञ्जुहति।)

## ॐ तृतीय काण्डे दशम॰ प्रपाठकः (पञ्च काठकेषु प्रथमः)

### आ।का। 8सावित्रचयन मन्त्राः 6(अष्टावनुवाकाः 8)

❀ ꖦ सं'2'ज्ञानँ ꖦ विज्ञानं ꖦ प्रज्ञान ꖦ ञ्जान ꖦ दभिजानत्।

ꖦ सङ्कल्पमानं ꖦ प्रकल्पमान ꖦ मुपकल्पमान ꖦ मुपक्लृप्तं ꖦ क्लृप्तम्।

ꖦ श्रेयो ꖦ वसीय ꖦ आय ꖦ थ्सम्भूतं ꖦ भूतम्।

ꖦ चित्र॰ ꖦ केतु॰ ꖦ प्रभा ꖦ नाभा ꖦ न्थ्सम्भान्।

ꖦ ज्योतिष्मा९ ꖦ स्तेजस्वा ꖦ नातप९ ꖦ स्तप ꖦ न्नभितपन्न्।

ꖦ रोचनो ꖦ रोचमान ꖦ श्शोभन ꖦ श्शोभमान॰ ꖦ कल्याणः।

ꖦ दर्शा ꖦ दृष्टा ꖦ दर्शता ꖦ विश्वरूपा ꖦ सुदर्शना।

ꖦ आप्यायमाना ꖦ प्यायमाना ꖦ प्याया ꖦ सूनृꖦतेरा।

ꖦ आपूर्यमाणा ꖦ पूर्यमाणा ꖦ पूरयन्ती ꖦ पूर्णा ꖦ पौर्णमासी।

ꖦ दाता ꖦ प्रदाता ꖦ ऽऽनन्दो ꖦ मोद॰ ꖦ प्रमोदः।। 1।।

❀ ꖦ आवेशय ꖦ न्निवेशय ꖦ न्थ्सँवेशन ꖦ स्स९शान्त ꖦ श्शान्तः।

ꖦ आभव ꖦ न्प्रभव ꖦ न्थ्सम्भव '2' ꖦ न्थ्सम्भूतो ꖦ भूतः।

ꖦ प्रस्तुतँ ꖦ विष्टुत९ ꖦ सङ्स्तुत ꖦ ङ्कल्याणँ ꖦ विश्वरूपम्।

ꖦ शुक्र ꖦ ममृत ꖦ न्तेजस्वि ꖦ तेज ꖦ स्समिद्धम्।

ꖦ अरुणं ꖦ भानुम ꖦ न्मरीचिम ꖦ दभितप ꖦ त्तपस्वत्।

ꖦ सविता ꖦ प्रसविता ꖦ दीप्तो ꖦ दीपय ꖦ न्दीप्यमानः।

ꖦ ज्वल ꖦ न्ज्वलिता ꖦ तपन्ꖦवितप ꖦ न्थ्सन्तपन्न्।

卐 रोचनो 卐 रोचमान 卐 श्शुम्भू 卐 श्शुम्भमानो 卐 वामः।
卐 सुता 卐 सुन्वती 卐 प्रसुता 卐 सूयमाना卐ऽभिषूयमाणा।
卐 पीती 卐 प्रपा 卐 संपा 卐 तृप्ति 卐 स्तर्पयन्ती।। 2।।
❀ 卐 कान्ता 卐 काम्या 卐 कामजाता 卐ऽऽयुष्मती 卐 कामदुघा।
卐 अभिशास्ता 卐ऽनुमन्ता 卐ऽऽनन्दो 卐 मोदः 卐 प्रमोदः।
卐 आसादय 卐 न्निषादय 卐 न्थ्सꣳसादन 卐 स्सꣳसन्न 卐 स्सन्नः।
卐 आभू 卐 र्विभूः 卐 प्रभू 卐 श्शम्भू 卐 र्भुवः।
卐 पवित्रं 卐 पवयिष्य 卐 न्पूतो 卐 मेध्यः।
卐 यशो 卐 यशस्वा 卐 नायु 卐 रमृतः।
卐 जीवो 卐 जीविष्य'2'卐न्थ्स्वर्गो 卐 लोकः।
卐 सहस्वा 卐 न्थ्सहीया 卐 नोजस्वा 卐 न्थ्सहमानः।
卐 जय 卐 न्नभिजय 卐 न्थ्सुद्रविणो 卐 द्रविणोदाः।
卐 आर्द्रपवित्रो 卐 हरिकेशो 卐 मोदः 卐 प्रमोदः।। 3।।
❀ 卐 अरुणो 卐 ऽरुणरजाः 卐 पुण्डरीको 卐 विश्वजि卐दभिजित्।
卐 आर्द्रः 卐 पिन्वमानो 卐 ऽन्नवा 卐 न्रसवा 卐 निरावान्।
卐 सर्वौषध 卐 स्सम्भरो 卐 महस्वान्।
卐 एजत्का 卐 जोवत्काः। 卐 क्षुल्लका 卐 श्शिपिविष्टकाः।
卐 सरिस्त्ररा 卐 स्सुशेरवः। 卐 अजिरासो 卐 गमिष्णवः।
卐 इदानी 卐 न्तदानी 卐 मेतर्हि 卐 क्षिप्र 卐 मजिरम्।
卐 आशु 卐 र्निमेषः 卐 फणो 卐 द्रव 卐 न्नतिद्रवन्न्।
卐 त्वरꣳ 卐 स्त्वरमाण 卐 आशु 卐 राशीया 卐 न्जवः।
卐 अग्निष्टोम 卐 उक्थ्यो 卐 ऽतिरात्रो 卐 द्विरात्र 卐 स्त्रिरात्र 卐 श्चतूरात्रः।
卐 अग्निर् ऋतु 卐 स्सूर्य ऋतु 卐 श्चन्द्रमा ऋतुः।
卐 प्रजापति 卐 स्संँवथ्सरो 卐 महा卐न्कः।। 4।। (प्रमोद स्तर्पयन्ती प्रमोदो जव स्त्रीणि च। 1।)

☸❀ 卐 भूरग्निश्च पृथिवीच्च माञ्च। त्रीऽश्च लोका न्थ्सँवथ्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्धुवा सीद।।
卐 भुवो वायुश्चान्तरिक्षञ्च माञ्च। त्रीऽश्च लोका न्थ्सँवथ्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्धुवा सीद।।
卐 स्वरादित्यञ्च दिवञ्च माञ्च। त्रीऽश्च लोका न्थ्सँवथ्सरञ्च। प्रजापति स्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्धुवा सीद।।
卐 भू र्भुव स्स्व श्चन्द्रमसञ्च दिशश्च माञ्च। त्रीऽश्च लोका न्थ्सँवथ्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्धुवा सीद।। 5।। (सँवथ्सरञ्च षड्च। 2।)
☸❀ 卐 त्वमेव त्वाँ वेत्थ योऽसि सोऽसि। त्वमेव त्वामचैषीः।।
卐 चितश्चासि सञ्चित श्चास्यग्ने। एतावाऽ श्चासि भूयाऽ श्चास्यग्ने।।
卐 यत्ते अग्ने न्यूनँ यदु तेऽतिरिक्तम्। आदित्या स्तदङ्गिरस श्चिन्वन्तु। विश्वे ते देवा श्चिति मा पूरयन्तु।।
卐 चित श्चासि सञ्चित श्चास्यग्ने। एतावाऽ श्चासि भूयाऽ श्चास्यग्ने।।
卐 मा ते अग्ने च येन माति च येनाऽऽयु रा वृक्षि।।
卐 सर्वेषा ञ्ज्योतिषा ञ्ज्योति र्यददा वुदेति। तपसो जात मनिभृष्ट मोजः। तत्ते ज्योति रिष्टके। तेन मे तप। तेन मे ज्वल। तेन मे दीदिहि। याव द्देवाः। याव दसाति सूर्यः। याव दुतापि ब्रह्म।। 6।। (वृक्षि नव च। 3।)
☸❀ 卐 सँवथ्सरोऽसि परिवथ्सरोऽसि। इदावथ्सरो ऽसीदुवथ्सरोऽसि। इद्वथ्सरोऽसि वथ्सरोऽसि। तस्य ते वसन्त श्शिरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शर दुत्तरः पक्षः। हेमन्तो मध्यम्। पूर्वपक्षा श्चितयः। अपरपक्षाः पुरीषम्।। 7।। ❀ अहोरात्राणीष्टकाः। ऋषभोऽसि स्वर्गो लोकः। यस्या न्दिशि महीयसे। ततो नो मह आ वह। वायु र्भूत्वा सर्वा दिश आ वाहि। सर्वा दिशोऽनु वि वाहि। सर्वा दिशोऽनु सँ वाहि। चित्या चिति मा पृण। अचित्या चिति मा पृण। चिदसि समुद्रयोनिः।। 8।। ❀ इन्दु र्दक्ष श्श्येन ऋतावा। हिरण्यपक्ष श्शकुनो भुरण्युः। महा न्थ्सधस्थे ध्रुव आ निषत्तः। नमस्ते अस्तु मा मा हिऽसीः।
卐 एति प्रेति वीति समित्युदिति। दिवं मे यच्छ। अन्तरिक्षं मे यच्छ। पृथिवीं मे यच्छ। पृथिवीं मे यच्छ। अन्तरिक्षं मे यच्छ। दिवं मे यच्छ। अह्ना प्र सारय। रात्र्या सम च। रात्र्या प्र सारय। अह्ना सम

Sri Ganapathy Sachchidananda Avadhoota Dattapeetham • Mysore •

च। कामं प्र सारय। कामꣳ सम च।। 9।। (पुरीषꣳ समुद्रयोनिः पृथिवीं मे यच्छान्तरिक्षं मे यच्छ सप्त च। 4।)

ॐ ❀ 卐 भूर्भुवस्स्वः। ओजो बलम्। ब्रह्म क्षत्रम्। यशो महत्। सत्य न्तपो नाम। रूप ममृतम्। चक्षु श्श्रोत्रम्। मन आयुः। विश्वँ यशो महः। सम न्तपो हरो भाः।।

卐 जातवेदा यदि वा पावकोऽसि। वैश्वानरो यदि वा वैद्युतोऽसि। शं प्रजाभ्यो यजमानाय लोकम्। ऊर्जं पुष्टि न्दद दभ्यावव्वृथ्स्व।। 10।। (भा श्चत्वारि च। 5।)

ॐ ❀ 卐 राज्ञी विराज्ञी। सम्राज्ञी स्वराज्ञी। अर्चि श्शोचिः। तपो हरो भाः। अग्नि रिन्द्रो बृहस्पतिः। विश्वे देवा भुवनस्य गोपाः। ते मा सर्वे यशसा सꣳ सृजन्तु।। 11।। (राज्ञीन्द्रो मा सप्त। 6।)

ॐ ❀ 卐 असवे स्वाहा 卐 वसवे स्वाहा। 卐 विभुवे स्वाहा 卐 विवस्वते स्वाहा। 卐 अभिभुवे स्वाहा卐ऽधिपतये स्वाहा। 卐 दिवां पतये स्वाहा 卐ऽꣳहस्पत्याय स्वाहा। 卐 चाक्षुष्मत्याय स्वाहा 卐 ज्योतिष्मत्याय स्वाहा। 卐 राज्ञे स्वाहा 卐 विराज्ञे स्वाहा। 卐 सम्राज्ञे स्वाहा 卐 स्वराज्ञे स्वाहा। 卐 शूषाय स्वाहा 卐 सूर्याय स्वाहा। 卐 चन्द्रमसे स्वाहा 卐 ज्योतिषे स्वाहा। 卐 सꣳसर्पाय स्वाहा 卐 कल्याणाय स्वाहा। 卐 अर्जुनाय स्वाहा।। 12।। (कल्याणाय स्वाहैकञ्च। 7।)

ॐ ❀ 卐 विपश्चिते पवमानाय गायत। मही न धाराऽत्यन्धो अर्षति। अहिर् ह जीर्णा मति सर्पति त्वचम्। अत्यो न क्रीड न्नसर द्वृषा हरिः।।

卐 उपयामगृहीतोऽसि मृत्यवे त्वा जुष्ट ङ्गृह्णामि।

卐 एष ते योनि र्मृत्यवे त्वा।

卐 अप मृत्यु मप क्षुधम्। अपेत श्शपथञ्जहि। अधा नो अग्न आ वह। रायस्पोषꣳ सहस्रिणम्।। 13।।

❀ 卐 ये ते सहस्र मयुतं पाशाः। मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया। सर्वा नव यजामहे।।

卐 भक्षोऽस्यमृतभक्षः। तस्य ते मृत्युपीत स्यामृतवतः। स्वगाकृतस्य मधुमतः। उपहूतस्योपहूतो भक्षयामि।।

卐 मन्द्राभिभूतिः केतु र्यज्ञानाँ वाक्। असावेहि।। 14।।

❀ 卐 अन्धो जागृविः प्राण। असावेहि।।

卐 बधिर आक्रन्दयित रपान। असावेहि।।

卐 अहस्तोस्त्वा चक्षुः। असावेहि।।

Sri Sachchidananda Avadhoota Datta Peetham • Mysore

卐 अपादाशो मनः। असावेहि।।
卐 कवे विप्रचित्ते श्रोत्र। असावेहि।। 15।।
❀ 卐 सुहस्त स्सुवासाः। शूषो नामास्यमृतो मर्त्येषु। तन्त्वाऽह न्तथा वेद। असावेहि।।
卐 अग्निर्मे वाचि श्रितः। वाग्घृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 वायुर्मे प्राणे श्रितः।। 16।। ❀ प्राणो हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 सूर्यो मे चक्षुषि श्रितः। चक्षुर् हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 चन्द्रमा मे मनसि श्रितः।। 17।। ❀ मनो हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 दिशो मे श्रोत्रे श्रिताः। श्रोत्र९ हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 आपो मे रेतसि श्रिताः।। 18।। ❀ रेतो हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 पृथिवी मे शरीरे श्रिता। शरीर९ हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 ओषधिवनस्पतयो मे लोमसु श्रिताः।। 19।। ❀ लोमानि हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 इन्द्रो मे बले श्रितः। बल९ हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 पर्जन्यो मे मूर्ध्नि श्रितः।। 20।। ❀ मूर्धा हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 ईशानो मे मन्यौ श्रितः। मन्युर् हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।।
卐 आत्मा म आत्मनि श्रितः।। 21।। ❀ आत्मा हृदये। हृदयं मयि। अह ममृते। अमृतं ब्रह्मणि।
卐 पुनर्म आत्मा पुन रायु राऽगात्। पुनः॰ प्राणः॰ पुन राकूत माऽगात्। वैश्वानरो रश्मिभि र्वावृधानः। अन्तस्तिष्ठ त्वमृतस्य गोपाः।। 22।। (सहस्रिण मिहि श्रोत्रासा वेहि प्राणे श्रितो मनसि श्रितो रेतसि श्रिता लोमसु श्रिता मूर्ध्नि श्रित आत्मनि श्रितोऽष्टौ च। 8। अग्नि र्वायु स्सूर्य श्चन्द्रमा दिश आपः॰ पृथिव्योषधिवनस्पतय इन्द्रः॰ पर्जन्य ईशान आत्मा पुनर्मे त्रयोदश।)

## आ।का। 3सावित्रचयन ब्राह्मणम् 6(त्रयोऽनुवाकाः 3)

❀ प्रजापति र्देवा नसृजत। ते पाप्मना सन्दिता अजायन्त। तान्व्यद्यत्। यद्व्यद्यत्। तस्मा द्विद्युत्। तमवृश्चत्। यदवृश्चत्। तस्मा द्वृष्टिः। तस्मा द्यत्रैते देवते अभिप्राप्नुतः। वि च हैवास्य तत्र पाप्मान न्यतः।। 23।। ❀ वृश्चतश्च। सैषा मीमा९साऽग्निहोत्र एव सम्पन्ना। अथो आहुः। सर्वेषु यज्ञक्रतुष्विति। होष्य न्नप उप स्पृशेत्। 卐 विद्युदसि विद्य मे पाप्मान- मिति। अथ हुत्वोप स्पृशेत्।

卐 वृष्टिरसि वृश्च मे पाप्मान- मिति। यक्ष्यमाणो वेष्टा वा। वि च हैवास्यैते देवते पाप्मान न्यतः।। 24।।❀ वृश्चतश्च। अत्य॰हो हाऽऽरुणिः। ब्रह्मचारिणे प्रश्ना न्प्रोच्य प्र जिघाय। परेहि। प्लक्ष न्दैयाम्पातिं पृच्छ। वेत्थ सावित्रा '3' न्न वेत्था '3' इति। तमागत्य पप्रच्छ। आचार्यो मा प्राहैषीत्। वेत्थ सावित्रा '3' न्न वेत्था '3' इति। स होवाच वेदेति।। 25।।❀ स कस्मि न्प्रतिष्ठित इति। परोरजसीति। कस्त द्यत्परोरजा इति। एष वाव स परोरजा इति होवाच। य एष तपति। एषोऽर्वाग्रजा इति। स कस्मि न्त्वेष इति। सत्य इति। किन्तथ्सत्य मिति। तप इति।। 26।।❀ कस्मिन्नु तप इति। बल इति। किन्त द्बलमिति। प्राण इति। मा स्म प्राण मति पृच्छ इति माऽऽचार्योऽब्रवी दिति होवाच ब्रह्मचारी। स होवाच प्लक्षो दैयाम्पातिः। यद्वै ब्रह्मचारि न्प्राण मत्यप्रक्ष्यः। मूर्धा ते व्यपतिष्यत्। अह मु त आचार्या च्छ्रेया न्भविष्यामि। यो मा सावित्रे समवादिष्टेति।। 27।।❀ तस्मा थ्सावित्रे न सँवदेत। स यो ह वै सावित्रँ विदुषा सावित्रे सँवदते। स हास्मि ञ्छ्रिय न्दधाति। अनु ह वा अस्मा असौ तप न्छ्रियं मन्यते। अन्वस्मै श्री स्तपो मन्यते। अन्वस्मै तपो बलं मन्यते। अन्वस्मै बलं प्राणं मन्यते। स यदाह। सं'2'ज्ञानँ विज्ञान न्दर्शा दृष्टेति। एष एव तत्।। 28।।❀ अथ यदाह। प्रस्तुतँ विष्टुत॰ सुता सुन्वतीति। एष एव तत्। एष ह्येव तान्यहानि। एष रात्रयः। अथ यदाह। चित्रः केतु र्दाता प्रदाता सविता प्रसविताऽभिशास्ताऽनुमन्तेति। एष एव तत्। एष ह्येव तेऽह्नो मुहूर्ताः। एष रात्रेः।। 29।।❀ अथ यदाह। पवित्रं पवयिष्य '2' न्थ्सहस्वा न्थ्सहीया नरुणोऽरुणरजा इति। एष एव तत्। एष ह्येव तेऽर्धमासाः। एष मासाः। अथ यदाह। अग्निष्टोम उक्थ्योऽग्निर् ऋतुः प्रजापति स्सँवथ्सर इति। एष एव तत्। एष ह्येव ते यज्ञक्रतवः। एष ऋतवः।। 30।।❀ एष सँवथ्सरः। अथ यदाह। इदानी न्तदानीमिति। एष एव तत्। एष ह्येव ते मुहूर्तानां मुहूर्ताः। जनको ह वैदेहः। अहोरात्रै स्समाजगाम। त॰ होचुः। यो वा अस्मान् वेद। विजह त्पाप्मान मेति।। 31।।❀ सर्व मायु रेति। अभि स्वर्गँ लोक ञ्जयति। नास्यामुष्मि न्लोकेऽन्न ङ्क्षीयत इति। विजहद्ध वै पाप्मान मेति। सर्व मायु रेति। अभि स्वर्गँ लोक ञ्जयति। नास्यामुष्मि न्लोकेऽन्न ङ्क्षीयते। य एवँ वेद। अहीना हाऽऽश्वत्थ्यः। सावित्रँ विदाञ्चकार।। 32।।❀ स ह ह॰सो हिरण्मयो भूत्वा। स्वर्गँ लोक मियाय। आदित्यस्य सायुज्यम्। ह॰सो ह वै हिरण्मयो भूत्वा। स्वर्गँ लोकमेति। आदित्यस्य सायुज्यम्। य एवँ वेद। देवभागो ह श्रौतर्षः। सावित्रँ विदाञ्चकार। त॰ ह वागदृश्यमानाऽभ्युवाच।। 33।।❀ सर्वं बत गौतमो वेद। यस्सावित्रँ वेदेति। स होवाच। कैषा वागसीति। अय मह॰ सावित्रः। देवाना मुत्तमो लोकः। गुह्यं महो

बिभ्रदिति। एतावति ह गौतमः। यज्ञोपवीत ङ्कृत्वाऽधो नि पपात। नमो नम इति।। 34।।❀ स होवाच। मा भैषी गौतम। जितो वै ते लोक इति। तस्माद्ये के च सावित्रँ विदुः। सर्वे ते जितलोकाः। स यो ह वै सावित्रस्याष्टाऽक्षरं पदꣳ श्रियाऽभिषिक्तँ वेद। श्रिया हैवाभिषिच्यते।

卐 घृणि- रिति द्वे अक्षरे। 卐 [1]सूरिय इति त्रीणि। 卐 आदित्य इति त्रीणि।। 35।।❀ एतद्वै सावित्रस्याष्टाऽक्षरं पदꣳ श्रियाऽभिषिक्तम्। य एवँ वेद। श्रिया हैवाभिषिच्यते। तदेतदृचाऽभ्युक्तम्।

卐 ऋचो अक्षरे परमे व्योमन्न्। यस्मि न्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति। य इत्त द्विदु स्त इमे समासत- इति। न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थोऽस्ति। यस्सावित्रँ वेद।। 36।।❀ तदेत त्परिय द्देवचक्रम्। आर्द्रं पिन्वमानꣳ स्वर्गे लोक एति। विजह द्विश्वा भूतानि संपश्यत्। आर्द्रो ह वै पिन्वमान स्स्वर्गे लोक एति। विजहन्विश्वा भूतानि संपश्यन्न्। य एवँ वेद। शूषो ह वै वार्ष्णेयः। आदित्येन समाजगाम। तꣳ होवाच। एहि सावित्रँ विद्धि। अयँ वै स्वग्र्योऽग्निः पारयिष्णु रमृता थ्सम्भूत इति। एष वाव स सावित्रः। य एष तपति। एहि माँ विद्धि। इति हैवैन न्तदुवाच।। 37।। (द्यतो द्यतो वेदेति तप इति समवादिष्टेति तद्रात्रेर् ऋतव एति चकारोवाच नम इत्यादित्य इति त्रीणि सावित्रँ वेद विद्धि पञ्च च। 9। प्रजापति र्देवान्थ्सं'2'ज्ञानं प्रस्तुत न्तान्यहान्येष रात्रय श्चित्रः केतु स्तेऽह्नो मुहूर्ता रात्रेः पवित्र न्तेऽर्धमासा अग्निष्टोमो यज्ञक्रतव इदानीं मुहूर्ताना ञ्जनकोऽहीना देवभागः कैषा वाञ्मा शूषो ह वै षोडश।)

❀ इयँ वाव सरघा। तस्या अग्नि रेव सारघं मधु। या एताः पूर्वपक्षापरपक्षयो रात्रयः। ता मधुकृतः। यान्यहानि। ते मधुवृषाः। स यो ह वा एता मधुकृतश्च मधुवृषाꣳश्च वेद। कुर्वन्ति हास्यैता अग्नौ मधु। नास्येष्टापूर्त न्धयन्ति। अथ यो न वेद।। 38।।❀ न हास्यैता अग्नौ मधु कुर्वन्ति। धयन्त्यस्येष्टापूर्तम्। यो ह वा अहोरात्राणा न्नामधेयानि वेद। नाहोरात्रेष्वार्ति मार्छति। सं'2'ज्ञानँ विज्ञान न्दर्शा दृष्टेति। एतावनुवाकौ पूर्वपक्षस्याहोरात्राणा न्नामधेयानि। प्रस्तुतँ विष्टुतꣳ सुता सुन्वतीति। एता वनुवाका वपरपक्षस्याहोरात्राणा न्नामधेयानि। नाहोरात्रेष्वार्ति मार्छति। य एवँ वेद।। 39।।❀ यो ह वै मुहूर्ताना न्नामधेयानि वेद। न मुहूर्तेष्वार्ति मार्छति। चित्रः केतु र्दाता प्रदाता सविता प्रसविताऽभिशास्ताऽनुमन्तेति। एतेऽनुवाका मुहूर्ताना न्नामधेयानि। न मुहूर्तेष्वार्ति मार्छति। य एवँ वेद। यो ह वा अर्धमासानाञ्च मासानाञ्च नामधेयानि वेद। नार्धमासेषु न मासेष्वार्ति मार्छति। पवित्रं

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

[1]

पवयिष्य ‘2’ न्थ्सहस्वा न्थ्सहीया नरुणोऽरुणरजा इति। एतेऽनुवाका अर्धमासानाञ्च मासानाञ्च नामधेयानि।। 40।।❀ नार्धमासेषु न मासेष्वार्ति मार्छति। य एवँ वेद। यो ह वै यज्ञक्रतूना ञ्चर्तूनाञ्च सँवथ्सरस्य च नामधेयानि वेद। न यज्ञक्रतुषु नर्तुषु न सँवथ्सर आर्ति मार्छति। अग्निष्टोम उक्थ्योऽग्निर् ऋतु॰ प्रजापति स्सँवथ्सर इति। एतेऽनुवाका यज्ञक्रतूना ञ्चर्तूनाञ्च सँवथ्सरस्य च नामधेयानि। न यज्ञक्रतुषु नर्तुषु न सँवथ्सर आर्ति मार्छति। य एवँ वेद। यो ह वै मुहूर्तानां मुहूर्तान् वेद। न मुहूर्तानां मुहूर्तेष्वार्ति मार्छति।। 41।।❀ इदानी न्तदानी मिति। एते वै मुहूर्तानां मुहूर्ताः। न मुहूर्तानां मुहूर्तेष्वार्ति मार्छति। य एवँ वेद। अथो यथा क्षेत्रज्ञो भूत्वाऽनुप्रविश्यान्न मत्ति। एव मेवैता न्क्षेत्रज्ञो भूत्वाऽनु प्रविश्यान्न मत्ति। स एतेषा मेव सलोकता॰ सायुज्य मश्नुते। अप पुन र्मृत्यु ञ्जयति। य एवँ वेद।। 42।। (न वेदैवँ वेदानुवाका अर्धमासानाञ्च मासानाञ्च नामधेयानि मुहूर्तेष्वार्ति मार्छति नव च। 10। इय महोरात्राणा॰ सं‘2’ज्ञानं पूर्वपक्षस्य प्रस्तुत मपरपक्षस्य मुहूर्ताना ञ्चित्र॰ केतु रर्धमासानां पवित्रँ यज्ञक्रतूना मग्निष्टोमो यज्ञक्रतूना मिदानीं मुहूर्तानां मुहूर्तान् वेदेदानी मथो द्वादश।)

❀ कश्चिद्ध वा अस्मा ल्लोका त्प्रेत्य। आत्मानँ वेद। अय मह मस्मीति। कश्चिथ्स्वँ लोक न्न प्रति प्र जानाति। अग्निमुग्धो हैव धूमतान्तः। स्वँ लोकन्न प्रति प्र जानाति। अथ यो हैवैत मग्नि॰ सावित्रँ वेद। स एवास्मा ल्लोका त्प्रेत्य। आत्मानँ वेद। अय मह मस्मीति।। 43।।❀ स स्वँ लोकं प्रति प्र जानाति। एष उ वेवैन न्तथ्सावित्रः। स्वर्गँ लोक मभि वहति। अहोरात्रैर्वा इद॰ सयुग्भि॰ क्रियते। इतिरात्रायादीक्षिषत। इतिरात्राय व्रत मुपागुरिति। तानिहा ऽनेवँविदुषः। अमुष्मि न्लोके शेवधि न्धयन्ति। धीत॰ हैव स शेवधि मनु परैति। अथ यो हैवैत मग्नि॰ सावित्रँ वेद।। 44।।❀ तस्य हैवाहोरात्राणि। अमुष्मि न्लोके शेवधि न्न धयन्ति। अधीत॰ हैव स शेवधि मनु परैति। भरद्वाजो ह त्रिभि रायुर्भि र्ब्रह्मचर्य मुवास। त॰ ह जीर्णि॰ स्थविर॰ शयानम्। इन्द्र उपव्रज्योवाच। भरद्वाज। यत्ते चतुर्थ मायु र्दद्याम्। किमेनेन कुर्या इति। ब्रह्मचर्य मेवैनेन चरेय मिति होवाच।। 45।।❀ त॰ ह त्री न्गिरिरूपा नविज्ञातानिव दर्शयाञ्चकार। तेषा॰ हैकैकस्मा न्मुष्टिनाऽऽददे। स होवाच। भरद्वाजे त्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतै स्त्रिभि रायुर्भि रन्ववोचथाः। अथ त इतर दननूक्तमेव। एहीमँ विद्धि। अयँ वै सर्वविद्येति।। 46।।❀ तस्मै हैत मग्नि॰ सावित्र मुवाच। त॰ स विदित्वा। अमृतो भूत्वा। स्वर्गँ लोक मियाय। आदित्यस्य सायुज्यम्। अमृतो हैव भूत्वा। स्वर्गँ लोक मेति। आदित्यस्य सायुज्यम्। य एवँ वेद। एषो एव त्रयी विद्या।। 47।।❀ यावन्त॰ ह वै त्रय्या

विद्यया लोक ञ्जयति। तावन्तँ लोक ञ्जयति। य एवँ वेद। अग्नेर्वा एतानि नामधेयानि। अग्ने रेव सायुज्य॰ सलोकता माप्नोति। य एवँ वेद। वायोर्वा एतानि नामधेयानि। वायो रेव सायुज्य॰ सलोकता माप्नोति। य एवँ वेद। इन्द्रस्य वा एतानि नामधेयानि।। 48।। ❀ इन्द्रस्यैव सायुज्य॰ सलोकता माप्नोति। य एवँ वेद। बृहस्पतेर्वा एतानि नामधेयानि। बृहस्पते रेव सायुज्य॰ सलोकता माप्नोति। य एवँ वेद। प्रजापतेर्वा एतानि नामधेयानि। प्रजापते रेव सायुज्य॰ सलोकता माप्नोति। य एवँ वेद। ब्रह्मणो वा एतानि नामधेयानि। ब्रह्मण एव सायुज्य॰ सलोकता माप्नोति। य एवँ वेद। स वा एषोऽग्नि रपक्षपुच्छो वायु रेव। तस्याग्नि र्मुखम्। असावादित्य श्शिरः। स यदेते देवते अन्तरेण। तथ्सर्व॰ सीव्यति। तस्मा थ्सावित्रः।। 49।। (अयमह मस्मीति वेद होवाच सर्वविद्येति विद्येन्द्रस्य वा एतानि नामधेयानि ब्रह्मण एव सायुज्य॰ सलोकता माप्नोति सप्त च। 11। अग्ने र्वायो रिन्द्रस्य बृहस्पतेः॰ प्रजापते र्ब्रह्मण स्स वै सप्त।)

(सं'2'ज्ञानं भूस्त्व मेव सँवथ्सरोऽसि भू राड्यसवे विपश्चिते प्रजापति र्देवा नियँ वाव सरघा कश्चि द्धैकादश। 11। सं'2'ज्ञान॰ राज्ञी मूर्धा हृदय एष सँवथ्सरो नार्धमासेषु नवचत्वारि॰शत्। 49। सं'2'ज्ञान॰ सावित्रः।)

## तृतीयकाण्डे एकादशः॰ प्रपाठकः (काठतेषु द्वितीयः)

### आ।का। 1नाचिकेत मन्त्राः 7(षडनुवाकाः 6)

❀ 卐 लोकोऽसि स्वर्गोऽसि। अनन्तोऽस्यपारोऽसि। अक्षितोऽस्यक्षय्योऽसि। तपसः॰ प्रतिष्ठा। त्वयीद मन्तः। विश्वँ यक्षँ विश्वं भूतँ विश्व॰ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तन्त्वोप दधे कामदुघ मक्षितम्। प्रजापति स्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद।। 1।।

❀ 卐 तपोऽसि लोके श्रितम्। तेजसः॰ प्रतिष्ठा। त्वयीद मन्तः। विश्वँ यक्षँ विश्वं भूतँ विश्व॰ सुभूतम्। विश्वस्य भर्तृ विश्वस्य जनयितृ। तत्त्वोप दधे कामदुघ मक्षितम्। प्रजापति स्त्वाऽऽसादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद।। 2।।

❀ 卐 तेजोऽसि तपसि श्रितम्। समुद्रस्य प्रतिष्ठा। त्वयीद मन्तः। विश्वँ यक्षँ विश्वं भूतँ विश्व॰ सुभूतम्। विश्वस्य भर्तृ विश्वस्य जनयितृ। तत्त्वोप दधे कामदुघ मक्षितम्। प्रजापति स्त्वाऽऽसादयतु। तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद।। 3।।

य एवँ वेद। एत मुद्यन्त मपियन्तश्चेति। आदित्यः पुण्यस्य वथ्सः। अथ पवित्राङ्गिरसः।। 47।।
(स्थोऽपोदकाभि र्वशी दधाथे अग्नि स्तयो रेतौ वथ्सौ भवति चत्वारि च। 10।)

卐 पवित्रवन्तः परि वाज मासते। पितैषां प्रत्नो अभि रक्षति व्रतम्। महस्समुद्रँ वरुण स्तिरो दधे। धीरा इच्छेकु र्धरुणेष्वारभम्।।

卐 पवित्रन्ते विततं ब्रह्मणस्पते। प्रभु र्गात्राणि पर्येषि विश्वतः। अतप्ततनूर्न तदामो अश्नुते। शृतास इद्वहन्त स्तथ्समाशत।।

卐 ब्रह्मा देवानाम्[1]।।

卐 असत स्सद्येततक्षुः।। 48।। ऋषय स्सप्तात्रिश्च यत्। सर्वे त्रयो अगस्त्यश्च। नक्षत्रै श्शङ्कृतो वसन्न्।।

अथ सवितु श्श्यावाश्वस्यावर्तिकामस्य।

卐 अमी य ऋक्षा निहितास उच्चा। नक्त न्ददृश्रे कुह चिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि। विचाकश च्चन्द्रमा नक्षत्रमेति।।

卐 तथ्सवितु र्वरेण्यम्। भर्गो देवस्य धीमहि।। 49।। धियो यो नःप्रचोदयात्।।

卐 तथ्सवितु र्वृणीमहे। वयन्देवस्य भोजनम्। श्रेष्ठꣳ सर्वधातमम्। तुरं भगस्य धीमहि।।

卐 अपागूहत सवितातृभीन्। सर्वा न्दिवो अन्धसः। नक्तन्ता न्यभव न्दृशे। अस्थ्यस्था सं भविष्यामः।।

卐 नाम नामैव नाम मे।। 50।। नपुꣳसकं पुमाꣳ स्त्र्यस्मि। स्थावरोऽस्म्यथ जङ्गमः। यजे यक्षि यष्टाहे च।।

卐 मया भूतान्ययक्षत। पशवो मम भूतानि। अनूबन्ध्योऽस्म्यहँ विभुः।।

卐 स्त्रिय स्सतीः। ता उ मे पुꣳस आहुः। पश्य दक्षण्वा न्न विचेत दन्धः। कवि र्यः पुत्त्र स्स इमा चिकेत।। 51।। यस्ता विजाना थ्सवितुः पिताऽसत्।।

卐 अन्धो मणि मविन्दत्। तमनङ्गुलि राऽवयत्। अग्रीवः प्रत्यमुञ्चत्। तमजिह्वा असश्चत।।

卐 ऊर्ध्वमूल मवाक्छाखम्। वृक्षँ यो वेद सम्प्रति। न स जातु जन श्श्रद्दध्यात्। मृत्यु र्मा मारयादितिः।।

卐 हसितꣳ रुदित ङ्गीतम्।। 52।। वीणापणव लासितम्। मृत जीवञ्च यत्किञ्चित्। अङ्गानिस्नेव विद्धि तत्।।

1

卐 अतृष्यङ्स्तृष्य ध्यायत्। अस्मा ज्जाता मे मिथू चरन्न्। पुत्रो निर्ऋत्या वैदेहः। अचेता यश्च चेतनः।।

卐 सतं मणि मविन्दत्। सोऽनङ्गुलि राऽवयत्। सोऽग्रीवः प्रत्यमुञ्चत्।। 53।। ❀ सोऽजिह्वो असश्चत।।

नैतमृषिं विदित्वा नगरं प्रविशेत्। यदि प्रविशेत्। मिथौ चरित्वा प्रविशेत्। तत्सम्भवस्य व्रतम्।

卐 आतमग्ने रथन्तिष्ठ। एकाश्व मेकयोजनम्। एकचक्र मेकधुरम्। वातध्राजि गतिँ विभो।।

卐 न रिष्यति न व्यथते।। 54।। ❀ नास्याक्षो यातु सज्जति। यच्छ्वेता न्रोहिता॰ श्चाग्नेः। रथे युक्त्वाऽधितिष्ठति।।

卐 एकया च दशभिश्च स्व भूते। द्वाभ्यामिष्टये विँशत्या च। तिसृभिश्च वहसे त्रिँशता च। नियुद्भि र्वायविहता विमुञ्च।। 55।। (ततश्च धीमहि नाम मे चिकेत गीतं प्रत्यमुञ्च व्यथते सप्त च। 11।)

❀ 卐 आ तनुष्व प्र तनुष्व। उद्धमाऽऽधम सन्धम। आदित्ये चन्द्रवर्णानाम्। गर्भ मा धेहि यः पुमान्।।

卐 इतस्सिक्त॰ सूर्यगतम्। चन्द्रमसे रसङ्कृधि। वारादञ्जनयाग्रेऽग्निम्। य एको रुद्र उच्यते।।

卐 असङ्ख्याता स्सहस्राणि। स्मर्यते न च दृश्यते।। 56।। ❀ एव मेत न्निबोधत।।

卐 आमन्द्रै रिन्द्र हरिभिः। याहि मयूररोमभिः। मा त्वा केचिन्नि ये मुरिन्न पाशिनः। दधन्वेव ता इहि।।

卐 मामन्द्रै रिन्द्र हरिभिः। यामि मयूर रोमभिः। मा मा केचिन्नि ये मुरिन्नपाशिनः। निधन्वेव ताँ '2' इमि।।

卐 अणुभिश्च महद्भिश्च।। 57।। ❀ निघृष्वै रसमायुतैः। कालैर् हरित्व मापन्नैः। इन्द्राऽऽयाहि सहस्रयुक्।।

卐 अग्नि र्विभ्राष्टिवसनः। वायु श्श्वेतसिकद्रुकः। सँवथ्सरो विषूवर्णैः। नित्या स्तेऽनुचरास्तव।।

卐 सुब्रह्मण्यो॰ सुब्रह्मण्यो॰ सुब्रह्मण्योम्। इन्द्राऽऽगच्छ हरिव आगच्छ मेधातिथेः। मेषवृषण श्वस्य मेने।। 58।। ❀ गौरावस्कन्दि न्नहल्यायै जार। कौशिक ब्राह्मण गौतम ब्रुवाण।।

卐 अरुणाश्वा इहाऽऽगताः। वसवः पृथिविक्षितः। अष्टौ दिग्वाससोऽग्नयः। अग्निश्च जातवेदा श्चे-त्येते।।

卐 ताम्राश्वा स्ताम्ररथाः। ताम्रवर्णा स्तथासिताः। दण्डहस्ताꣳ खादग्दतः। इतो रुद्राꣳ पराङ्गताः।। 59।।

❀ उक्तꣳस्थानं प्रमाणञ्च पुर इत।

卐 बृहस्पतिश्च सविता च। विश्वरूपै रिहाऽऽगताम्। रथेनोदकवर्त्मना। अप्सुषा इति तद्वयोः।।

उक्तो वेषो वासाꣳसि च। कालावयवाना मितꣳ प्रतीच्या । वासात्या इत्यश्विनोः। कोऽन्तरिक्षे शब्दङ्करोतीति। वासिष्ठो रौहिणो मीमाꣳसाञ्चक्रे। तस्यैषा भवति।

卐 वाश्रेव विद्यु[1]❈ -दिति। 卐 ब्रह्मण उदरणमसि। 卐 ब्रह्मण उदीरणमसि। 卐 ब्रह्मण आस्तरणमसि। 卐 ब्रह्मण उपस्तरणमसि।। 60।। (दृश्यते च मेने पराङ्गता श्चक्रे षट्च। 12।)

(अपक्रामत गर्भिण्यः - गर्भिणी सन्निवेशात्, मन्द्रस्थाय्युच्चारणं सामयिकम्)

❀ 卐 अष्टयोनी मष्टपुत्राम्। अष्टपत्नी मिमां महीम्। अहँ वेद न मे मृत्युः। न चामृत्यु रघाऽऽहरत्।।

卐 अष्टयो न्यष्टपुत्रम्। अष्टप दिद मन्तरिक्षम्। अहँ वेद न मे मृत्युः। न चामृत्यु रघाऽऽहरत्।।

卐 अष्टयोनी मष्टपुत्राम्। अष्टपत्नी ममू न्दिवम्।। 61।। ❀ अहँ वेद न मे मृत्युः। न चामृत्यु रघाऽऽहरत्।।

卐 सुत्रामाणं❈ 卐 मही मूषु❈।

卐 अदिति र्द्यौ रदिति रन्तरिक्षम्। अदिति र्माता स पिता स पुत्रः। विश्वे देवा अदितिꣳ पञ्च जनाः। अदिति र्जात मदिति र्जनित्वम्।।

卐 अष्टौ पुत्रासो अदितेः। ये जाता स्तन्वꣳ परि। देवाँ '2' उपप्रै थ्सप्तभिः।। 62।। ❀ परा मार्ताण्ड मास्यत्।।

卐 सप्तभिꣳ पुत्रै रदितिः। उप प्रैत्पूर्व्यँ युगम्। प्रजायै मृत्यवे तत्। परामार्ताण्ड माभर- दिति।ताननु क्रमिष्यामः।

卐 मित्रश्च 卐 वरुणश्च। 卐 धाता 卐 चार्यमा च। 卐 अꣳशश्च 卐 भगश्च। 卐 इन्द्रश्च 卐 विवस्वाꣳश्चे- त्येते।

卐 हिरण्यगर्भो[2]❈ 卐 हꣳस श्शुचिषत्[3]❈। 卐 ब्रह्म जज्ञान[4]❈ 卐 न्तदित्पद[1] - मिति।।

---

1

2

3

4

गर्भः॒ प्राजाप॒त्यः। अथ॒ पुरु॑ष॒ स्स॒प्तपु॑रुषः।। 63।। (अ॒मून्दिव॒ꣳ स॒प्तभि॑ रे॒ते च॒त्वारि॑ च। 13। य॒था॒स्था॒नङ्ग॑र्भिण्यः॑)

🏺❀ 卐 यो॑ऽसौ त॒प न्नु॒देति॑। स सर्वे॑षां भू॒ताना॑ं प्रा॒णाना॒दा यो॒देति॑। मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णाना॒दा यो॒द॑गाः।।

卐 अ॒सौ यो॑ऽस्त॒मेति॑। स सर्वे॑षां भू॒ताना॑ं प्रा॒णाना॒दा या॒स्त मेति॑। मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णाना॒दा॒यास्त॒ङ्गाः।।

卐 अ॒सौ य आ॒पूर्य॑ति। स सर्वे॑षां भू॒ताना॑ं प्रा॒णै रा॒पूर्य॑ति।। 64।। ❀ मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णै रा॒पूरि॑ष्ठाः।।

卐 अ॒सौ यो॑ऽप॒क्षीय॑ति। स सर्वे॑षां भू॒ताना॑ं प्रा॒णै र॑प॒क्षीयति। मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णै र॑पक्षेष्ठाः।। (1)।।

卐 अ॒मूनि॒ नक्ष॑त्राणि। सर्वे॑षां भू॒ताना॑ं प्रा॒णै र॑प प्रसर्प॑न्ति॒ चो॑थ्सर्प॑न्ति च। मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णै र॑प प्रसृ॑पत॒ मोथ्सृ॑पत।। 65।।

❀ 卐 इ॒मे मासा॑ श्चार्धमा॒साश्च॑। सर्वे॑षां भू॒ताना॑ं प्रा॒णै र॑पप्रसर्प॑न्ति॒ चोथ्सर्प॑न्ति च। मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णै र॑प प्रसृ॑पत॒ मोथ्सृ॑पत।।

卐 इ॒म ऋ॒तव॑ः। सर्वे॑षां भू॒ताना॑ं प्रा॒णै र॑पप्रसर्प॑न्ति॒ चोथ्सर्प॑न्ति॒ च। मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णै र॑प प्रसृ॑पत॒ मोथ्सृ॑पत।। (2)।।

卐 अ॒यꣳ सँव॑थ्सरः। सर्वे॑षां भू॒ताना॑ं प्रा॒णै र॑पप्रसर्प॑ति॒ चोथ्स॑र्पति च।। 66।। ❀ मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णै र॑पप्रसृ॒प मोथ्सृ॑प।।

卐 इ॒द म॑हः। सर्वे॑षां भू॒ताना॑ं प्रा॒णै र॑पप्रसर्प॑ति॒ चोथ्सर्प॑ति च। मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णै र॑पप्रसृ॒प मोथ्सृ॑प।।

卐 इ॒यꣳ रात्रि॑ः। सर्वे॑षां भू॒ताना॑ं प्रा॒णै र॑प प्रसर्प॑ति॒ चोथ्सर्प॑ति च। मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम्। मा मम॑ प्रा॒णै र॑पप्रसृ॒प मोथ्सृ॑प।।

卐 ओं भूर्भुव॒स्स्व॑ः।

卐 एतद्वो मिथु॒नं मा नो मिथु॑नꣳ री॒ढ्वम्।। 67।। (3)

---
1



Sri Sachchidananda Avadhoota Datta Peetham • Mysore

(प्राणै रापूर्यति मोथ्सृपत चोथ्सर्पति च मोथ्सृप द्वे च। 14। योऽसौ षोडशामूनि द्वादशाय श्चतुर्दश। उदेत्यस्त मेत्यापूर्य त्यपक्षीय त्यमूनि नक्षत्राणीमे मासा इम ऋतवोऽय॰ सँवथ्सर इदमह रिय॰ रात्रिर्दश।)

☸❀ अथाऽऽदित्यस्याष्टपुरुषस्य।

卐 वसूना मादित्या॰ स्थाने स्वतेजसा भानि। 卐 रुद्राणा मादित्याना॰ स्थाने स्वतेजसा भानि। 卐 आदित्याना मादित्याना॰ स्थाने स्वतेजसा भानि। 卐 सता॰ सत्यानाम्। आदित्याना॰ स्थाने स्वतेजसा भानि। 卐 अभिधून्वता मभिघ्नताम्। वातवतां मरुताम्। आदित्याना॰ स्थाने स्वतेजसा भानि। 卐 ऋभूणा मादित्याना॰ स्थाने स्वतेजसा भानि। 卐 विश्वेषा न्देवानाम्। आदित्याना॰ स्थाने स्वतेजसा भानि। 卐 सँवथ्सरस्य सवितुः। आदित्यस्य स्थाने स्वतेजसा भानि। 卐 ओं भूर्भुवस्स्वः। 卐 रश्मयो वो मिथुनं मा नो मिथुन॰ रीढ्वम्।। 68।। (ऋभूणा मादित्याना॰ स्थाने स्वतेजसा भानि षड्व। 15।)

☸❀ 卐 आरोगस्य स्थाने स्वतेजसा भानि। 卐 भ्राजस्य स्थाने स्वतेजसा भानि। 卐 पटरस्य स्थाने स्वतेजसा भानि। 卐 पतङ्गस्य स्थाने स्वतेजसा भानि। 卐 स्वर्णरस्य स्थाने स्वतेजसा भानि। 卐 ज्योतिषीमतस्य स्थाने स्वतेजसा भानि। 卐 विभासस्य स्थाने स्वतेजसा भानि। 卐 कश्यपस्य स्थाने स्वतेजसा भानि। 卐 ओं भूर्भुवस्स्वः। 卐 आपो वो मिथुनं मा नो मिथुन॰ रीढ्वम्।। 69।। (आरोगस्य दश। 16।)

Sri Sachidananda Avadhoota Datta Peetham • Mysore •

☸❀ अथ वायो रेकादशपुरुष स्यैकादशस्त्रीकस्य।

卐 प्रभ्राजमानाना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।

卐 व्यवदाताना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।

卐 वासुकिवैद्युताना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।

卐 रजताना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।

卐 परुषाणा॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।

卐 श्यामाना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।

卐 कपिलाना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।

卐 अतिलोहिताना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।

卐 ऊर्ध्वाना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।। 70।।
❀ 卐 अवपतन्ताना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।
卐 वैद्युताना॰ रुद्राणा॰ स्थाने स्वतेजसा भानि।
卐 प्रभ्राजमानीना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 व्यवदातीना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 वासुकिवैद्युतीना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 रजताना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 परुषाणा॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 श्यामाना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 कपिलाना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 अतिलोहितीना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 ऊर्ध्वाना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 अवपतन्तीना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 वैद्युतीना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि।
卐 ओं भूर्भुवस्स्वः।
卐 रूपाणि वो मिथुनं मा नो मिथुन॰ रीढ्वम्।। 71।। (ऊर्ध्वाना॰ रुद्राणा॰ स्थाने स्वतेजसा भान्यतिलोहितीना॰ रुद्राणीना॰ स्थाने स्वतेजसा भानि पञ्च च। 17।)

❀ अथाग्ने रष्टपुरुषस्य।

卐 अग्नेः पूर्वदिश्यस्य स्थाने स्वतेजसा भानि। 卐 जातवेदस उपदिश्यस्य स्थाने स्वतेजसा भानि। 卐 सहोजसो दक्षिणदिश्यस्य स्थाने स्वतेजसा भानि। 卐 अजिराप्रभव उपदिश्यस्य स्थाने स्वतेजसा भानि। 卐 वैश्वानरस्यापरदिश्यस्य स्थाने स्वतेजसा भानि। 卐 नर्यापस उपदिश्यस्य स्थाने स्वतेजसा भानि। 卐 पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजसा भानि। 卐 विसर्पिण उपदिश्यस्य स्थाने स्वतेजसा भानि। 卐 ओं भूर्भुवस्स्वः। 卐 दिशो वो मिथुनं मा नो मिथुन॰ रीढ्वम्।। 72।। (स्वरेकञ्च। 18। एतद्रश्मय आपो रूपाणि दिशः पञ्च।)

Sri Ganapathy Sachchidananda Avadhoota Datta Peetham, Mysore

☸❀卐 दक्षिणपूर्वस्या न्दिशि विसर्पी नरकः। तस्मान्नः परिपाहि। 卐 दक्षिणापरस्या न्दिश्यविसर्पी नरकः। तस्मान्नः परिपाहि। 卐 उत्तरपूर्वस्या न्दिशि विषादी नरकः। तस्मान्नः परिपाहि। 卐 उत्तरापरस्या न्दिश्यविषादी नरकः। तस्मान्नः परिपाहि।

卐 आ यस्मि'2' न्थ्सप्त वासवा[1]❁ 卐 इन्द्रियाणि शतक्रत[2]❁ वित्येते।। 73। (दक्षिण पूर्वस्यान्नव। 19।)

☸❀ 卐 इन्द्रघोषा वो वसुभिः पुरस्ता दुप दधताम्। 卐 मनोजवसो वः पितृभि र्दक्षिणत उप दधताम्। 卐 प्रचेता वो रुद्रैः पश्चा दुप दधताम्। 卐 विश्वकर्मा व आदित्यै रुत्तरत उप दधताम्। 卐 त्वष्टा वो रूपै रुपरिष्टा- दुप दधताम्। 卐 सँ'2'ज्ञानँ वः पश्चा- दिति। 卐 आदित्य स्सर्वोऽग्निः पृथिव्याम्। 卐 वायु रन्तरिक्षे। 卐 सूर्यो दिवि। 卐 चन्द्रमा दिक्षु। 卐 नक्षत्राणि स्वलोके। 卐 एवा ह्येव--। 卐 एवा ह्यग्ने--। 卐 एवा हि वायो--। 卐 एवा हीन्द्र --। 卐 एवा हि पूषन्न्--। 卐 एवा हि देवाः--।। 74।। (दिक्षु सप्त च। 20।)

☸❀ 卐 आप मापा मप स्सर्वाः। अस्मादस्मा दितोऽमुतः। अग्नि र्वायुश्च सूर्यश्च। सहस ञ्चस्करर्धिया।।

卐 वाय्वश्वा रश्मिपतयः। मरीच्यात्मानो अद्रुहः। देवी र्भुवनसूवरीः। पुत्त्रवत्त्वाय मे सुत।।

卐 महानाम्नी र्महामानाः। महसो महसस्स्वः।। 75।। ❀ देवीः पर्जन्यसूवरीः। पुत्त्रवत्त्वाय मे सुत।।

卐 अपाश्न्युश्नि मपारक्षः। अपाश्न्युष्णि मपारघम्। अपाघ्रा मप चावर्तिम्। अप देवी रितो हित।।

卐 वज्र न्देवी रजीताꣳश्च। भुवन न्देवसूवरीः। आदित्या नदिति न्देवीम्। योनिनोर्ध्व मुदीषत।। 76।।

❀ 卐 भद्र ङ्कर्णेभि श्शृणुयाम देवाः। भद्रं पश्ये माक्षभि र्यजत्राः। स्थिरै रङ्गै स्तुष्टुवाꣳस स्तनूभिः। व्यशेम देवहितँ यदायुः।।

卐 स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नःपूषा विश्ववेदाः। स्वस्ति न स्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पति र्दधातु।।

卐 केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठाꣳ शतधा हि। समाहितासो सहस्रधायसम्।

卐 शिवा न श्शन्तमा भवन्तु। दिव्या आप ओषधयः।।

卐 सुमृडीका सरस्वति। मा ते व्योम सन्दृशि।। 77।। (स्व रुदीषत वातरशना ष्षड्व। 21।)

---

1

2

☸❀ योऽपां पुष्पँ वेद। पुष्पवा न्प्रजावा न्पशुमा न्भवति। चन्द्रमा वा अपां पुष्पम्। पुष्पवा न्प्रजावा न्पशुमा न्भवति। य एवँ वेद। योऽपा मायतनँ वेद। आयतनवा न्भवति।

अग्निर्वा अपा मायतनम्। आयतनवा न्भवति। योऽग्ने रायतनँ वेद।। 78।। ❀ आयतनवा न्भवति। आपो वा अग्ने रायतनम्। आयतनवा न्भवति। य एवँ वेद। योऽपा मायतनँ वेद। आयतनवा न्भवति।

वायुर्वा अपा मायतनम्। आयतनवा न्भवति। यो वायो रायतनँ वेद। आयतनवा न्भवति।। 79।। ❀ आपो वै वायो रायतनम्। आयतनवा न्भवति। य एवँ वेद। योऽपा मायतनँ वेद। आयतनवा न्भवति।

असौ वै तप न्नपा मायतनम्। आयतनवा न्भवति। योऽमुष्य तपत आयतनँ वेद। आयतनवा न्भवति। आपो वा अमुष्य तपत आयतनम्।। 80।। ❀ आयतनवा न्भवति। य एवँ वेद। योऽपामायतनँ वेद। आयतनवा न्भवति।

चन्द्रमा वा अपा मायतनम्। आयतनवा न्भवति। यश्चन्द्रमस आयतनँ वेद। आयतनवा न्भवति। आपो वै चन्द्रमस आयतनम्। आयतनवा न्भवति।। 81।। ❀ य एवँ वेद। योऽपा मायतनँ वेद। आयतनवा न्भवति।

नक्षत्राणि वा अपा मायतनम्। आयतनवा न्भवति। यो नक्षत्राणा मायतनँ वेद। आयतनवा न्भवति। आपो वै नक्षत्राणा मायतनम्। आयतनवा न्भवति। य एवँ वेद।। 82।। ❀ योऽपा मायतनँ वेद। आयतनवा न्भवति।

पर्जन्यो वा अपा मायतनम्। आयतनवा न्भवति। यः॰ पर्जन्यस्याऽऽयतनँ वेद। आयतनवा न्भवति। आपो वै पर्जन्यस्याऽऽयतनम्। आयतनवा न्भवति। य एवँ वेद। योऽपा मायतनँ वेद।। 83।। ❀ आयतनवा न्भवति।

सँवथ्सरो वा अपा मायतनम्। आयतनवा न्भवति। यस्सँवथ्सरस्याऽऽयतनँ वेद। आयतनवा न्भवति। आपो वै सँवथ्सरस्याऽऽयतनम्। आयतनवा न्भवति। य एवँ वेद। योऽप्सु नावं प्रतिष्ठिताँ वेद। प्रत्येव तिष्ठति।। 84।।

❀ इमे वै लोका अप्सु प्रतिष्ठिताः। तदेषाऽभ्यनूक्ता।

卐 अपा॒ꣳरस मुदय॒ꣳसन्न्। सूर्ये शुक्र॒ꣳ समाभृतम्। अपा॒ꣳ रसस्य यो रसः। तँ वो गृह्णाम्युत्तम- मिति। इमे वै लोका अपा॒ꣳ रसः। तेऽमुष्मि न्नादित्ये समाभृताः। जानुदघ्नी मुत्तरवेदी ङ्खात्वा। अपां पूरयित्वा गुल्फदघ्नम्।। 85।। ❀ पुष्करपर्णैः॰ पुष्करदण्डैः॰ पुष्करैश्च सꣳस्तीर्य। तस्मिन्विहायसे। अग्निं

प्रणीयोपसमाधाय। ब्रह्मवादिनो वदन्ति। कस्मात्प्रणीतेऽय मग्नि श्चीयते। सा प्रणीतेऽय मफ्सु ह्यय श्चीयते। असौ भुवनेऽप्यनाहिताग्नि रेताः। तमभित एता अबीष्टका उप दधाति। अग्निहोत्रे दर्शपूर्णमासयोः। पशुबन्धे चातुर्मास्येषु।। 86।। ❀ अथो आहुः। सर्वेषु यज्ञक्रतुष्विति। एतद्धस्म वा आहु श्शण्डिलाः। कमग्नि श्चिनुते। सत्त्रिय मग्नि श्चिन्वानः। सँवथ्सरं प्रत्यक्षेण। कमग्नि श्चिनुते। सावित्र मग्नि श्चिन्वानः। अमु मादित्यं प्रत्यक्षेण। कमग्नि श्चिनुते।। 87।। ❀ नाचिकेत मग्नि श्चिन्वानः। प्राणा न्प्रत्यक्षेण। कमग्नि श्चिनुते। चातुर्होत्रिय मग्नि श्चिन्वानः। ब्रह्म प्रत्यक्षेण। कमग्नि श्चिनुते। वैश्वसृज मग्नि श्चिन्वानः। शरीरं प्रत्यक्षेण। कमग्नि श्चिनुते। उपानुवाक्य माशु मग्नि श्चिन्वानः।। 88।। ❀ इमा न्लोका न्प्रत्यक्षेण। कमग्नि श्चिनुते। इम मारुणकेतुक मग्नि श्चिन्वान इति। य एवासौ। इतश्चामुतश्चाऽव्यतीपाती। तमिति। योऽग्ने र्मिथूया वेद। मिथुनवा न्भवति। आपो वा अग्ने र्मिथूयाः। मिथुनवा न्भवति। य एवँ वेद।। 89।। (वेद भव त्यायतन मायतनवा न्भवति य एवँ वेद वेद तिष्ठति गुल्फदघ्न श्चातुर्मास्येष्वमु मादित्यं प्रत्यक्षेण कमग्निश्चिनुत उपानुवाक्य माशु मग्नि श्चिन्वानो मिथूया मिथुनवा न्भव त्येकञ्च। 22। पुष्प मग्नि र्वायु रसौ वै तप न्चन्द्रमा नक्षत्राणि पर्जन्य स्सँवथ्सरो योऽप्सु नाव मेतद्धस्म वै सत्त्रियꣳ सँवथ्सरꣳ सावित्र ममु न्नाचिकेतं प्राणाꣳ श्चातुर्होत्रियं ब्रह्म वैश्वसृजꣳ शरीर मुपानुवाक्य माशु मिमा न्लोका निम मारुणकेतुक मग्नि श्चिन्वानो य एवासौ।)

❀ आपो वा इद मास'2'न्थ्सलिल मेव। स प्रजापति रेकः पुष्करपर्णे समभवत्। तस्यान्त र्मनसि काम स्समर्तत। इदꣳ सृजेयमिति। तस्मा द्यत्पुरुषो मनसाऽभिगच्छति। तद्वाचा वदति। तत्कर्मणा करोति। तदेषाऽभ्यनूक्ता।

卐 काम स्तदग्रे समवर्तताधि। मनसो रेतः प्रथमँ यदासीत्।। 90।। ❀ सतो बन्धु मसति निरविन्दन्न्। हृदि प्रतीष्या कवयो मनीषे- ति। उपैन न्तदुप नमति। यत्कामो भवति। य एवँ वेद। स तपोऽतप्यत। स तपस्तप्त्वा। शरीर मधूनुत। तस्य यन्माꣳस मासीत्। ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्न्।। 91।। ❀ ये नखाः। ते वैखानसाः। ये वालाः। ते वालखिल्याः। यो रसः। सोऽपाम्। अन्तरतः कूर्मं भूतꣳ सर्पन्तम्। तमब्रवीत्। मम वै त्वङ्माꣳसा। समभूत्।। 92।। ❀ नेत्यब्रवीत्। पूर्व मेवाह मिहाऽऽस मिति। तत्पुरुषस्य पुरुषत्वम्। स सहस्रशीर्षा पुरुषः। सहस्राक्ष स्सहस्रपात्। भूत्वोदतिष्ठत्। तमब्रवीत्। त्वँ वै पूर्वꣳ समभूः। त्वमिदं पूर्वः कुरुष्वेति। स इत आदायापः।। 93।। ❀ अञ्जलिना पुरस्ता दुपादधात्। एवा ह्येवेति। तत आदित्य उदतिष्ठत्। सा प्राची दिक्। अथाऽऽरुणः केतु

दक्षिणत उपादधात्। एवा ह्यग्न इति। ततो वा अग्नि रुदतिष्ठत्। सा दक्षिणा दिक्। अथाऽऽरुणः केतुः पश्चा दुपादधात्। एवा हि वायो इति।। 94।। ❀ ततो वायु रुदतिष्ठत्। सा प्रतीची दिक्। अथाऽऽरुणः केतु रुत्तरत उपादधात्। एवाहीन्द्रेति। ततो वा इन्द्र उदतिष्ठत्। सोदीची दिक्। अथाऽऽरुणः केतुर्मध्य उपादधात्। एवाहि पूषन्निति। ततो वै पूषोदतिष्ठत्। सेयन्दिक्।। 95।। ❀ अथाऽऽरुणः केतु रुपरिष्टा दुपादधात्। एवाहि देवा इति। ततो देवमनुष्याः पितरः। गन्धर्वाप्सरस श्चोदतिष्ठन्न्। सोर्ध्वा दिक्। या विप्रुषो वि पराऽपतन्न्। ताभ्योऽसुरा रक्षꣳसि पिशाचा श्चोदतिष्ठन्न्। तस्मात्ते पराऽभवन्न्। विप्रुड्भ्यो हि ते समभवन्न्। तदेषाऽभ्यनूक्ता।। 96।।

❀ 卐 आपो ह यद्बृहती गर्भ मायन्न्। दक्ष न्दधाना जनयन्ती स्वयम्भुम्। तत इमेऽध्यसृज्यन्त सर्गाः।-- अद्भ्यो वा इदꣳ समभूत्। --तस्मादिदꣳ सर्वं ब्रह्म स्वयम्भ्व-ति।

तस्मादिदꣳ सर्वꣳ शिथिल मिवाध्रुव मिवाभवत्। प्रजापति र्वाव तत्। आत्मनाऽऽत्मानँ विधाय। तदेवानु प्राविशत्। तदेषाऽभ्यनूक्ता।। 97।।

❀ 卐 विधाय लोकान् विधाय भूतानि। विधाय सर्वाः प्रदिशो दिशश्च। प्रजापतिः प्रथमजा ऋतस्य। आत्मनाऽऽत्मान मभि सँ विवेशे- ति। सर्व मेवेद माप्त्वा। सर्व मवरुध्य। तदेवानु प्रविशति। य एवँ वेद।। 98।। (आसी दतिष्ठ न्नभू दपो वायो इति सेय न्दिगभ्यनूक्ताऽ भ्यनूक्ताऽष्टौ च। 23।)

❀ चतुष्टय्य आपो गृह्णाति। चत्वारि वा अपाꣳ रूपाणि। मेघो विद्युत्। स्तनयित्नु र्वृष्टिः। तान्येवाव रुन्धे। आतपति वर्ष्या गृह्णाति। ताः पुरस्ता दुप दधाति। एता वै ब्रह्मवर्चस्या आपः। मुखत एव ब्रह्मवर्चस मव रुन्धे। तस्मान्मुखतो ब्रह्मवर्चसितरः।। 99।। ❀ कूप्या गृह्णाति। ता दक्षिणत उप दधाति। एता वै तेजस्विनी रापः। तेज एवास्य दक्षिणतो दधाति। तस्मा द्दक्षिणोऽर्ध स्तेजस्वितरः। स्थावरा गृह्णाति। ताः पश्चादुप दधाति। प्रतिष्ठिता वै स्थावराः। पश्चादेव प्रति तिष्ठति। वहन्ती गृह्णाति।। 100।। ❀ ता उत्तरत उप दधाति। ओजसा वा एता वहन्ती रिवोद्गतीरिव आकूजतीरिव धावन्तीः। ओज एवास्योत्तरतो दधाति। तस्मादुत्तरोऽर्ध ओजस्वितरः। सम्भार्या गृह्णाति। ता मध्य उप दधाति। इयँ वै सम्भार्याः। अस्यामेव प्रति तिष्ठति। पल्वल्या गृह्णाति। ता उपरिष्टा दुपाऽऽदधाति।। 101।। ❀ असौ वै पल्वल्याः। अमुष्यामेव प्रति तिष्ठति। दिक्षूप दधाति। दिक्षु वा आपः। अन्नँ वा आपः। अद्भ्यो वा अन्न ञ्जायते। यदेवाद्भ्यो ऽन्न ञ्जायते। तदव रुन्धे। तँ वा एत मरुणाः केतवो वातरशना ऋषयोऽचिन्वन्न्। तस्मा दारुणकेतुकः। तदेषाऽभ्यनूक्ता।

卐 केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठा॰ शतधा हि। समाहितासो ऽसहस्रधायस- मिति। शतशश्चैव सहस्रशश्च प्रति तिष्ठति। य एत मग्नि श्चिनुते। य उ चैनमेवँ वेद।। 102।। (ब्रह्मवर्चसितरो वहन्तीर्गह्णाति ता उपरिष्टा दुपाऽऽदधात्यारुण केतुकोऽष्टौ च। 24।)

❀ जानुदघ्नी मुत्तरवेदी ङ्खात्वा। अपां पूरयति। अपा॰ सर्वत्वाय। पुष्करपर्ण॰ रुक्मं पुरुष मित्युप दधाति। तपो वै पुष्करपर्णम्। सत्य॰ रुक्मः। अमृतं पुरुषः। एताव द्वावास्ति। यावदेतत्। यावदेवास्ति।। 103।। ❀ तदवरुन्धे। कूर्म मुप दधाति। अपामेव मेध मव रुन्धे। अथो स्वर्गस्य लोकस्य समष्ट्यै।

卐 आपमापा मप स्सर्वाः। अस्मादस्मा दितोऽमुतः। अग्निर्वायुश्च सूर्यश्च। सह सञ्चस्करर्धिया - इति।

卐 वाय्वश्वा रश्मिपतयः[1]❃ ।

卐 लोकं पृणच्छिद्रं पृण।। 104।। ❀ यास्तिस्र॰ परमजाः।

卐 इन्द्रघोषा वो वसुभि[2]❃ 卐 रेवाह्येवे-ति[3]❃।

पञ्च चितय उपदधाति। पाङ्क्तोऽग्निः। यावानेवाग्निः। तञ्चिनुते। लोकंपृणया द्वितीया मुप दधाति। पञ्चपदा वै विराट्। तस्या वा इयं पादः। अन्तरिक्षं पादः। द्यौ॰ पादः। दिश॰ पादः। परोरजा॰ पादः। विराज्येव प्रतितिष्ठति। य एत मग्नि श्चिनुते। य उ चैनमेवँ वेद।। 105।। (अस्ति पृणान्तरिक्षं पादष्षट्। 25।)

❀ अग्निं प्रणीयोपसमाधाय। तमभित एता अबीष्टका उपदधाति। अग्निहोत्रे दर्शपूर्णमासयोः। पशुबन्धे चातुर्मास्येषु। अथो आहुः। सर्वेषु यज्ञक्रतुष्विति। अथ ह स्माहाऽऽरुण स्स्वायम्भुवः। सावित्र स्सर्वोऽग्नि रित्यननुषङ्गं मन्यामहे। नाना वा एतेषाँ वीर्याणि। कमग्नि श्चिनुते।। 106।। ❀ सत्रिय मग्नि श्चिन्वानः। कमग्नि श्चिनुते। सावित्र मग्नि श्चिन्वानः। कमग्नि श्चिनुते। नाचिकेत मग्नि श्चिन्वानः। कमग्नि श्चिनुते। चातुर्होत्रिय मग्नि श्चिन्वानः। कमग्नि श्चिनुते। वैश्वसृज मग्नि श्चिन्वानः। कमग्नि श्चिनुते।। 107।। ❀ उपानुवाक्य माशु मग्नि श्चिन्वानः। कमग्नि श्चिनुते। इम मारुणकेतुक मग्नि श्चिन्वान इति। वृषा वा अग्निः। वृषाणौ सꣳस्फालयेत्। हन्येतास्य यज्ञः। तस्मान्नानुषज्यः। सोत्तरवेदिषु क्रतुषु चिन्वीत। उत्तरवेद्या॰ ह्यग्नि श्चीयते। प्रजाकाम श्चिन्वीत।। 108।। ❀ प्राजापत्यो वा एषोऽग्निः।

1

2

3

प्राजापत्याः प्रजाः। प्रजावा न्भवति। य एवँ वेद। पशुकाम श्चिन्वीत। सँऽज्ञानँ वा एतत्पशूनाम्। यदापः। पशूनामेव सँ2ज्ञानेऽग्नि श्चिनुते। पशुमा न्भवति। य एवँ वेद।। 109।। ❀ वृष्टिकाम श्चिन्वीत। आपो वै वृष्टिः। पर्जन्यो वर्षुको भवति। य एवँ वेद। आमयावी चिन्वीत। आपो वै भेषजम्। भेषज मेवास्मै करोति। सर्वमायु रेति। अभिचरᳪ श्चिन्वीत। वज्रो वा आपः।। 110।। ❀ वज्र मेव भ्रातृव्येभ्यः प्रहरति। स्तृणुत एनम्। तेजस्कामो यशस्कामः। ब्रह्मवर्चसकाम स्वर्गकाम श्चिन्वीत। एताव द्वावास्ति। यावदेतत्। यावदेवास्ति। तदव रुन्धे। तस्यै तद्व्रतम्। वर्षति न धावेत्।। 111।। ❀ अमृतँ वा आपः। अमृतस्यानन्तरित्यै। नाप्सु मूत्रपुरीष ङ्कुर्यात्। न निष्ठीवेत्। न विवसन स्स्नायात्। गुह्यो वा एषोऽग्निः। एतस्याग्ने रनतिदाहाय। न पुष्करपर्णानि हिरण्यँ वाऽभितिष्ठेत्। एतस्याग्ने रनभ्यारोहाय। न कूर्मस्याश्नीयात्। नोदकस्याघातुकान्येन मोदकानि भवन्ति। अघातुका आपः। य एत मग्नि श्चिनुते। य उ चैनमेवँ वेद।। 112।। (चिनुते चिनुते प्रजाकाम श्चिन्वीत य एवं वेदाऽपो धावे दश्नीया च्चत्वारि च। 26।)

❀ 卐 इमानुकं भुवना सीषधेम। इन्द्रश्च विश्वे च देवाः।।

卐 यज्ञञ्च न स्तन्वञ्च प्रजाञ्च। आदित्यै रिन्द्र स्सह सीषधातु।।

卐 आदित्यै रिन्द्र स्सगणो मरुद्भिः। अस्माकं भूत्वविता तनूनाम्।।

卐 आप्लवस्व प्रप्लवस्व। आण्डीभवजमा मुहुः। सुखादी न्दुःखनिधनाम्। प्रति मुञ्चस्व स्वां पुरम्।। 113।।

❀ 卐 मरीचय स्स्वायम्भुवाः। ये शरीराण्यकल्पयन्न्। ते ते देहङ्कल्पयन्तु। मा च ते ख्यास्मती रिषत्।।

卐 उत्तिष्ठत मा स्वप्त। अग्निमिच्छध्वं भारताः। राज्ञ स्सोमस्य तृप्तासः। सूर्येण सयुजोषसः।।

卐 युवा सुवासाः[1] ❀।।

卐 अष्टाचक्रा नवद्वारा।। 114।। ❀ देवानां पू रयोध्या। तस्याᳵ हिरण्मयः कोशः। स्वर्गो लोको ज्योतिषाऽऽवृतः।।

卐 यो वै तां ब्रह्मणो वेद। अमृतेनाऽऽवृतां पुरीम्। तस्मै ब्रह्म च ब्रह्मा च। आयुः कीर्तिं प्रजान्ददुः।।

---

1

Sri Ganapathy Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 विभ्राजमाना९ हरिणीम्। यशसा सम्परीवृताम्। पुर९ हिरण्मयीं ब्रह्मा।। 115।।❀ विवेशाऽपराजिता।।

卐 पराङेत्यज्यामयी। पराङेत्यनाशकी। इह चामुत्र चान्वेति। विद्वा न्देवासुरा नुभयान्।।

卐 यत्कुमारी मन्द्रयते। यद्योषि द्यत्पतिव्रता। अरिष्टँ यत्किञ्च क्रियते। अग्नि स्तदनु वेधति।।

卐 अश्रतास श्शृतासश्च।। 116।।❀ यज्वानो येऽप्ययज्वनः। स्वर्यन्तो नापेक्षन्ते। इन्द्र मग्निश्च ये विदुः।।

卐 सिकता इव सँयन्ति। रश्मिभि स्समुदीरिताः। अस्माल्लोका दमुष्माच्च। ऋषिभि रदा त्पृश्निभिः।।

卐 अपेत वीत वि च सर्पताताः। येऽत्र स्थ पुराणा ये च नूतनाः। अहोभि रद्भि रक्तुभि र्व्यक्तम्।। 117।।❀ यमो ददा त्ववसान मस्मै।।

卐 नृमुणन्तु नृपात्वर्यः। अकृष्टा ये च कृष्टजाः। कुमारीषु कनीनीषु। जारिणीषु च ये हिताः।।

卐 रेतꣳपीता आण्डपीताः। अङ्गारेषु च ये हुताः। उभया न्पुत्रपौत्रकान्। युवेऽहँ यमराजगान्।।

卐 शतमिन्नु शरदः[1]❀।।

卐 अदो यद्ब्रह्म विलबम्। पितॄणाञ्च यमस्य च। वरुणस्याश्विनो रग्नेः। मरुताञ्च विहायसाम्।।

卐 कामप्रयवणं मे अस्तु। स ह्येवास्मि सनातनः। इति नाको ब्रह्मिश्रवो रायोधनम्। पुत्रा नापो देवी रिहाहिता।। 118।। (पुर न्नवद्धारा ब्रह्मा च व्यक्त९ शरदोऽष्टौ च। 27।)

❀ 卐 विशीर्ष्णी ङ्गृद्ध्रशीर्ष्णीञ्च। अपेतो निरृऋति९ हथः। परिबाधꣳ श्वेतकुक्षम्। निजङ्घ९ शबलोदरम्।।

卐 सतान् वाच्यायया सह। अग्ने नाशय सन्दृशः। ईर्ष्यासूये बुभुक्षाम्। मन्यु ङ्कृत्याञ्च दीधिरे। रथेन कि९शुकावता। अग्ने नाशय सन्दृशः।। 119।। (विशीर्ष्णी न्दश। 28।)

❀ 卐 पर्जन्याय प्रगायत। दिवस्पुत्राय मीढुषे। स नो यवस मिच्छतु।।

卐 इदँ वचꣳ पर्जन्याय स्वराजे। हृदो अस्त्वन्तर न्तद्युयोत। मयोभू र्वातो विश्वकृष्टय स्सन्त्वस्मे। सुपिप्पला ओषधी र्देवगोपाः।।

卐 यो गर्भ मोषधीनाम्। गवाङ्कृणो त्यर्वताम्। पर्जन्यꣳ पुरुषीणाम्।। 120।। (पर्जन्याय दश। 29।)

❀ 卐 पुन र्मामैत्विन्द्रियम्। पुन रायुꣳ पुनर्भगः। पुन र्ब्राह्मणमैतु मा। पुन र्द्रविण मैतु मा।।

---

1

卐 यन्मेऽद्य रेतः पृथिवी मस्कान्। यदोषधी रप्यसर द्यदापः। इद न्तत्पुन रा ददे। दीर्घायुत्वाय वर्चसे।।

卐 यन्मे रेतः प्रसिच्यते। यन्म आजायते पुनः। तेन मा ममृत ङ्कुरु। तेन सुप्रजस ङ्कुरु।। 121।। (पुनर्द्वे च। 30।)

卐 अद्य स्तिरोधा ऽजायत। तव वैश्रवण स्सदा। तिरो धेहि सपत्नान्नः। ये अपोऽश्नन्ति केचन।।

卐 त्वाष्ट्रीं मायाँ वैश्रवणः। रथ॰ सहस्रवन्धुरम्। पुरुश्चक्र॰ सहस्राश्वम्। आस्थायाऽऽ याहि नो बलिम्।।

卐 यस्मै भूतानि बलि मावहन्ति। धन ङ्गावो हस्ति हिरण्य मश्वान्।। 122।। ❀ असाम सुमतौ यज्ञियस्य। श्रियं बिभ्रतोऽन्नमुखीँ विराजम्।।

卐 सुदर्शने च क्रौञ्चे च। मैनागे च महागिरौ। सतद्वाट्टार गमन्ता। स॰हार्य न्नगर न्तव।।

इति मन्त्राः। कल्पोऽत ऊर्ध्वम्। यदि बलि॰ हरेत्।

卐 हिरण्यनाभये वितुदये कौबेरायायं बलिः।। 123।। ❀ सर्वभूताधिपतये नम-

इति। अथ बलि॰ हृत्वोपतिष्ठेत।

卐 क्षत्रङ्क्षत्रँ वैश्रवणः। ब्राह्मणा वय॰ स्मः। नमस्ते अस्तु मा मा हि॰सीः। अस्मात्प्रविश्यान्न मद्धी-ति। अथ तमग्नि मादधीत। यस्मिन्नेतत्कर्म प्रयुञ्जीत।

卐 तिरोधा भूः। तिरोधा भुवः।। 124।। ❀ तिरोधा स्वः। तिरोधा भूर्भुवस्स्वः। सर्वेषाँ लोकाना माधिपत्ये सीदे- ति। अथ तमग्नि मिन्धीत। यस्मि न्नेतत्कर्म प्रयुञ्जीत।

卐 तिरोधा भूस्स्वाहा।। 卐 तिरोधा भुवस्स्वाहा।। 卐 तिरोधा स्स्व स्स्वाहा।।

卐 तिरोधा भूर्भुव स्स्वस्स्वाहा।।

यस्मिन्नस्य काले सर्वा आहुतीर् हुता भवेयुः।। 125।। ❀ अपि ब्राह्मणमुखीनाः। तस्मिन्नह्नः काले प्रयुञ्जीत। पर स्सुप्तजना द्वेपि। मा स्म प्रमाद्यन्त माध्यापयेत्। सर्वार्था स्सिध्यन्ते। य एवँ वेद। क्षुध्य न्निद मजानताम्। सर्वार्था न सिध्यन्ते।

卐 यस्ते विघातुको भ्राता। ममान्तर्हृदये श्रितः।। 126।। ❀ तस्मा इम मग्रपिण्ड ञ्जुहोमि। समेऽर्था न्मा वि वधीत्। मयि स्वाहा।।

卐 राजाधिराजाय प्रसह्यसाहिने। नमो वयँ वैश्रवणाय कुर्महे। स मे कामा न्कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय। महाराजाय नमः।।

卐 केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठाꣳ शतधा हि। समाहितासो सहस्रधायसम्।।

卐 शिवा न श्शन्तमा भवन्तु। दिव्या आप ओषधयः।।

卐 सुमृडीका सरस्वति। मा ते व्योम सन्दृशि।। 127।। (अश्वा न्बलिर्भुवो भवेयु श्श्रितश्च सप्त च। 31।)

❀ सँवथ्सर मेतद्व्रत ञ्चरेत्। द्वौ वा मासौ। नियम स्समासेन। तस्मि न्नियमविशेषाः। त्रिषवण मुदकोपस्पर्शी। चतुर्थकालपानभक्त स्स्यात्। अहरहर्वा भैक्ष मश्नीयात्। औदुम्बरीभि स्समिद्भि रग्निं परिचरेत्।

卐 पुनर्मा मैत्विन्द्रिय[1]❀ मित्येतेनानुवाकेन। उद्धृतपरिपूताभि रद्भिः कार्य ङ्कुर्वीत।। 128।। ❀ असञ्चयवान्।

卐 अग्नये❀ 卐 वायवे❀ 卐 सूर्याय❀। 卐 ब्रह्मणे❀ 卐 प्रजापतये❀। 卐चन्द्रमसे❀ 卐 नक्षत्रेभ्यः❀। 卐 ऋतुभ्य❀ 卐 स्सँवथ्सराय❀। 卐 वरुणाया❀ 卐ऽरुणाये-ति व्रतहोमाः। प्रवर्ग्यव दादेशः। अरुणाः काण्डऋषयः। अरण्येऽधीयीरन्न्। भद्रङ्कर्णेभि[2]❀ रिति द्वे जपित्वा।। 129।। ❀ महानाम्नीभि[3]❀ (3) रुदकꣳ सꣳस्पर्श्य। तमाचार्यो दद्यात्। शिवानश्शन्तमे[4]❀- त्योषधी रालभते। सुमृडीके[5]ति❀ - भूमिम्। एव मपवर्गे। धेनु र्दक्षिणा। कꣳसँ वासश्च क्षौमम्। अन्यद्वा शुक्लम्। यथाशक्ति वा। एवꣳ स्वाध्यायधर्मेण। अरण्ये ऽधीयीत। तपस्वी पुण्यो भवति तपस्वी पुण्यो भवति।। 130।। (कुर्वीत जपित्वा स्वाध्यायधर्मेण द्वे च। 31।)

(भद्रꣳ स्मृति स्साकञ्जाना मक्ष्यतिताम्राण्यत्यूर्ध्वाक्ष आरोगः क्वेदमग्निश्च सहस्रवृ त्पवित्रवन्त आतनुष्वाष्टयोनीँ योऽसा वथाऽऽदित्य स्यारोगस्याथ वायो रथाग्ने र्दक्षिणपूर्वस्या मिन्द्रघोषा व आपमापाँ योऽपा मापो वै चतुष्टय्यो जानुदघ्नी मग्निं प्रणीयेमानुकँ विशीर्ष्णी पर्जन्याय पुन रूध्व स्सँवत्सर न्द्वात्रिꣳशत्। 31। भद्र ञ्ज्योतिषा तस्मिन्राजान ङ्कश्यपा त्सहस्रवृदिय न्नपुꣳसक मष्टयोनी

1

2

3

4

5

मवपतन्ताना मायतनवा न्भवति सतो बन्धुन्ता उत्तरतो वज्रमेव पुनर्मामैतु त्रि॒ꣳशदुत्तरशतम्। 130।
भद्रन्तपस्वी पुण्यो भवति तपस्वी पुण्यो भवति।।)

卐 भद्र ङ्कर्णेभि श्शृणुयाम देवाः। भद्रं पश्येमाक्षभि र्यजत्राः। स्थिरै रङ्गै स्तुष्टुवाꣳस स्तनूभिः। व्यशेम देवहितँ यदायुः।।

卐 स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नꣳ पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु।। 卐 ओं शान्ति श्शान्ति श्शान्तिः।।

## आरण्यके द्वितीयꣳ प्रपाठकः (स्वाध्याय प्रश्नः) (काठकेषु पञ्चमः)

卐 नमो ब्रह्मणे नमो अस्त्वग्नये नमꣳ पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि।। 卐 ओं शान्ति श्शान्ति श्शान्तिः।।

### स्वा।का। 1यज्ञोपवीत ब्राह्मणम् 1(एकोऽनुवाकः 1)

सह वै देवाना ञ्चासुराणाञ्च यज्ञौ प्रततावास्ताँ वयꣳ स्वर्गँ लोक मेष्यामो वयमेष्याम इति, तेऽसुरा स्सन्नह्य सहसैवाऽऽचर न्ब्रह्मचर्येण तपसैव देवा, स्तेऽसुरा अमुह्यꣳ, स्ते न प्राजानꣳस्ते पराऽभवन्ते न स्वर्गँ लोकमाय, न्प्रसृतेन वै यज्ञेन देवा स्स्वर्गँ लोकमाय, न्न प्रसृतेनासुरा न्पराऽभावय, न्प्रसृतो ह वै यज्ञोपवीतिनो यज्ञो प्रसृतोऽनुपवीतिनो, यत्किञ्च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव त,त्तस्मा द्यज्ञोपवीत्येवाधीयीत याजये द्यजेत वा यज्ञस्य प्रसृत्या, अजिनँ वासो वा दक्षिणत उपवीय दक्षिणं बाहु मुद्धरतेऽवधत्ते- सव्य मिति यज्ञोपवीत, -मेत देव विपरीतं प्राचीनाऽऽवीतꣳ सँवीतं मानुषम्।। 1।।

### 卐 स्वा।का। 1आदित्याभिध्यान ब्राह्मणम् 2(एकोऽनुवाकः 1)

रक्षाꣳसि ह वा पुरोऽनुवाके तपोऽग्र मतिष्ठन्त, ता न्प्रजापति र्वरेणोपामन्त्रयत, तानि वर मवृणीताऽऽदित्यो नो योद्धा इति, तान्प्रजापति रब्रवी द्योधयध्व मिति, तस्मा दुत्तिष्ठन्तꣳ ह वा तानि रक्षाꣳस्यादित्यँ योधयन्ति, याव दस्तमन्वगा त्तानि ह वा एतानि रक्षाꣳसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति, तदु ह वा एते ब्रह्मवादिनꣳ पूर्वाभिमुखा स्सन्ध्याया ङ्गायत्रिया ऽभिमन्त्रिता आप ऊर्ध्वँ वि क्षिपन्ति, ता एता आपो वज्री भूत्वा तानि रक्षाꣳसि मन्देहारुणे द्वीपे प्रक्षिपन्ति, यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मान मवधून्व, -न्त्युद्यन्त मस्तँ यन्त मादित्य मभिध्याय न्कुर्व न्ब्राह्मणो विद्वा न्थ्सकलं भद्रमश्नुते 卐ऽसावादित्यो ब्रह्मे-ति ब्रह्मैव सन्ब्रह्माप्येति य एवँ वेद।। 2।।

### स्वा।का। 1कूश्माण्ड मन्त्रा: 3(चत्वारोऽनुवाका: 4)

卐 यद्देवा देवहेळनन्देवास श्चकृमा वयम्। आदित्या स्तस्मान्मा मुञ्चतर्तस्यर्तेन मामित।।

卐 देवा जीवनकाम्या यद्वाचाऽनृत मूदिम। तस्मान्न इह मुञ्चत विश्वे देवा स्सजोषसः।।

卐 ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वति। कृतान्नः पाह्येनसो यत्किञ्चानृत मूदिम।।

卐 इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः। ते नो मुञ्चन्त्वेनसो यदन्यकृत मारिम।।

卐 सजातशꣳसा दुत जामिशꣳसा ज्यायस श्शꣳसा दुत वा कनीयसः। अनाधृष्ट न्देवकृतँ यदेन स्तस्मात्त्व मस्मा न्जातवेदो मुमुग्धि।। 3।।

卐 यद्वाचा यन्मनसा बाहुभ्या मूरुभ्या मष्ठीवद्भ्याꣳ शिश्नै र्यदनृत ञ्चकृमा वयम्। अग्नि र्मा तस्मा देनसः प्रमुञ्चतु चकृम यानि दुष्कृता।।

卐 येन त्रितो अर्णवा न्निर्बभूव येन सूर्य न्तमसो निर्मुमोच। येनेन्द्रो विश्वा अजहा दराती स्तेनाह ञ्ज्योतिषा ज्योति रानशान आक्षि।।

卐 यत्कुसीद मप्रतीत्तँ मयेह येन यमस्य निधिना चरामि। एत त्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि।।

卐 यन्मयि माता[1]❃ 卐यदा पिपेष[2]❃ 卐 यदन्तरिक्षँ❃[3] 卐 यदाशसा[4]❃ 卐ऽति क्रामामि[1]❃ 卐 त्रिते देवा[2]❃ 卐 दिवि जाता[3]❃ 卐 यदाप❃[4] 卐 इमं मे वरुण[5]❃ 卐 तत्त्वा यामि[6]❃ 卐 त्वन्नो अग्ने[7]❃ 卐 स त्वन्नो अग्ने❃[8] 卐 त्वमग्ने अयासि[9]❃।। 4।। (मुमुग्धि सप्त च। 3।)

---

[1] 卐 यन्मयि माता गर्भे सति। एन श्चकार यत्पिता। अग्निर्मा तस्मादेनसः।--गार्हपत्यः प्र मुञ्चतु। दुरिता यानि चकृम। करोतु मामनेनसम्।।

[2] 卐 यदा पिपेष मातरं पितरम्। पुत्रः प्र मुदितो धयन्न्। अहिꣳसि तौ पितरौ मया तत्। तदग्ने अनृणो भवामि।।

[3] 卐 यदन्तरिक्षं पृथिवी मुत द्याम्। यन्मातरं पितरँ वा जिहिꣳसिम। अग्निर्मा तस्मादेनसः।--गार्हपत्यः प्र मुञ्चतु। दुरिता यानि चकृम। करोतु मामनेनसम्।।

[4] 卐 यदाशसा निशसा यत्पराशसा। यदेन श्चकृमा नूतनँ यत्पुराणम्। अग्निर्मा तस्मादेनसः।।--गार्हपत्यः प्र मुञ्चतु। दुरिता यानि चकृम। करोतु मामनेनसम्।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 यद्दीव्यन्नृण महं बभूवादित्सन्वास ञ्गर जनेभ्यः। अग्नि र्मा तस्मा दिन्द्रश्च सँविदानौ प्रमुञ्चताम्।।

卐 यद्धस्ताभ्या ञ्चकर किल्बिषाण्यक्षाणाँ वग्नु मुपजिघ्नमानः। उग्रंपश्या च राष्ट्रभृच्च तान्यप्सरसा वनुदत्ता मृणानि।।

卐 उग्रंपश्ये राष्ट्रभृ त्किल्बिषाणि यदक्षवृत्त मनुदत्त मेतत्। नेन्न ऋणा नृणव इथ्समानो यमस्य लोके अधिरज्जुराय।।

卐 अव ते हेळ[10]❁ 卐 उदुत्तम[1]❁ 卐 मिमं मे वरुण[2]❁ 卐 तत्त्वा यामि[3]❁ 卐 त्वन्नो अग्ने[4]❁ 卐 स त्वन्नो अग्ने❁[5]

---

1 卐 अति क्रामामि दुरितँ यदेनः। जहामि रिप्रं परमे सधस्थे। यत्र यन्ति सुकृतो नापि दुष्कृतः। तमा रोहामि सुकृतान्नु लोकम्।।

2 卐 त्रिते देवा अमृजतैतदेनः। त्रित एतन्मनुष्येषु मामृजे। ततो मा यदि किञ्चिदानशे। अग्निर्मा तस्मादेनसः। गार्हपत्यः प्र मुञ्चतु। दुरिता यानि चकृम। करोतु मामनेनसम्।।

3 卐 दिवि जाता अप्सु जाताः। या जाता ओषधीभ्यः। अथो या अग्निजा आपः। ता न श्शुन्धन्तु शुन्धनीः।।

4 卐 यदापो नक्त न्दुरित.ञ्चराम। यद्वा दिवा नूतनँ यत्पुराणम्। हिरण्यवर्णा स्तत उत्पुनीत नः।।

5 卐 इमं मे वरुण श्रुधी हव मद्या च मृडय। त्वामवस्यु रा चके।।

6 卐 तत्त्वा यामि ब्रह्मणा वन्दमान स्तदा शास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः।।

7 卐 त्व न्नो अग्ने वरुणस्य विद्वा न्देवस्य हेडोऽव यासिसीष्ठाः। यजिष्ठो वह्नितम श्शोशुचानो विश्वा द्वेषाꣳसि प्र मुमुग्ध्यस्मत्।।

8 卐 स त्व न्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि।।

9 卐 त्वमग्ने अयाऽस्यया सन्मनसा हितः। अया सन् हव्य मूहिषेऽयानो धेहि भेषजम्।।

10 卐 अव ते हेडो वरुण नमोभि रव यज्ञेभि रीमहे हविर्भिः। क्षयन्नस्मभ्य मसुर प्रचेतो राज न्नेनाꣳसि शिश्रथः कृतानि।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham Mysuru

卐 सङ्कुसुको विकुसुको निर्ऋथो यश्च निस्वनः। ते2(ए)ऽस्मद्यक्ष्म मनागसो दूरा दूर मचीचतम्।।
卐 निर्यक्ष्म मचीचते कृत्या न्निर्ऋतिञ्च। तेन यो2 (ओ)ऽस्मथ्समृच्छातै तमस्मै प्रसुवामसि।।
卐 दुश्शऽसानुशऽसाभ्यां ङ्घणेनानुघणेन च। तेनान्यो2 (ओ) ऽस्मथ्समृच्छातै तमस्मै प्र सुवामसि।।
卐 सँवर्चसा पयसा सन्तनूभि रगन्महि मनसा सऽशिवेन। त्वष्टा नो अत्र विदधातु रायोऽनु मार्ष्टु तन्वो2 (ओ) यद्विलिष्टम्।। 4।। (कृत्या न्निर्ऋतिञ्च पञ्च च। 4।)
卐 आयुष्टे विश्वतो दध दय मग्नि र्वरेण्यः। पुनस्ते प्राण आ याति परा यक्ष्मऽ सुवामि ते।
卐 आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनि रेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्र मभि रक्षता दिमम्।।
卐 इम मग्न आयुषे वर्चसे कृधि तिग्म मोजो वरुण सऽ शिशाधि। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टि र्यथाऽसत्।।
卐 अग्न आयूऽषि पवस आ सुवोर्ज मिषञ्च नः। आरे बाधस्व दुच्छुनाम्।।
卐 अग्ने पवस्व स्वपा अस्मे वर्च स्सुवीर्यम्। दध द्रयिं मयि पोषम्।। 6।।
❀ 卐 अग्निर् ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयम्।।
卐 अग्ने जाता न्प्रणुदा न स्सपत्ना न्प्रत्यजाता न्जातवेदो नुदस्व। अस्मे दीदिहि सुमना अहेळ ञ्छर्मन्ते स्याम त्रिवरूथ उद्भौ।।

Sri Ganapati Sachchidananda Avadhoota Dattapeetham • Mysore •

---

1 卐 उदुत्तमं वरुण पाश मस्म.दवाधमँ वि मध्यमꣳ श्रथाय। अथा वय मादित्य व्रते तवानागसो~ अदितये स्याम।।
2 卐 इमं मे वरुण श्रुधी हव मद्या च मृडय। त्वामवस्यु रा चके।।
3 卐 तत्त्वा यामि ब्रह्मणा वन्दमान स्तदा शास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशऽस मा न आयुः प्र मोषीः।।
4 卐 त्व न्नो अग्ने वरुणस्य विद्वा न्देवस्य हेडोऽव यासिसीष्ठाः। यजिष्ठो वह्नितम श्शोशुचानो विश्वा द्वेषाऽसि प्र मुमुग्ध्यस्मत्।।
5 卐 स त्व न्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अव यक्ष्व नो वरुणऽ रराणो वीहि मृडीकऽ सुहवो न एधि।।

卐 सहसा जाता न्प्रणुदा न स्सपत्ना न्प्रत्यजाता न्जातवेदो नुदस्व। अधि नो ब्रूहि सुमनस्यमानो वयङ्‌ स्याम प्रणुदा न स्सपत्नान्।।

卐 अग्ने यो नोऽभितो जनो वृको वारो जिघाꣳसति। ताꣳस्त्वँ वृत्रह न्जहि वस्वस्मभ्य मा भर।।

卐 अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः। तँ वयꣳ समिधङ्कृत्वा तुभ्य मग्नेऽपि दध्मसि।। 7।।

❀ 卐 यो न श्शपा दशपतो यश्च न श्शपत श्शपात्। उषाश्च तस्मै निम्रुक्‌ सर्वं पापꣳ समूहताम्।।

卐 यो न स्सपत्नो यो रणो मर्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन।।

卐 यो मा न्द्वेष्टि जातवेदो यञ्चाह न्द्वेष्मि यश्च माम्। सर्वाꣳ स्तानग्ने सन्दह याꣳश्चाह न्द्वेष्मि ये च माम्।।

卐 यो अस्मभ्य मरातीया द्यश्च नो द्वेषते जनः। निन्दाद्यो अस्मा न्दिप्साच्च सर्वाꣳ स्तान्मष्मषा कुरु।।

卐 सꣳशितं मे ब्रह्म सꣳशितँ वीर्य1(अं) बलम्। सꣳशितङ्क्षत्रं मे जिष्णु यस्याह मस्मि पुरोहितः।।

卐 उदेषां बाहू अतिर मुद्वर्चो अथो बलम्। क्षिणोमि ब्रह्मणाऽमित्रा नुन्नयामि स्वाँ 2 अहम्।।

卐 पुन र्मनः पुन रायु र्म आगा त्पुन श्चक्षुः पुनश्श्रोत्रं म आगा त्पुनः प्राणः पुनराकूतं म आगा त्पुनश्चित्तं पुन राधीतं म आगात्। वैश्वानरो मेऽदब्ध स्तनूपा अव बाधता न्दुरितानि विश्वा।। 8।। (पोष न्दध्मसि पुरोहित श्चत्वारि च। 5।)

❀ 卐 वैश्वानराय प्रति वेदयामो यदीनृणꣳ सङ्गरो देवतासु। स एता न्पाशा न्प्रमुच न्प्र वेद स नो मुञ्चातु दुरिता दवद्यात्।।

卐 वैश्वानरः पवयान्नः पवित्रै र्यथ्सङ्गर मभिधावा म्याशाम्। अनाजान न्मनसा याचमानो यदत्रैनो अव तथ्सुवामि।।

卐 अमी ये सुभगे दिवि विचृतौ नाम तारके। प्रेहामृतस्य यच्छता मेत द्बद्धकमोचनम्।।

卐 वि जिहीर्ष्व लोका न्कृधि बन्धा न्मुञ्चासि बद्धकम्। योने रिव प्रच्युतो गर्भ स्सर्वा न्पथो अनुष्व।।

卐 स प्रजान न्प्रतिगृभ्णीत विद्वा न्प्रजापतिः प्रथमजा ऋतस्य। अस्माभि र्दत्त ञ्जरसः परस्ता दच्छिन्न न्तन्तु मनु सञ्चरेम।। 9।।

❀ 卐 तत न्तन्तु मन्वेके अनु सञ्चरन्ति येषा न्दत्तं पित्र्य मायनवत्। अबन्ध्वेके ददतः प्रयच्छा द्दातु ञ्चेच्छक्नवाꣳ स स्वर्ग एषाम्।।

Sri Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 आ रभेथा मनु स२ रभेथा२ समानं पन्था मवथो घृतेन। यद्वां पूर्तं परिविष्टँ यदग्नौ तस्मै गोत्रायेह जायापती स२रभेथाम्।।

卐 यदन्तरिक्षं पृथिवी मुत द्याँ यन्मातरं पितरँ वा जिहि२सिम। अग्नि र्मा तस्मा देनसो गार्हपत्य उन्नो नेष दुरिता यानि चकृम।।

卐 भूमि र्माताऽदिति र्नो जनित्रं भ्राताऽन्तरिक्ष मभिशस्त एनः। द्यौर्नः पिता पितृयाच्छं भवासि जामि मित्वा मा विविथ्सि लोकात्।।

卐 यत्र सुहार्द स्सुकृतो मदन्ते विहाय रोग न्तन्वा(आ२) स्वायाम्। अश्लोणाङ्गै रह्रुता स्स्वर्गे तत्र पश्येम पितरञ्च पुत्रम्।।

卐 यदन्न मद्म्यनृतेन देवा दास्य न्नदास्य न्नुत वा करिष्यन्न्। यद्देवाना ञ्चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राह मग्निर्मा तस्मा दनृणङ्करोतु।।

卐 यदन्न मद्मि बहुधा विरूपँ वासो हिरण्य मुत गा मजा मविम्।। यद्देवाना ञ्चक्षुष्यागो अस्ति य देव किञ्च प्रतिजग्राह मग्नि र्मा तस्मा दनृण ङ्करोतु।।

卐 यन्मया मनसा वाचा कृत मेनः कदाचन। सर्वस्मा त्तस्मा न्मेळितो मोग्धि त्व२ हि वेत्थ यथातथम्।। 10।। (चरेम पुत्र२ षट्च। 6।)

## स्वा।का। 1कूश्माण्ड ब्राह्मणम् 3(द्वावनुवाकौ 2)

❀ वातरशना ह वा ऋषय श्श्रमणा ऊर्ध्वमन्थिनो बभूवु, स्तानृषयोऽर्थ मायꣳ स्ते निलाय मचरꣳ, स्तेऽनु प्रविशुः कूश्माण्डानि ता२स्तेष्वन्वविन्द,ञ्छ्रद्धया च तपसा च तानृषयो ऽब्रुव,न्कथा निलायञ्चरथेति त ऋषी नब्रुव, न्नमो वोऽस्तु भगवन्तोऽस्मि न्धाम्नि केन व स्सपर्यामेति, तानृषयोऽब्रुव-न्पवित्र न्नो ब्रूत येनारेपस स्स्यामेति, त एतानि सूक्तान्यपश्यन् यद्देवा देवहेळनँ- यददीव्यन्नृणमहं बभूवा-ऽऽयुष्टे विश्वतो दध दित्येतै राज्य ञ्जुहुत- वैश्वानराय प्रतिवेदयाम इत्युपतिष्ठत- यदर्वाचीन मेनो भ्रूणहत्याया स्तस्मा न्मोक्ष्यध्व इति, त एतै रजुहवु स्तेऽरेपसोऽभव, न्कर्माऽऽदिष्वेतै र्जुहुया त्पूतो देवलोका न्थ्समश्नुते।। 11।। 7।

❀ कूश्माण्डै र्जुहुया द्योऽपूत इव मन्येत यथा स्तेनो यथा भ्रूणहैव मेष भवति योऽयोनौ रेत स्सिञ्चति यदर्वाचीन मेनो भ्रूणहत्याया स्तस्मा न्मुच्यते, यावदेनो दीक्षा मुपैति दीक्षित एतै स्सतति जुहोति, सँवथ्सर न्दीक्षितो भवति सँवथ्सरा देवाऽऽत्मानं पुनीते मास न्दीक्षितो भवति यो मास स्स सँवथ्सर

स्सँवथ्सरा देवाऽऽत्मानं पुनीते, चतुर्वि॑ꣳशति॑ꣳ रात्री दीक्षितो भवति चतुर्वि॑ꣳशति रर्धमासा स्सँवथ्सर स्सँवथ्सरा देवाऽऽत्मानं पुनीते, द्वादश रात्री दीक्षितो भवति द्वादश मासा स्सँवथ्सर स्सँवथ्सरा देवाऽऽत्मानं पुनीते, षड्रात्री दीक्षितो भवति षड्वा ऋतव स्सँवथ्सर स्सँवथ्सरा देवाऽऽत्मानं पुनीते, तिस्रो रात्री दीक्षितो भवति त्रिपदा गायत्री गायत्रिया एवाऽऽत्मानं पुनीते, न मा॑ꣳस मश्नीया न्न स्त्रिय मुपेया न्नोपर्यासीत जुगुप्सेतानृता, त्पयो ब्राह्मणस्य व्रतँ- यवागू राजन्यस्या-ऽऽमिक्षा वैश्यस्याथो सौम्येऽप्यध्वर एतद्व्रतं ब्रूया, द्यदि मन्येतोपदस्यामी त्योदन न्धाना स्सक्तू न्घृत मित्यनुव्रतये दात्मनोऽनुपदासाय।। 12।। ❀ । 8।

## स्वा।का। 1पञ्चयज्ञ ब्राह्मणम् 4(द्वावनुवाकौ 2)

❀ अजान् ह वै पृश्नी॑ꣳ स्तपस्यमाना न्ब्रह्म स्वयम्भ्वभ्यानर्ष त्त ऋषयोऽभव, न्तदृषीणा मृषित्व, न्तान्देवता मुपातिष्ठन्त यज्ञकामा, स्त एतं ब्रह्मयज्ञ मपश्य न्तमाऽहर न्तेनायजन्त, यदृचोऽध्यगीषत ताः पयआहुतयो देवाना मभवन्, यद्यजू॑ꣳषि घृताऽऽहुतयो यत्सामानि सोमाऽऽहुतयो यदथर्वाऽङ्गिरसो मध्वाहुतयो यद्ब्राह्मणानीतिहासा न्पुराणानि कल्पा न्गाथा नाराश॑ꣳसी र्मेदाहुतयो देवाना मभव न्ताभिः~ क्षुधं पाप्मान मपाघ्न, न्नपहतपाप्मानो देवा स्स्वर्गँ लोक माय, न्ब्रह्मण स्सायुज्य मृषयोऽगच्छन्न्।। 13।। ❀ । 9 ।

❀ पञ्च वा एते महायज्ञा स्सतति प्र तायन्ते सतति सन्तिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्य यज्ञो ब्रह्मयज्ञ इति, यदग्नौ जुहोत्यपि समिध न्तद्देवयज्ञ स्सन्तिष्ठते, यत्पितृभ्य स्स्वधा करोत्यप्यप स्तत्पितृयज्ञ स्सन्तिष्ठते, यद्भूतेभ्यो बलि॑ꣳ हरति तद्भूतयज्ञ स्सन्तिष्ठते, यद्ब्राह्मणेभ्योऽन्न न्ददाति तन्मनुष्ययज्ञ स्सन्तिष्ठते, यथ्स्वाध्याय मधीयीतैका मप्यृचँ यजु स्साम वा तद्ब्रह्मयज्ञ स्सन्तिष्ठते, यदृचोऽधीते पयसः कूल्या अस्य पितृन्थ्स्वधा अभि वहन्ति, यद्यजू॑ꣳषि घृतस्य कूल्या यथ्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कूल्या, यद्ब्राह्मणानीतिहासा न्पुराणानि कल्पा न्गाथा नाराश॑ꣳसी र्मेदसः कूल्या अस्य पितृन्थ्स्वधा अभि वहन्ति, यदृचोऽधीते पयआहुतिभिरेव तद्देवा॑ꣳ स्तर्पयति, यद्यजू॑ꣳषि घृताऽऽहुतिभि र्यथ्सामानि सोमाऽऽहुतिभि र्यदथर्वाङ्गिरसो मध्वाहुतिभि र्यद्ब्राह्मणानीतिहासा न्पुराणानि कल्पा न्गाथानाराश॑ꣳसी र्मेदाऽऽहुतिभिरेव तद्देवा॑ꣳ स्तर्पयति, त एन न्तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसे नान्नाद्येन च तर्पयन्ति।। 14।। ❀ ।10 ।

ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्या न्दिशि ग्रामा दच्छर्दिर्दृश उदीच्यां प्रागुदीच्याँ वोदित आदित्ये दक्षिणत उपवीयोपविश्य हस्तावविनिज्य त्रिराचामे, द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे, हृदय मालभ्य यत्त्रिरा॒ऽऽचामति तेन ऋचः प्रीणाति- यद्विः परिमृजति तेन यजूꣳषि- यथ्सकृदुपस्पृशति तेन सामानि- यथ्सव्यं पाणिं पादौ प्रोक्षति यच्छिर श्चक्षुषी नासिके श्रोत्रे हृदय मालभते- तेनाथर्वाऽङ्गिरसो ब्राह्मणानीतिहासा न्पुराणानि कल्पान्गाथा नाराशꣳसीः प्रीणाति, दर्भाणां मह दुपस्तीर्योपस्थङ्कृत्वा प्राङासीन स्स्वाध्याय मधीयीता,ऽपाँ वा एष ओषधीनाꣳ रसो यद्दर्भा स्सरसमेव ब्रह्म कुरुते, दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रा ॐवोꣳ मिति प्रति पद्यत, एतद्वै यजु स्त्रयीँ विद्यां प्रत्येषा वागेतत्परम मक्षरन्तदेत दृचाऽभ्युक्त ॐ मृचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदु र्यस्तन्न वेद किमृचा करिष्यति य इत्त द्विदुस्त इमे समासत- इति त्रीनेव प्रायुङ्क्त ॐ भू ॐ र्भुव ॐ स्स्व -रित्याहैतद्वै वाच स्सत्यँ यदेव वाच स्सत्यँ तत्प्रायुङ्क्त ॐऽथ सावित्री ङ्गायत्रीꣳ न्त्रिरन्वाह, पच्छोऽर्धर्चशो ऽनवानꣳ सविता श्रियः प्रसविता श्रिय मेवाऽऽप्नो त्यथो प्रज्ञातयैव प्रतिपदा छन्दाꣳसि प्रतिपद्यते।। 15।। 11 ।

ग्रामे मनसा स्वाध्याय मधीयीत दिवा नक्तँ वेति ह स्माऽऽह शौच आह्नेय उतारण्ये बल उत वाचोत तिष्ठन्नुत व्रजन्नुताऽऽसीन उत शयानोऽधीयीतैव स्वाध्याय न्तपस्वी पुण्यो भवति य एवँ विद्वा न्थ्स्वाध्याय मधीते

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि।। 16।। 12 ।

मध्यन्दिने प्रबल मधीयीतासौ खलु वावैष आदित्यो यद्ब्राह्मण स्तस्मात्तर्हि तेक्ष्णिष्ठ न्तपति तदेषाऽभ्युक्ता।

ॐ चित्र न्देवाना मुदगा दनीक ञ्चक्षु र्मित्रस्य वरुणस्याग्नेः। आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगत स्तस्थुषश्चे-ति, स वा एष यज्ञ स्सद्यः प्रतायते सद्य स्सन्तिष्ठते तस्य प्राख्साय मवभृथो नमो ब्रह्मण इति परिधानीया न्त्रिरन्वाहाप उपस्पृश्य गृहानेति ततो यत्किञ्च ददाति सा दक्षिणा।। 17।। 13 ।

☸❀ तस्य वा एतस्य यज्ञस्य मेघो हविर्धानँ विद्यु दग्नि र्वर्ष॰ हवि स्स्तनयित्नु र्वषट्कारो यदवस्फूर्जति सोऽनुवषट्कारो वायु रात्माऽमावास्या स्विष्टकृ,द्य एवँ विद्वा न्मेघे वर्षति विद्योतमाने स्तनय त्यवस्फूर्जति पवमाने वाया वमावास्याया॰ स्वाध्याय मधीते तप एव तत्तप्यते, तपो हि स्वाध्याय इत्युत्तम न्नाक॰ रोहत्युत्तम स्समानानां भवति, यावन्त॰ ह वा इमाँ वित्तस्य पूर्णा न्दद थ्स्वर्गँ लोक ञ्जयति तावन्तँ लोक ञ्जयति, भूया॰सञ्चाक्षय्य ञ्चाप पुन र्मृत्यु ञ्जयति ब्रह्मण स्सायुज्य ङ्गच्छति।। 18।। 14।

☸❀ तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्मा ऽशुचि र्यद्देशस्समृद्धि र्दैवतानि, य एवँ विद्वा न्महारात्र उषस्युदिते व्रजꣳ स्तिष्ठ न्नासीन श्शयानोऽरण्ये ग्रामे वा यावत्तरसꣳ स्वाध्याय मधीते सर्वान्लोका न्जयति सर्वान्लोका ननृणोऽनु सञ्चरति तदेषाऽभ्युक्ता।

卐 अनृणा अस्मि न्ननृणाः परस्मिꣳ स्तृतीये लोके अनृणा स्स्याम। ये देवयाना उत पितृयाणा स्सर्वान्पथो अनृणा आक्षीयेमे- त्यग्निँ वै जातं पाप्मा जग्राह तन्देवा आहुतीभिः पाप्मान मपाघ्न, न्नाहुतीनाँ यज्ञेन यज्ञस्य दक्षिणाभि र्दक्षिणानां ब्राह्मणेन ब्राह्मणस्य छन्दोभि श्छन्दसा॰ स्वाध्यायेना,पहतपाप्मा स्वाध्यायो, देवपवित्रं वा एत,त्तँ योऽनूथ्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाऽभ्युक्ता।

卐 य स्तित्याज सखिविद॰ सखायन्न तस्य वाच्यपि भागो अस्ति। यदी॰ शृणो त्यलक॰ शृणोति न हि प्र वेद सुकृतस्य पन्था- मिति तस्मा थ्स्वाध्यायोऽध्येतव्यो, यँ यङ्क्रतु मधीते तेनतेनास्येष्टं भव त्यग्ने र्वायो रादित्यस्य सायुज्य ङ्गच्छति, तदेषाऽभ्युक्ता।

卐 ये अर्वाङुत वा पुराणे वेदँ विद्वा॰स मभितो वदन्त्यादित्य मेव ते परि वदन्ति सर्वे अग्नि न्द्वितीय न्तृतीयञ्च ह॰स- मिति, यावती वैं देवता स्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्या न्नाश्लीलङ्कीर्तये देता एव देवताः प्रीणाति।। 19।। 15।

☸❀ रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वाऽनश्न न्त्रिस्स्वाध्यायँ वेद मधीयीत त्रिरात्रँ वा सावित्री ङ्गायत्री मन्वातिरेचयति, वरो दक्षिणा वरेणैव वरꣳ स्पृणो त्यात्मा हि वरः।। 20।। 16।

☸❀ दुहे ह वा एष छन्दा॰सि यो याजयति स येन यज्ञक्रतुना याजये थ्सोऽरण्यं परेत्य शुचौ देशे स्वाध्याय मेवैन मधीय न्नासीत, तस्यानशन न्दीक्षा स्थान मुपसद आसन॰ सुत्या वाग्जुहू र्मन उपभृ

द्धति ध्रुवा प्राणो हवि स्सामाध्वर्यु, स्स वा एष यज्ञः प्राणदक्षिणोऽनन्त दक्षिण स्समृद्धतरः।। 21।। 17।

## स्वा।का। अवकीर्ण प्रायश्चित्त ब्राह्मणम् 6, मन्त्राश्च 1(एकोऽनुवाक: 1)

☸❀ कतिधाऽवकीर्णी प्रविशति चतुर्धेत्याहु र्ब्रह्मवादिनो, मरुतः प्राणै- रिन्द्रं बलेन- बृहस्पतिं ब्रह्मवर्चसे-नाग्नि मेवेतरेण सर्वेण, तस्यैतां प्रायश्चित्तिँ विदाञ्चकार सुदेवः काश्यपो, यो ब्रह्मचार्यवकिरे-दमावास्यायाꣳ रात्र्या मग्निं प्रणीयोपसमाधाय द्विराज्यस्योपघात ञ्जुहोति

卐 कामावकीर्णो ऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा

卐 कामाभिद्रुग्धो ऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहे- त्यमृतँ वा आज्य ममृत मेवाऽऽत्म न्धत्ते, हुत्वा प्रयताञ्जलिः कवातिर्यङ्ङग्नि मभिमन्त्रयेत-

卐 सं मा सिञ्चन्तु मरुत स्समिन्द्र स्सं बृहस्पतिः। सं माऽय मग्नि स्सिञ्च त्वायुषा च बलेन चाऽऽयुष्मन्त ङ्करोत मे-ति, प्रतिहास्मै मरुतः प्राणा न्दधति प्रतीन्द्रो बलं प्रति बृहस्पति र्ब्रह्मवर्चसं प्रत्यग्नि रितरथ्सर्वꣳ, सर्वतनु र्भूत्वा सर्व मायुरेति, त्रिरभि मन्त्रयेत त्रिषत्या हि देवा, योऽपूत इव मन्येत स इत्थ ञ्जुहुया दित्थ मभि मन्त्रयेत, पुनीत एवाऽऽत्मान मायु रेवाऽऽत्म न्धत्ते, वरो दक्षिणा वरेणैव वरꣳ स्पृणोत्यात्मा हि वरः।। 22।। 18।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham Mysore

## स्वा।का। ब्रह्मोपस्थान मन्त्रा: 7, ब्राह्मणञ्च 1(एकोऽनुवाक: 1)

☸❀ 卐 भूः प्र पद्ये भुवः प्र पद्ये स्वः प्र पद्ये भूर्भुवस्स्वः प्र पद्ये ब्रह्म प्र पद्ये ब्रह्मकोशं प्र पद्येऽमृतं प्र पद्येऽ मृतकोशं प्र पद्ये, चतुर्जालं ब्रह्मकोशँ यं मृत्यु र्नाऽव पश्यति तं प्र पद्ये देवा न्प्र पद्ये देवपुरं प्र पद्ये, परीवृतो वरीवृतो ब्रह्मणा वर्मणाऽह न्तेजसा कश्यपस्य यस्मै नम,

स्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तरा हनु र्यज्ञोऽधरा विष्णुर् हृदयꣳ सँवथ्सरः प्रजनन मश्विनौ पूर्वपादा वत्रि र्मध्यं मित्रावरुणा वपरपादा वग्निः पुच्छस्य प्रथमङ्काण्ड न्तत इन्द्र स्ततः प्रजापति रभयञ्चतुर्थꣳ, स वा एष दिव्य श्शाक्वर श्शिशुमार स्तꣳ ह य एवँ वेदापपुनर्मृत्यु ञ्जयति, जयति स्वर्गँ लोक, न्नाध्वनि प्रमीयते नाऽग्नौ प्रमीयते नाऽप्सु प्रमीयते नानपत्यः प्रमीयते ऽलघ्वान्नो भवति,

卐 ध्रुव स्त्वमसि ध्रुवस्यक्षितमसि त्वं भूताना मधिपतिरसि त्वं भूतानाꣳ श्रेष्ठोऽसि त्वां भूतान्युप पर्यावर्तन्ते नमस्ते नम स्सर्वन्ते नमो नम श्शिशुकुमाराय नमः।। 23।। ।19।

## स्वा।का। 1दिगुपस्थान मन्त्राः 8(एकोऽनुवाकः 1)

☸❀ 卐 नमः॒ प्राच्यै॑ दि॒शे याश्च॑ दे॒वता॑ ए॒तस्यां॒ प्रति॑ वस न्त्ये॒ताभ्य॑श्च॒ नमो॒

卐 नमो॒ दक्षि॑णायै दि॒शे याश्च॑ दे॒वता॑ ए॒तस्यां॒ प्रति॑ वस न्त्ये॒ताभ्य॑श्च॒ नमो॒

卐 नमः॒ प्रती॒च्यै दि॒शे याश्च॑ दे॒वता॑ ए॒तस्यां॒ प्रति॑ वस न्त्ये॒ताभ्य॑श्च॒ नमो॒

卐 नम॒ उदी॒च्यै दि॒शे याश्च॑ दे॒वता॑ ए॒तस्यां॒ प्रति॑ वस न्त्ये॒ताभ्य॑श्च॒ नमो॒

卐 नम॑ ऊर्ध्वायै॑ दि॒शे याश्च॑ दे॒वता॑ ए॒तस्यां॒ प्रति॑ वस न्त्ये॒ताभ्य॑श्च॒ नमो॒

卐 नमोऽध॒रायै॑ दि॒शे याश्च॑ दे॒वता॑ ए॒तस्यां॒ प्रति॑ वस न्त्ये॒ताभ्य॑श्च॒ नमो॒

卐 नमो॑ ऽवान्त॒रायै॑ दि॒शे याश्च॑ दे॒वता॑ ए॒तस्यां॒ प्रति॑ वस न्त्ये॒ताभ्य॑श्च॒ नमो॒

卐 नमो गङ्गायमुनयो र्मध्ये॑ ये॑ वस॒न्ति॒ ते मे प्रसन्नाऽऽत्मान श्चिरञ्जीवितँ वर्धय॒न्ति॒ नमो गङ्गायमुनयो र्मु॑निभ्य॑श्च॒ नमो॒ नमो गङ्गायमुनयो र्मु॑निभ्यश्च नमः।। 24।।❀ 20।

(सह॒ रक्षा॑ꣳसि॒ यद्दे॒वा स्सप्त॒दश॒ यददी॒व्य न्पञ्च॒दशा॒ऽऽयु॑ष्टे॒ चतु॒स्त्रिꣳ॑श द्वैश्वानराय॒ षड्वि॑ꣳशति॒ वा॑तरशना ह कूश्माण्डै॒ रजान्॒ ह॒ पञ्च ब्रह्मयज्ञेन ग्रामे॑ म॒ध्यन्दि॒ने तस्य॒ वै॑ मेघ॒ स्तस्य॒ वै द्वौ॑ रिच्य॑ते दु॒हे ह॑ कति॒धाऽव॑कीर्णी भू र्नम॒ः प्राच्यै॑ विꣳश॒तिः। 20।

सह ब्रह्मयज्ञेन विꣳशतिः।। 20।। स॒ह मुनिभ्य॒श्च नमः।)

卐 ओम्। नमो॑ ब्र॒ह्मणे॒ नमो॑ अस्त्व॒ग्नये॒ नमः॒ पृथि॒व्यै नम॒ ओष॑धीभ्यः। नमो॑ वा॒चे नमो॑ वा॒चस्पत॑ये॒ नमो॒ विष्ण॑वे बृह॒ते क॑रोमि।। ओं शान्ति॒ श्शान्ति॒ श्शान्तिः॑।।

## आरण्यके तृतीयः प्रपाठकः

## प्रा।का। 3होतृ मन्त्राः त्रयोदशा)ऽनुवाकाः 13)

## आ। का।चातुर्होत्रिय चयन मन्त्राश्च 8

卐 ओम्।। तच्छँयो रा॑वृणीमहे। गा॒तुँ य॒ज्ञाय॑। गा॒तुँ य॒ज्ञप॑तये। दैवी॑ स्व॒स्ति र॑स्तु नः। स्व॒स्ति र्मा॑नुषेभ्यः। ऊ॒र्ध्वं जि॑गातु भेष॒जम्। शन्नो॑ अस्तु द्वि॒पदे॑। शञ्चतु॑ष्पदे।

卐 ओं शान्ति॒ श्शान्ति॒ श्शान्तिः॑।।

☸❀ 卐 चित्ति॒ स्स्रुक्। चि॒त्त माज्य॑म्। वाग्वेदिः॑। आधी॑तं ब॒र्हिः। केतो॑ अ॒ग्निः। वि॒ज्ञा॑त म॒ग्निः। वा॒क्पति॒र् होता॑। मन॑ उपव॒क्ता। प्रा॒णो ह॒विः। सामा॑ध्व॒र्युः। (दश होतारः)

卐 वाचस्पते विधे नामन्न्। विधेम ते नाम। विधेस्त्व मस्माक न्नाम। वाचस्पति स्सोमं पिबतु। आऽस्मासु नृम्ण न्धाथ्स्वाहा।। 1।। (ग्रहभागः) (अध्वर्युः॰ पञ्च च। 1।)

卐 पृथिवी होता। द्यौ रध्वर्युः। रुद्रोऽग्नीत्। बृहस्पति रुपवक्ता। (चतुर्होतारः)

卐 वाचस्पते वाचो वीर्येण। सम्भृततमेनाऽऽयक्ष्यसे। यजमानाय वार्यम्। आ सुव स्करस्मै। वाचस्पति स्सोमं पिबति। जजन दिन्द्र मिन्द्रियाय स्वाहा।। 2।। (ग्रहभागः) (पृथिवी होता दश। 2।)

卐 अग्निर् होता। अश्विनाऽध्वर्यू। त्वष्टाऽग्नीत्। मित्र उपवक्ता। (पञ्च होतारः)

卐 सोम स्सोमस्य पुरोगाः। शुक्र श्शुक्रस्य पुरोगाः। श्रातास्त इन्द्र सोमाः। वातापेर् हवनश्श्रुत स्स्वाहा।। 3।। (ग्रहभागः) (अग्निर्होताऽष्टौ। 3।)

卐 सूर्यन्ते चक्षुः। वातं प्राणः। द्यां पृष्ठम्। अन्तरिक्ष मात्मा। अङ्गै र्यज्ञम्। पृथिवी॰ शरीरैः। (षड्ढोतारः - पशुबन्धे)

卐 वाचस्पतेऽच्छिद्रया वाचा। अच्छिद्रया जुह्वा। दिवि देवावृध॰ होत्रा मेरयस्व स्वाहा।। 4।। (ग्रहभागः) (सूर्यन्ते नव। 4।)

卐 महाहविर् होता। सत्यहवि रध्वर्युः। अच्युतपाजा अग्नीत्। अच्युतमना उपवक्ता। अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ। अयास्य उद्गाता। (सप्त होतारः)

卐 वाचस्पते हृद्विधे नामन्न्। विधेम ते नाम। विधेस्त्व मस्माक न्नाम। वाचस्पति स्सोम मपात्। मा दैव्य स्तन्तु श्छेदि मा मनुष्यः। नमो दिवे। नमः॰ पृथिव्यै स्वाहा।। (ग्रहभागः) (अपा त्त्रीणि च। 5।)

卐 वाग्घोता। दीक्षा पत्नी। वातोऽध्वर्युः। आपोऽभिगरः। मनो हविः। तपसि जुहोमि। (षड्ढोतारः- चातुर्होत्रिये)

卐 भूर्भुव स्सुवः। ब्रह्म स्वयम्भु। ब्रह्मणे स्वयम्भुवे स्वाहा।। 6।। (ग्रहभागः) (वाग्घोता नव। 6।)

卐 ब्राह्मण एकहोता। स यज्ञः। स मे ददातु प्रजां पशू न्पुष्टिँ यशः। यज्ञश्च मे भूयात्।।

卐 अग्नि र्द्विहोता। स भर्ता। स मे ददातु प्रजां पशू न्पुष्टिँ यशः। भर्ता च मे भूयात्।।

卐 पृथिवी त्रिहोता। स प्रतिष्ठा।। 7।। ❀ स मे ददातु प्रजां पशू न्पुष्टिँ यशः। प्रतिष्ठा च मे भूयात्।।

卐 अन्तरिक्ष ञ्चतुर्होता। स विष्ठाः। स मे ददातु प्रजां पशू न्पुष्टिँ यशः। विष्ठाश्च मे भूयात्।।

卐 वायुः॰ पञ्चहोता। स प्राणः। स मे ददातु प्रजां पशू न्पुष्टिँ यशः। प्राणश्च मे भूयात्।। 8।।

❀ ॐ चन्द्रमा षड्ढोता। स ऋतू न्कल्पयाति। स मे ददातु प्रजां पशू न्पुष्टिँ यशः। ऋतवश्च मे कल्पन्ताम्।।

ॐ अन्नꣳ सप्तहोता। स प्राणस्य प्राणः। स मे ददातु प्रजां पशू न्पुष्टिँ यशः। प्राणस्य च मे प्राणो भूयात्।।

ॐ द्यौ रष्टहोता। सोऽनाधृष्यः।। 9।। ❀ स मे ददातु प्रजां पशू न्पुष्टिँ यशः। अनाधृष्यश्च भूयासम्।।

ॐ आदित्यो नवहोता। स तेजस्वी। स मे ददातु प्रजां पशू न्पुष्टिँ यशः। तेजस्वी च भूयासम्।।

ॐ प्रजापति र्दशहोता। स इदꣳ सर्वम्। स मे ददातु प्रजां पशू न्पुष्टिँ यशः। सर्वञ्च मे भूयात्।। 10।।

(प्रतिष्ठा प्राणश्च मे भूया दनाधृष्य स्सर्वञ्च मे भूयात्। 7। ब्राह्मणो यज्ञोऽग्नि र्भर्ता पृथिवी प्रतिष्ठाऽन्तरिक्षँ विष्ठा वायुः प्राण श्चन्द्रमा ऋतू नन्नꣳ स प्राणस्य प्राणो द्यौरनाधृष्य आदित्य स्स तेजस्वी प्रजापति स्स इदꣳ सर्वꣳ सर्वञ्च मे भूयात्।। )

❀ ॐ अग्नि र्यजुर्भिः। ॐ सविता स्तोमैः। ॐ इन्द्र उक्थामदैः। ॐ मित्रावरुणा वाशिषा। ॐ अङ्गिरसो धिष्णियै रग्निभिः। ॐ मरुत स्सदोहविर्धानाभ्याम्। ॐ आपः प्रोक्षणीभिः। ॐ ओषधयो बर्हिषा। ॐ अदिति र्वेद्या। ॐ सोमो दीक्षया।। 11।। ❀ ॐ त्वष्टेध्मेन। ॐ विष्णु र्यज्ञेन। ॐ वसव आज्येन। ॐ आदित्या दक्षिणाभिः। ॐ विश्वे देवा ऊर्जा। ॐ पूषा स्वगाकारेण। ॐ बृहस्पतिः पुरोधया। ॐ प्रजापति रुद्गीथेन। ॐ अन्तरिक्षं पवित्रेण। ॐ वायुः पात्रैः। ॐ अहꣳ श्रद्धया।। 12।।

(दीक्षया पात्रै रेकञ्च। 8।)

❀ ॐ सेनेन्द्रस्य। ॐ धेना बृहस्पतेः। ॐ पथ्या पूष्णः। ॐ वाग्वायोः। ॐ दीक्षा सोमस्य। ॐ पृथिव्यग्नेः। ॐ वसूना ङ्गायत्री। ॐ रुद्राणा न्त्रिष्टुक्। ॐ आदित्याना ञ्जगती। ॐ विष्णो रनुष्टुक्।। 13।। ❀ ॐ वरुणस्य विराट्। ॐ यज्ञस्य पङ्क्तिः। ॐ प्रजापते रनुमतिः। ॐ मित्रस्य श्रद्धा। ॐ सवितुः प्रसूतिः। ॐ सूर्यस्य मरीचिः। ॐ चन्द्रमसो रोहिणी। ॐ ऋषीणा मरुन्धती। ॐ पर्जन्यस्य विद्युत्। ॐ चतस्रो दिशः। ॐ चतस्रोऽवान्तरदिशाः। ॐ अहश्च रात्रिश्च। ॐ कृषिश्च वृष्टिश्च। ॐ त्विषि श्चापचितिश्च। ॐ आप श्चौषधयश्च। ॐ ऊर्क्च सूनृता च देवानां पत्नयः।। 14।। (अनुष्टुग्दिश ष्षट्च। 9।)

❀ ॐ देवस्य त्वा सवितुः प्रसवे। अश्विनो र्बाहुभ्याम्। पूष्णो हस्ताभ्यां प्रति गृह्णामि। राजा त्वा वरुणो नयतु देवि दक्षिणे- ऽग्नये हिरण्यम्।-तेनामृतत्व मश्याम्। वयो दात्रे। मयो मह्य मस्तु

Sri Sachchidananda Avadhoota Datta Peetham • Mysore •

प्रतिग्रहीत्रे। क इदङ्कस्मा अदात्। काम॰ कामाय। कामो दाता।। 15।।❀ काम॰ प्रतिग्रहीता। काम॰ समुद्र माविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाऽऽङ्गीरस॰ प्रतिगृह्णातु।।

卐 -- सोमाय वासः--। 卐 -- रुद्राय गाम्--। 卐 -- वरुणायाश्वम्--। 卐 -- प्रजापतये पुरुषम्।। 16।।❀ 卐 -- मनवे तल्पम्। 卐 -- त्वष्ट्रेऽजाम्--। 卐 -- पूष्णेऽविम्।-- निर्ऋत्या अश्वतरगर्दभौ--।-- हिमवतो हस्तिनम्। 卐 -- गन्धर्वाप्सराभ्य स्स्रगलङ्करणे--। 卐 -- विश्वेभ्यो देवेभ्यो धान्यम्। 卐 -- वाचेऽन्नम्। 卐 -- ब्रह्मण ओदनम्--। 卐 -- समुद्रायाऽऽपः --।। 17।।

❀ 卐 -- उत्तानायाङ्गीरसायानः --। 卐 -- वैश्वानराय रथम् --।

卐 वैश्वानर॰ प्रत्नथा नाक माऽरुहत्। दिव॰ पृष्ठं भन्दमान स्सुमन्मभिः। स पूर्वव ज्जनय ज्जन्तवे धनम्। समान मज्मा परियाति जागृविः।।

卐 --राजा त्वा वरुणो नयतु देवि दक्षिणे- वैश्वानराय रथम्।- तेनामृतत्व मश्याम्। वयो दात्रे। मयो मह्य मस्तु प्रतिग्रहीत्रे।। 18।।❀ क इदङ्कस्मा अदात्। काम॰ कामाय। कामो दाता। काम॰ प्रतिग्रहीता। काम॰ समुद्र माविश। कामेन त्वा प्रति गृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाऽऽङ्गीरस॰ प्रति गृह्णातु।। 19।। (दाता पुरुष माप॰ प्रतिग्रहीत्रे नव च। 10।)

❀ 卐 सुवर्णङ्घर्मं परिवेद वेनम्। इन्द्रस्याऽऽत्मान न्दशधा चरन्तम्। अन्त स्समुद्रे मनसा चरन्तम्। ब्रह्मान्वविन्द द्दशहोतार मर्णे।।

卐 अन्त॰ प्रविष्ट श्शास्ता जनानाम्। एक स्सन् बहुधा विचारः।।

卐 शत॰ शुक्राणि यत्रैकं भवन्ति। सर्वे वेदा यत्रैकं भवन्ति। सर्वे होतारो यत्रैकं भवन्ति। स मानसीन आत्मा जनानाम्।। 20।।

❀ 卐 अन्त॰ प्रविष्ट श्शास्ता जनाना॰ सर्वात्मा। सर्वा॰ प्रजा यत्रैकं भवन्ति। चतुर्होतारो यत्र सम्पदङ्गच्छन्ति देवैः। स मानसीन आत्मा जनानाम्। (दश होतृ हृदय मन्त्रः)

卐 ब्रह्मेन्द्र मग्नि ञ्जगत॰ प्रतिष्ठाम्। दिव आत्मान॰ सवितारं बृहस्पतिम्। चतुर्होतारं प्रदिशोऽनुक्लृप्तम्। वाचो वीर्य न्तपसाऽन्वविन्दत्।।

卐 अन्त॰प्रविष्ट ङ्कर्तार मेतम्। त्वष्टार॰ रूपाणि विकुर्वन्तँ विपश्चिम्।। 21।।❀ अमृतस्य प्राणँ यज्ञ मेतम्। चतुर्होतृणा मात्मान ङ्कवयो निचिक्युः।।

卐 अन्तः॑प्रविष्टङ्कर्तार॑ मे॒तम्। दे॒वानां॑ बन्धु निहि॑त॒ङ्गुहा॑सु। अ॒मृते॑न क्लृ॒प्तँ य॒ज्ञ मे॒तम्। चतु॑र्हो॒तृणा मा॒त्मान॑ङ्कवयो॒ निचि॑क्युः। (चतुर्होतृ हृदय मन्त्रः)

卐 श॒त न्नि॒युत॑ः परि॑वे॒द् विश्वा॒ विश्व॑वारः। विश्व॒मिदँ॑ वृणाति। इन्द्रस्या॒ऽऽत्मा निहि॑त॒ः पञ्च॑होता। अ॒मृत न्दे॒वाना॒ माबु॑ः प्रजाना॒म्।। 22।।

❀ 卐 इन्द्र॒॑ राजा॒न॑ सवि॒तार॑ मे॒तम्। वा॒यो रा॒त्मान॑ङ्कवयो॒ निचि॑क्युः। र॒श्मि॑ र॒श्मी॒नां मध्ये॒ तप॑न्तम्। ऋ॒तस्य॒ प॒दे क॒वयो॒ निपा॑न्ति।।

卐 य आ॒ण्डको॑शे भुव॑नं बि॒भर्ति॑। अनि॑र्भिण्ण॒ स्सन्न॑थ लो॒कान् वि॒चष्टे॑। यस्या॒ण्डको॑श॒॑ शुष्म॑ मा॒हुः प्रा॒ण मुल्ब॑म्। तेन॑ क्लृ॒प्तो॑ऽमृते॑ना॒हम॑स्मि। (पञ्चहोतृ हृदय मन्त्रः)

卐 सुव॒र्णङ्को॑श॒॑ रज॒सा॒ परी॑वृतम्। दे॒वाना॑ँ वसु॒धानी॑ँ वि॒राज॑म्।। 23।। ❀ अ॒मृत॑स्य पू॒र्णा न्तामु॑ क॒लाँ वि॑चक्षते। पाद॒॑ षड्ढो॒तु र्न कि॒ला॑ऽऽविवित्से।।

卐 येन॒र्तव॑ः पञ्च॒धोत॑क्लृ॒प्ताः। उ॒तवा॒ ष॒ड्वा म॒नसोत क्लृ॒प्ताः। त॒॑ षड्ढो॑तार मृ॒तुभि॑ः कल्प॑मानम्। ऋ॒तस्य॒ प॒दे क॒वयो॒ नि पा॑न्ति।।

卐 अन्तः॑प्रविष्ट ङ्क॒र्तार॑ मे॒तम्। अ॒न्त॒ श्च॒न्द्रम॑सि म॒नसा॒ चर॑न्तम्। स॒हैव सन्त॒न्न वि जा॑नन्ति दे॒वाः। इन्द्र॑स्या॒ऽऽत्मान॑ श॒तधा॒ चर॑न्तम्।। 24।। (षड्ढोतृ हृदय मन्त्रः)

卐 इन्द्रो॒ रा॒जा जग॑तो॒ य ई॒शे॑। स॒प्तहो॑ता स॒प्तधा॒ विक्लृ॑प्तः।।

卐 परे॒ण तन्तुं॑ परि॒षिच्य॑मानम्। अ॒न्तरा॑दि॒त्ये मन॑सा॒ चर॑न्तम्। दे॒वाना॒॑ हृद॒यं ब्रह्मा॒न्व॑विन्दत्।।

卐 ब्रह्मै॒तद्ब्रह्म॑ण॒ उज्ज॑भार। अ॒र्कँ॑ श्चोत॑न्त॒॑ सरि॒रस्य॒ मध्ये॑।।

卐 आ य॒स्मिन्थ्स॒प्त पे॑रवः। मेह॑न्ति ब॒हुला॒॑ श्रिय॑म्। ब॒ह्व॒श्वा॒ मिन्द्र॒ गोम॑तीम्।। 25।।

❀ 卐 अच्यु॑तां ब॒हुला॒॑ श्रिय॑म्। स ह॒रि॒र्व॑सु॒वित्त॑मः। पे॒रु रिन्द्रा॑य पिन्वते।।

卐 ब॒ह्व॒श्वा मिन्द्र॒ गोम॑तीम्। अच्यु॑तां ब॒हुला॒॑ श्रिय॑म्। म॒ह्य मिन्द्रो॒ नि य॑च्छतु।।

卐 श॒त॒॑ श॒ता अ॑स्य यु॒क्ता हरी॑णाम्। अ॒र्वाङाया॑तु॒ वसु॑भी र॒श्मि रिन्द्रः। प्रम॒॑हमाणो ब॒हुला॒॑ श्रिय॑म्। र॒श्मि रिन्द्र॒ स्सवि॒ता मे॒ निय॑च्छतु।। 26।।

❀ 卐 घृ॒त न्तेजो॒ मधु॑म दि॒न्द्रिय॑म्। म॒य्यय म॒ग्नि र्द॑धातु।।

卐 हरि॑ः पत॒ङ्गः॑ पट॒री सु॒पर्णः॑। दि॒वि॒क्षयो॒ नभ॑सा॒ य ए॑ति। स न॒ इन्द्र॑ः काम॒वर न्द॑दातु।।

卐 पञ्चार श्चक्रं परिवर्तते पृथु। हिरण्यज्योति स्सरिरस्य मध्ये। अजस्र ञ्ज्योति र्नभसा सर्पदेति। स न इन्द्रः कामवर न्ददातु।।

卐 सप्त युञ्जन्ति रथ मेकचक्रम्।। 27।। ❀ एको अश्वो वहति सप्तनामा। त्रिनाभिचक्र मजर मनर्वम्। येनेमा विश्वा भुवनानि तस्थुः।।

卐 भद्रं पश्यन्त उपसेदु रग्रे। तपो दीक्षा मृषय स्सुवर्विदः। ततः~ क्षत्रं बल मोजश्च जातम्। तदस्मै देवा अभि सन्नमन्तु।।

卐 श्वेतꣳ रश्मिं बोभुज्यमानम्। अपा न्नेतारं भुवनस्य गोपाम्। इन्द्र न्निचिक्युः परमे व्योमन्न्।। 28।।

❀ 卐 रोहिणीः पिङ्गला एकरूपाः। क्षरन्तीः पिङ्गला एकरूपाः। शतꣳ सहस्राणि प्रयुतानि नाव्यानाम्।।

卐 अयँ य श्श्वेतो रश्मिः। परि सर्व मिद ञ्जगत्। प्रजां पशू न्धनानि। अस्माक न्ददातु।।

卐 श्वेतो रश्मिः परि सर्वं बभूव। सुवन्मह्यं पशून् विश्वरूपान्।।

卐 पतङ्ग मक्त मसुरस्य मायया।। 29।। ❀ हृदा पश्यन्ति मनसा मनीषिणः। समुद्रे अन्तः कवयो विचक्षते। मरीचीनां पद मिच्छन्ति वेधसः।।

卐 पतङ्गो वाचं मनसा बिभर्ति। ताङ्गन्धर्वोऽवद द्गर्भे अन्तः। तान्द्योतमानाꣳ स्वर्यं मनीषाम्। ऋतस्य पदे कवयो निपान्ति।।

卐 ये ग्राम्याः पशवो विश्वरूपाः। विरूपा स्सन्तो बहुधैकरूपाः। अग्निस्ताꣳ अग्रे प्र मुमोक्तु देवः।। 30।। ❀ प्रजापतिः प्रजया सँविदानः।।

卐 वीतꣳ स्तुकेस्तुके। युव मस्मासु नि यच्छतम्। प्रप्र यज्ञपति न्तिर।।

卐 ये ग्राम्याः पशवो विश्वरूपाः। विरूपा स्सन्तो बहुधैकरूपाः। तेषाꣳ सप्ताना मिह रन्तिरस्तु। रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय।।

卐 य आरण्याः पशवो विश्वरूपाः। विरूपा स्सन्तो बहुधैकरूपाः।। 31।। ❀ वायु स्ताꣳ अग्रे प्र मुमोक्तु देवः। प्रजापतिः प्रजया सँविदानः।।

卐 इडायै सृप्त ङ्घृतव च्चराचरम्। देवा अन्वविन्द न्गुहा हितम्।।

卐 य आरण्याः पशवो विश्वरूपाः। विरूपा स्सन्तो बहुधैकरूपाः। तेषाꣳ सप्ताना मिह रन्ति रस्तु। रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय।। 32।। (सप्त होतृ हृदय मन्त्रः) (आत्मा जनानाँ विकुर्वन्तँ

Sri Ganapathi Sachchidananda Avadhoota Dattapeetham

विपश्चिं प्रजानाँ वसुधानीँ विराज श्चरन्त ङ्गोमतीं मे नियच्छ त्वेकचक्रँ व्योम न्मायया देव एकरूपा अष्टौ च। 11।)

卐 सहस्रशीर्षा पुरुषः। सहस्राक्ष स्सहस्रपात्। स भूमिँ विश्वतो वृत्वा। अत्यतिष्ठ द्दशाङ्गुलम्।।

卐 पुरुष एवेद॰ सर्वम्। यद्भूतँ यच्च भव्यम्। उतामृतत्वस्येशानः। यदन्नेनातिरोहति।।

卐 एतावानस्य महिमा। अतो ज्याया॰श्च पूरुषः।। 33।। ❀ पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृत न्दिवि।।

卐 त्रिपादूर्ध्व उदै त्पुरुषः। पादोऽस्येहाभवा त्पुनः। ततो विष्वङ्व्यक्रामत्। साशनानशने अभि।।

卐 तस्मा द्विराडजायत। विराजो अधि पूरुषः। स जातो अत्यरिच्यत। पश्चाद्भूमि मथो पुरः।। 34।।

❀ 卐 यत्पुरुषेण हविषा। देवा यज्ञ मतन्वत। वसन्तो अस्याऽऽसीदाज्यम्। ग्रीष्म इध्म श्शरद्धविः।।

卐 सप्तास्यास न्परिधयः। त्रिस्सप्त समिधः कृताः। देवा यद्यज्ञ न्तन्वानाः। अबध्न न्पुरुषं पशुम्।।

卐 तँ यज्ञं बर्हिषि प्रौक्षन्न्। पुरुष ञ्जात मग्रतः।। 35।। ❀ तेन देवा अयजन्त। साध्या ऋषयश्च ये।।

卐 तस्माद्यज्ञा थ्सर्वहुतः। सम्भृतं पृषदाज्यम्। पशू॰ स्ता॰श्चक्रे वायव्यान्। आरण्या न्ग्राम्याश्च ये।।

卐 तस्माद्यज्ञा थ्सर्वहुतः। ऋच स्सामानि जज्ञिरे। छन्दा॰सि जज्ञिरे तस्मात्। यजु स्तस्मा दजायत।। 36।।

❀ 卐 तस्मादश्वा अजायन्त। ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्। तस्मा ज्जाता अजावयः।।

卐 यत् पुरुषँ व्यदधुः। कतिधा व्यकल्पयन्न्। मुख ङ्किमस्य कौ बाहू। कावूरू पादा वुच्येते।।

卐 ब्राह्मणोऽस्य मुख मासीत्। बाहू राजन्यः कृतः।। 37।। ❀ ऊरू तदस्य यद्वैश्यः। पद्भ्या॰ शूद्रो अजायत।।

卐 चन्द्रमा मनसो जातः। चक्षो स्सूर्यो अजायत। मुखा दिन्द्र श्चाग्निश्च। प्राणा द्वायु रजायत।।

卐 नाभ्या आसी दन्तरिक्षम्। शीर्ष्णो द्यौ स्समवर्तत। पद्भ्यां भूमि र्दिश श्श्रोत्रात्। तथा लोका॰ अकल्पयन्न्।। 38।।

❀ 卐 वेदाह मेतं पुरुषं महान्तम्। आदित्यवर्ण न्तमसस्तु पारे। सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन् यदास्ते।।

卐 धाता पुरस्ता द्यमुदाजहार। शक्रः प्र विद्वान् प्रदिश श्चतस्रः। तमेवँ विद्वा नमृत इह भवति। नान्यः पन्था अयनाय विद्यते।।

卐 यज्ञेन यज्ञ मयजन्त देवाः। तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमान स्सचन्ते। यत्र पूर्वे साध्या स्सन्ति देवाः।। 39।। (पूरुष॰ पुरोऽग्रतोऽजायत कृतोऽकल्पय न्नासन्द्वे च। 12। ज्याया नधि पूरुषः। अन्यत्र पुरुषः।)

🏺❀ 卐 अद्भ्य स्सम्भूत॰ पृथिव्यै रसाच्च। विश्वकर्मण स्समवर्तताधि। तस्य त्वष्टा विदध द्रूप मेति। तत्पुरुषस्य विश्व माजान मग्रे।।

卐 वेदाह मेतं पुरुषं महान्तम्। आदित्यवर्ण न्तमस॰ परस्तात्। तमेवँ विद्वा नमृत इह भवति। नान्य॰ पन्था विद्यतेऽयनाय।।

卐 प्रजापति श्चरति गर्भे अन्तः। अजायमानो बहुधा वि जायते।। 40।। ❀ तस्य धीरा॰ परिजानन्ति योनिम्। मरीचीनां पद मिच्छन्ति वेधसः।।

卐 यो देवेभ्य आतपति। यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातः। नमो रुचाय ब्राह्मये।।

卐 रुचं ब्राह्म ञ्जनयन्तः। देवा अग्रे तदब्रुवन्न्। यस्त्वैवं ब्राह्मणो विद्यात्। तस्य देवा असन् वशे।।

卐 ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे। नक्षत्राणि रूपम्। अश्विनौ व्यात्तम्। इष्टं मनिषाण। अमुं मनिषाण। सर्वं मनिषाण।। 41।। (जायते वशे सप्त च। 13।)

## वै।का। 2सूक्तमन्त्राः 9(द्वावनुवाकौ 2)

卐 भर्ता सन्भ्रियमाणो बिभर्ति। एको देवो बहुधा निविष्टः। यदा भार न्तन्द्रयते स भर्तुम्। निधाय भारं पुन रस्त मेति।।

卐 तमेव मृत्यु ममृत न्तमाहुः। तं भर्तार न्तमु गोप्तार माहुः। स भृतो भ्रियमाणो बिभर्ति। य एनँ वेद सत्येन भर्तुम्।।

卐 सद्यो जात मुत जहात्येषः। उतो जरन्त न्न जहात्येकम्।। 42।। ❀ उतो बहूनेक मह र्जहार। अतन्द्रो देव स्सदमेव प्रार्थः।।

卐 यस्तद्वेद यत आबभूव। सन्धाञ्च या॰ सन्दधे ब्रह्मणैषः। रमते तस्मिन्नुत जीर्णे शयाने। नैन ञ्जहा त्यहस्सु पूर्व्येषु।।

卐 त्वामापो अनु सर्वा श्चरन्ति जानतीः। वथ्सं पयसा पुनानाः। त्वमग्नि॰ हव्यवाह॰ समिन्थ्से। त्वं भर्ता मातरिश्वा प्रजानाम्।। 43।।

❀ 卐 त्वँ यज्ञ स्त्वमु वेवासि सोमः। तव देवा हव मायन्ति सर्वे। त्वमेकोऽसि बहू ननु प्रविष्टः। नमस्ते अस्तु सुहवो म एधि।।

卐 नमो वामस्तु शृणुतः हवं मे। प्राणापाना वजिरः सञ्चरन्तौ। ह्वयामि वां ब्रह्मणा तूर्त मेतम्। यो मा न्द्वेष्टि तञ्जहितँ युवाना।।

卐 प्राणापानौ सँविदानौ जहितम्। अमुष्या सुनामा सङ्गसाथाम्।। 44।। ❀ तं मे देवा ब्रह्मणा सँविदानौ। वधाय दत्त न्तमहः हनामि।।

卐 असज्जजान सत आबभूव। यँ य ञ्जजान स उ गोपो अस्य। यदा भार न्तन्द्रयते स भर्तुम्। पराऽस्य भारं पुन रस्तमेति।।

卐 तद्वै त्वं प्राणो अभवः। महा न्भोगः प्रजापतेः। भुजः करिष्यमाणः। यद्देवा न्प्राणयो नव।। 45।। (एकं प्रजाना ङ्गसाथा न्नव। 14।)

❀ 卐 हरिः हरन्त मनुयन्ति देवाः। विश्वस्येशानँ वृषभं मतीनाम्। ब्रह्म सरूप मनु मेद माऽगात्। अयनं मा विवधी विं क्रमस्व।।

卐 मा छिदो मृत्यो मा वधीः। मा मे बलँ वि वृहो मा प्रमोषीः। प्रजां मा मे रीरिष आयु रुग्र। नृचक्षसन्त्वा हविषा विधेम।।

卐 सद्य श्चकमानाय। प्रवेपानाय मृत्यवे।। 46।। ❀ प्रास्मा आशा अशृण्वन्न्। कामेनाजनय न्पुनः।।

卐 कामेन मे काम आऽगात्। हृदयाद्धृदयं मृत्योः। यदमीषा मदः प्रियम्। तदैतूप मामभि।।

卐 परं मृत्यो अनु परेहि पन्थाम्। यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि। मा नः प्रजाः रीरिषो मोत वीरान्।।

卐 प्र पूर्व्यं मनसा वन्दमानः। नाधमानो वृषभ ञ्चर्षणीनाम्। यः प्रजाना मेकराण्मानुषीणाम्। मृत्युँ यजे प्रथमजामृतस्य।। 47।। (मृत्यवे वीराः श्चत्वारि च। 15।)

## सौ।का।एको)ग्रह मन्त्राः 2ऽवाकः 1)

❀ 卐 तरणि र्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्व माभासि रोचनम्।।

卐 उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत 卐 एष ते योनि स्सूर्याय त्वा भ्राजस्वते।। 48।। ❀ 16।

## आ।का। 3अग्निचयन मन्त्राः 5(त्रयोऽनुवाकाः(

❀ 卐 आप्यायस्व मदिन्तम सोम विश्वाभि रूतिभिः। भवा न स्सप्रथस्तमः।। 49।। ❀ 17।

卐 ईयुष्टेये पूर्वतरा मपश्य न्व्युच्छन्ती मुषसं मर्त्यासः। अस्माभि रूनु प्रतिचक्ष्याऽभू दो ते यन्ति ये अपरीषु पश्यान्।। 50।। 18।

卐 ज्योतिष्मतीन्त्वा सादयामि 卐 ज्योतिष्कृतन्त्वा सादयामि 卐 ज्योतिर्विदन्त्वा सादयामि 卐 भास्वतीन्त्वा सादयामि 卐 ज्वलन्तीन्त्वा सादयामि 卐 मल्मलाभवन्तीन्त्वा सादयामि 卐 दीप्यमानान्त्वा सादयामि 卐 रोचमानान्त्वा सादया卐म्यजस्रान्त्वा सादयामि 卐 बृहज्ज्योतिष न्त्वा सादयामि 卐 बोधयन्तीन्त्वा सादयामि 卐 जाग्रतीन्त्वा सादयामि।। 51।। 19।

## वै।का। 14अश्वमेध मन्त्राः 13(द्वावनुवाकौ 2)

卐 प्रयासाय स्वाहा 卐ऽऽयासाय स्वाहा 卐 वियासाय स्वाहा 卐 सँयासाय स्वाहो卐द्यासाय स्वाहा卐ऽवयासाय स्वाहा 卐 शुचे स्वाहा 卐 शोकाय स्वाहा 卐 तप्यत्वै स्वाहा 卐 तपते स्वाहा 卐 ब्रह्महत्यायै स्वाहा 卐 सर्वस्मै स्वाहा।। 52।। 20।

卐 चित्तꣳ सन्तानेन 卐 भवं यक्ना 卐 रुद्र न्तनिम्ना 卐 पशुपतिꣳ स्थूलहृदये卐नाग्निꣳ हृदयेन 卐 रुद्रँ लोहितेन 卐 शर्वं मतस्नाभ्यां 卐 महादेव मन्तःपार्श्वे卐नौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम्।। 53।। 21।

(चित्तिः पृथिव्यग्नि स्सूर्यन्ते चक्षु र्महाहविर्होता वाग्घोता ब्राह्मण एकहोताऽग्नि र्यजुर्भि स्सेनेन्द्रस्य देवस्य सुवर्णङ्घर्मꣳ सहस्रशीर्षाऽऽद्यो भर्ता हरि न्तरणि राप्यायस्वेयुष्टे ये ज्योतिष्मतीं प्रयासाय चित्त मेकविꣳशतिः। 21। चित्ति रग्नि र्यजुर्भि रन्तः प्रविष्टः प्रजापति स्तस्य धीरा ज्योतिष्मती न्त्रिपञ्चाशत्। चित्ति श्शिङ्गीनिकोश्याभ्याम्।)

ओम्।। तच्छँयो रावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्ति रस्तु नः। स्वस्ति र्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शन्नो अस्तु द्विपदे। शञ्चतुष्पदे। 卐 ओं शान्ति श्शान्ति श्शान्तिः।।

# SGS आरण्यके चतुर्थः प्रपाठकः (प्रवर्ग्य मन्त्रः)

## सौ।का। 1शुक्रिय मन्त्राः 7(द्विचत्वारिंशदनुवाकाः 42)

(ओं नमोऽनुमदन्तु।। ओं शान्ति श्शान्ति श्शान्तिः।। )

☬❀ 卐 नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये, नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो, मा मा मृषयो मन्त्रकृतो मन्त्रपतयः परा दु- र्माऽह मृषी न्मन्त्रकृतो मन्त्रपती न्परादाँ, वैश्वदेवीँ वाचमुद्यास॰ शिवा मदस्ताञ्जुष्टा न्देवेभ्य,

卐 श्शर्म मे द्यौश्शर्म पृथिवी शर्म विश्वमिद ञ्जगत्। शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्म प्रजापती।

卐 भूतँ वदिष्ये भुवनँ वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यँ वदिष्ये - तस्मा अह मिद मुपस्तरण मुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूया दुपस्तरणमहं प्रजायै पशूनां भूयासं

卐 प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं

卐 मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमती न्देवेभ्यो वाच मुद्यास॰ शुश्रूषेण्यां मनुष्येभ्य स्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु।।

卐 ओं शान्ति श्शान्ति श्शान्तिः।। 1।। 1।

☬❀ 卐 युञ्जते मन उत युञ्जते धियः। विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनावि देक इत्। मही देवस्य सवितुः परिष्टुतिः।।

卐 देवस्य त्वा सवितुः प्रसवे। अश्विनो र्बाहुभ्याम्। पूष्णो हस्ताभ्या माऽऽददे।।

卐 अभ्रिरसि नारिरसि। अध्वरकृद्देवेभ्यः।।

卐 उत्तिष्ठ ब्रह्मणस्पते।। 2।। ❀ देवयन्त स्त्वेमहे। उप प्र यन्तु मरुत स्सुदानवः। इन्द्र प्राशु र्भवा सचा।।

卐 प्रैतु ब्रह्मणस्पतिः। प्रदेव्येतु सूनृता। अच्छा वीर न्नर्यं पङ्क्तिराधसम्। देवा यज्ञ न्नयन्तु नः।।

卐 देवी द्यावापृथिवी अनु मे म॰साथाम्। 卐 ऋध्यास मद्य। 卐 मुखस्य शिरः।। 3।। ❀ 卐 मखाय त्वा। 卐 मखस्य त्वा शीर्ष्णे।

卐 इयत्यग्र आसीः। 卐 ऋध्यास मद्य। 卐 मखस्य शिरः। 卐 मखाय त्वा। 卐 मखस्य त्वा शीर्ष्णे।

卐 देवी र्वम्री रस्य भूतस्य प्रथमजा ऋतावरीः। 卐 ऋध्यास मद्य। 卐 मखस्य शिरः।। 4।। ❀ 卐 मखाय त्वा। 卐 मखस्य त्वा शीर्ष्णे।

卐 इन्द्रस्यौजोऽसि। 卐 ऋध्यास मद्य। 卐 मखस्य शिरः। 卐 मखाय त्वा। 卐 मखस्य त्वा शीर्ष्णे।

卐 अग्निजा असि प्रजापते रेतः। 卐 ऋध्यास मद्य। 卐 मखस्य शिरः।। 5।। ❀ 卐 मखाय त्वा। 卐 मखस्य त्वा शीर्ष्णे।

Sri Ganapathy Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 आयु र्धेहि प्राण न्धेहि। अपान न्धेहि व्यान न्धेहि। चक्षु र्धेहि श्रोत्र न्धेहि। मनो धेहि वाच न्धेहि। आत्मान न्धेहि प्रतिष्ठा न्धेहि। मा न्धेहि मयि धेहि।।

卐 मधु त्वा मधुला करोतु। 卐 मखस्य शिरोऽसि।। 6।। ❀ 卐 यज्ञस्य पदे स्थः। 卐 गायत्रेण त्वा छन्दसा करोमि। 卐 त्रैष्टुभेन त्वा छन्दसा करोमि। 卐 जागतेन त्वा छन्दसा करोमि।

卐 मखस्य रास्नाऽसि। 卐 अदितिस्ते बिल ङ्गृह्णातु। पाङ्क्तेन छन्दसा।

卐 सूर्यस्य हरसा श्राय। 卐 मखोऽसि।। 7।। (पते शिर ऋतावरीर् ऋध्यास मद्य मखस्य शिर शिर श्शिरोऽसि नव च। 2। इयति देवी रिन्द्रस्यौजो ऽस्यग्निजा अस्याऽऽयुर्धेहि प्राणं पञ्च।)

❀ 卐 वृष्णो अश्वस्य निष्पदसि। वरुणस्त्वा धृतव्रत आधूपयतु। मित्रावरुणयो र्ध्रुवेण धर्मणा।।

卐 अर्चिषे त्वा। 卐 शोचिषे त्वा। 卐 ज्योतिषे त्वा। 卐 तपसे त्वा।

卐 अभीमं महिना दिवम्। मित्रो बभूव सप्रथाः। उत श्रवसा पृथिवीम्।। 8।।

❀ 卐 मित्रस्य चर्षणीधृतः। श्रवो देवस्य सानसिम्। द्युम्न श्चित्रश्रवस्तमम्। 卐 सिद्ध्यै त्वा।

卐 देवस्त्वा सवितोद्वपतु। सुपाणि स्स्वङ्गुरिः। सुबाहु रुत शक्त्या।।

卐 अपद्यमानः॰ पृथिव्याम्। आशा दिश आ पृण। उत्तिष्ठ बृह न्भव।। 9।। ❀ ऊर्ध्व स्तिष्ठ ध्रुवस्त्वम्।।

卐 सूर्यस्य त्वा चक्षुषाऽन्वीक्षे। ऋजवे त्वा। साधवे त्वा। सुक्षित्यै त्वा भूत्यै त्वा।

卐 इद मह ममु मामुष्यायणँ विशा पशुभि र्ब्रह्मवर्चसेन पर्यूहामि।

卐 गायत्रेण त्वा छन्दसाऽऽच्छृणद्मि। 卐 त्रैष्टुभेन त्वा छन्दसाऽऽच्छृणद्मि। 卐 जागतेन त्वा छन्दसाऽऽच्छृणद्मि।

卐 छृणत्तु त्वा वाक्। 卐 छृणत्तु त्वोर्क्। 卐 छृणत्तु त्वा हविः।

卐 छृन्धि वाचम्। 卐 छृन्ध्यूर्जम्। 卐 छृन्धि हविः। 卐 देव पुरश्चर सघ्यासन्त्वा।। 10।। (पृथिवीं भव वार्ष्वड्व। 3।)

❀ 卐 ब्रह्म न्प्रवर्ग्येण प्र चरिष्यामः। होत र्घर्म मभिष्टुहि। अग्नीद्रौहिणौ पुरोडाशा वधिश्रय। प्रतिपस्थात र्विहर। प्रस्तोत स्सामानि गाय।।

卐 यजुर्युक्त॰ सामभि राक्तखन्त्वा। विश्वैर्देवै रनुमतं मरुद्भिः। दक्षिणाभिः॰ प्रततं पारयिष्णुम्। स्तुभो वहन्तु सुमनस्यमानम्। स नो रुच न्धेह्यहृणीयमानः। भूर्भुवस्सुवः। ओमिन्द्रवन्तः॰ प्र चरत।। 11।। (अहृणीयमानो द्वे च। 4।)

☸❀ 卐 ब्रह्म न्प्रचरिष्यामः। होत र्घर्मं मभिष्टुहि।
卐 यमाय त्वा मखाय त्वा। सूर्यस्य हरसे त्वा।
卐 प्राणाय स्वाहा 卐 व्यानाय स्वाहा卐ऽपानाय स्वाहा।
卐 चक्षुषे स्वाहा 卐 श्रोत्राय स्वाहा।
卐 मनसे स्वाहा 卐 वाचे सरस्वत्यै स्वाहा।
卐 दक्षाय स्वाहा 卐 क्रतवे स्वाहा।
卐 ओजसे स्वाहा 卐 बलाय स्वाहा।
卐 देवस्त्वा सविता मध्वाऽनक्तु।। 12।। ❀ 卐 पृथिवी न्तपस स्त्रायस्व।
卐 अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि।
卐 स९ सीदस्व महा९ असि। शोचस्व देववीतमः। वि धूम मग्ने अरुषं मियेध्य। सृज प्रशस्त दर्शतम्।।
卐 अञ्जन्ति यं प्रथयन्तो न विप्राः। वपावन्त न्नाग्निना तपन्तः। पितुर्न पुत्र उपसि प्रेष्ठः। आ घर्मो अग्नि मृतय न्नसादीत्।। 13।।
❀ 卐 अनाधृष्या पुरस्तात्। अग्ने राधिपत्ये। आयुर्मे दाः।
卐 पुत्रवती दक्षिणतः। इन्द्रस्याऽऽधिपत्ये। प्रजां मे दाः।
卐 सुषदा पश्चात्। देवस्य सवितु राधिपत्ये। प्राणं मे दाः।
卐 आश्रुति रुत्तरतः।। 14।। ❀ मित्रावरुणयो राधिपत्ये। श्रोत्रं मे दाः।
卐 विधृति रुपरिष्टात्। बृहस्पते राधिपत्ये। ब्रह्म मे दाः क्षत्त्रं मे दाः। तेजो मे धा वर्चो मे धाः। यशो मे धा स्तपो मे धाः। मनो मे धाः।
卐 मनो रश्वाऽसि भूरिपुत्त्रा। विश्वाभ्यो मा नाष्ट्राभ्य८ पाहि।। 15।। ❀ सूपसदा मे भूया मा मा हि९सीः।।
卐 तपोष्वग्ने अन्तरा९ अमित्रान्। तपाश९स मररुष८ परस्य। तपा वसो चिकितानो अचित्तान्। वि ते तिष्ठन्ता मजरा अयासः।।
卐 चितस्स्थ परिचितः। स्वाहा मरुद्भि८ परि श्रयस्व।

卐 मा असि। 卐 प्रमा असि। 卐 प्रतिमा असि।। 16।। ❀ 卐 सं मा असि। 卐 विमा असि। 卐 उन्मा असि।

卐 अन्तरिक्षस्या ऽन्तर्धि रसि। 卐 दिवन्तपस स्त्रायस्व।

卐 आभि र्गीर्भि र्यदतो न ऊनम्। आ प्यायय हरिवो वर्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि। भूयिष्ठभाजो अध ते स्याम।।

卐 शुक्रन्ते अन्य द्यजतन्ते अन्यत्।। 17।। ❀ विषुरूपे अहनी द्यौ रिवासि। विश्वा हि माया अवसि स्वधावः। भद्रा ते पूषन्निह रातिरस्तु।।

卐 अर्‌ह न्बिभर्‌षि सायकानि धन्व। अर्‌ह न्निष्कँ यजतँ विश्वरूपम्। अर्‌ह न्निद न्दयसे विश्व मब्भुवम्। न वा ओजीयो रुद्र त्वदस्ति।।

卐 गायत्रमसि। 卐 त्रैष्टुभमसि। 卐 जागतमसि। 卐 मधु मधु मधु।। 18।। (अनत्त्वसादी दुत्तरतः पाहि प्रतिमा असि यजतन्ते अन्य ज्जागत मस्येकञ्च। 5।)

❀ 卐 दश प्राची र्दश भासि दक्षिणा। दश प्रतीची र्दश भास्युदीचीः। दशोर्ध्वा भासि सुमनस्यमानः। स नो रुच न्धेह्यहृणीयमानः।।

卐 अग्निष्ट्वा वसुभिः पुरस्ता द्रोचयतु गायत्रेण छन्दसा। स मा रुचितो रोचय।।

卐 इन्द्रस्त्वा रुद्रै र्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसा। स मा रुचितो रोचय।।

卐 वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसा। स मा रुचितो रोचय।। 19।।

❀ 卐 द्युतानस्त्वा मारुतो मरुद्भि रुत्तरतो रोचय त्वानुष्टुभेन छन्दसा। स मा रुचितो रोचय।।

卐 बृहस्पतिस्त्वा विश्वै र्देवै रुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसा। स मा रुचितो रोचय।।

卐 रोचित स्त्वन्देवघर्म देवेष्वसि। रोचिषीयाहं मनुष्येषु।

卐 सम्राड्घर्म रुचित स्त्व न्देवेष्वायुष्मा२ स्तेजस्वी ब्रह्मवर्चस्यसि।

卐 रुचितोऽहं मनुष्येष्वायुष्मा२ स्तेजस्वी ब्रह्मवर्चसी भूयासम्।

卐 रुगसि। रुचं मयि धेहि।। 20।। ❀ मयि रुक्।

卐 दश पुरस्ता द्रोचसे। दश दक्षिणा। दश प्रत्यङ्ङ्। दशोदङ्ङ्। दशोर्ध्वो भासि सुमनस्यमानः। स न स्सम्राडिष मूर्जे न्धेहि। वाजी वाजिने पवस्व। रोचितो घर्मो रुचीय।। 21।। (रोचय धेहि नव च। 6।)

☸❀ 卐 अपश्यङ्गोपा मनिपद्यमानम्। आ च परा च पथिभि श्चरन्तम्। स सद्ध्रीची स्स विषूची र्वसानः। आवरीवर्ति भुवनेष्वन्तः।।

卐 अत्र प्रावीः। मधु माध्वीभ्यां मधु माधूचीभ्याम्। अनु वा न्देववीतये।।

卐 समग्नि रग्निना गत। सन्देवेन सवित्रा। सꣳसूर्येण रोचते।। 22।।

❀ 卐 स्वाहा समग्नि स्तपसा गत। सन्देवेन सवित्रा। सꣳसूर्येणारोचिष्ट।

卐 धर्ता दिवो वि भासि रजसः। पृथिव्या धर्ता। उरो रन्तरिक्षस्य धर्ता। धर्ता देवो देवानाम्। अमर्त्य स्तपोजाः।।

卐 हृदे त्वा मनसे त्वा। दिवे त्वा सूर्याय त्वा।। 23।। ❀ ऊर्ध्व मिम मध्वर ङ्कृधि। दिवि देवेषु होत्रा यच्छ।।

卐 विश्वासां भुवां पते। विश्वस्य भुवनस्पते। विश्वस्य मनसस्पते। विश्वस्य वचसस्पते। विश्वस्य तपसस्पते। विश्वस्य ब्रह्मणस्पते।।

卐 देवश्रू स्त्वन्देवघर्म देवा न्पाहि। 卐 तपोजाँ वाच मस्मे नियच्छ देवायुवम्।। 24।।

❀ 卐 गर्भो देवानाम्। 卐 पिता मतीनाम्। 卐 पतिः प्रजानाम्। 卐 मतिः कवीनाम्।

卐 सन्देवो देवेन सवित्राऽयतिष्ट। सꣳसूर्येणारुक्त। 卐 आयुर्दा स्त्वमस्मभ्य ङ्घर्म वर्चोदा असि।

卐 पिता नोऽसि पिता नो बोध। 卐 आयुर्धा स्तनूधाः पयोधाः। वर्चोदा वरिवोदा द्रविणोदाः।। 25।। ❀ अन्तरिक्षप्र उरो र्वरीयान्। अशीमहि त्वा मा मा हिꣳसीः।

卐 त्वमग्ने गृहपति र्विशामसि। विश्वासां मानुषीणाम्। शतं पूर्भि र्यविष्ठ पाह्यꣳहसः। समेद्धारꣳ शतꣳ हिमाः। तन्द्राविणꣳ हार्दिवानम्। इहैव रातयस्सन्तु।।

卐 त्वष्टीमती ते सपेय। सुरेता रेतो दधाना। वीरँ विदेय तव सन्दृशि। माऽहꣳ रायस्पोषेण वि योषम्।। 26।। (रोचते सूर्याय त्वा देवायुव न्द्रविणोदा दधाना द्वे च। 7।)

☸❀ 卐 देवस्य त्वा सवितुः प्रसवे। अश्विनो र्बाहुभ्याम्। पूष्णो हस्ताभ्या माददे।

卐 अदित्यै रास्नाऽसि। 卐 इड एहि। 卐 अदित एहि। 卐 सरस्वत्येहि। 卐 असावेहि। 卐 असावेहि। 卐 असावेहि।। 27।। ❀ 卐 अदित्या उष्णीष मसि। 卐 वायुरस्यैडः। 卐 पूषा त्वोपाव सृजतु। अश्विभ्यां प्र दापय।

卐 यस्ते स्तन श्शशयो यो मयोभूः। येन विश्वा पुष्यसि वार्याणि। यो रत्नधा वसुवि द्यस्सुदत्रः। सरस्वति तमिह धातवेऽकः।।

卐 उस्र घर्म९ शि९ष। उस्र घर्मं पाहि।। 28।। ❀ घर्माय शि९ष।

卐 बृहस्पति स्त्वोप सीदतु। 卐 दानवस्थ्स पेरवः। विष्वग्वृतो लोहितेन।

卐 अश्विभ्यां पिन्वस्व। सरस्वत्यै पिन्वस्व। पूष्णे पिन्वस्व। बृहस्पतये पिन्वस्व। इन्द्राय पिन्वस्व। इन्द्राय पिन्वस्व।। 29।।

❀ 卐 गायत्रोऽसि। 卐 त्रैष्टुभोऽसि। 卐 जागतमसि। 卐 सहोर्जो भागेनोप मेहि।

卐 इन्द्राश्विना मधुन स्सारघस्य। घर्मं पात वसवो यजता वट्।

卐 स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि।

卐 मधु हविरसि। 卐 सूर्यस्य तपस्तप। 卐 द्यावापृथिवीभ्यान्त्वा परि गृह्णामि।। 30।। ❀ 卐 अन्तरिक्षेण त्वोप यच्छामि। 卐 देवानान्त्वा पितृणा मनुमतो भर्तु९ शकेयम्।

卐 तेजोऽसि। तेजोऽनु प्रेहि। दिविस्पृञ्मा मा हि९सीः। अन्तरिक्षस्पृञ्मा मा हि९सीः। पृथिविस्पृञ्मा मा हि९सीः। सुवरसि सुवर्मे यच्छ। दिवँ यच्छ दिवो मा पाहि।। 31।। (एहि पाहि पिन्वस्व गृह्णामि नव च। 8।)

❀ 卐 समुद्राय त्वा वाताय स्वाहा। सलिलाय त्वा वाताय स्वाहा। अनाधृष्याय त्वा वाताय स्वाहा। अप्रतिधृष्याय त्वा वाताय स्वाहा। अवस्यवे त्वा वाताय स्वाहा। दुवस्वते त्वा वाताय स्वाहा। शिमिद्वते त्वा वाताय स्वाहा। अग्नये त्वा वसुमते स्वाहा। सोमाय त्वा रुद्रवते स्वाहा। वरुणाय त्वाऽऽदित्यवते स्वाहा।। 32।। ❀ बृहस्पतये त्वा विश्वदेव्यावते स्वाहा। सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा। यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा।

विश्वा आशा दक्षिणसत्। विश्वान्देवा नयाडिह। स्वाहाकृतस्य घर्मस्य। मधोः पिबत मश्विना। स्वाहाऽग्नये यज्ञियाय। शँ यजुर्भिः। अश्विना घर्मं पात९ हार्दिवानम्।। 33।। ❀ अहर्दिवाभि रूतिभिः। अनु वा न्द्यावापृथिवी म९साताम्। स्वाहेन्द्राय। स्वाहेन्द्रा वट्।

घर्ममपात मश्विना हार्दिवानम्। अहर्दिवाभि रूतिभिः। अनु वा न्द्यावापृथिवी अम९साताम्। तं प्राव्यँ यथा वट्। नमो दिवे। नमः पृथिव्यै।। 34।।

❀ दिविधा इमँ यज्ञम्। यज्ञमिम न्दिविधाः। दिव ङ्गच्छ। अन्तरिक्ष ङ्गच्छ। पृथिवी ङ्गच्छ। पञ्च प्रदिशो गच्छ। देवा न्घर्मपा न्गच्छ। पितृ न्घर्मपा न्गच्छ।। 35।। (आदित्यवते स्वाहा हार्दिवानं पृथिव्या अष्टौ च। 9।)

❀ 卐 इषे पीपिहि। ऊर्जे पीपिहि। ब्रह्मणे पीपिहि। क्षत्राय पीपिहि। अद्भ्यः पीपिहि। ओषधीभ्यः पीपिहि। वनस्पतिभ्यः पीपिहि। द्यावापृथिवीभ्यां पीपिहि। सुभूताय पीपिहि। ब्रह्मवर्चसाय पीपिहि।। 36।। ❀ यजमानाय पीपिहि। मह्य ञ्ज्यैष्ठ्याय पीपिहि। त्विष्यै त्वा। द्युम्नाय त्वा। इन्द्रियाय त्वा भूत्यै त्वा। धर्माऽसि सुधर्मा मे न्यस्मे। ब्रह्माणि धारय। क्षत्राणि धारय। विश न्धारय। नेत्त्वा वात स्स्कन्दयात्।। 37।। ❀ अमुष्य त्वा प्राणे सादयामि। अमुना सह निरर्थ ङ्गच्छ। योऽस्मा न्द्वेष्टि। यञ्च वय न्द्विष्मः। पूष्णे शरसे स्वाहा। ग्रावभ्यस्स्वाहा। प्रतिरेभ्य स्स्वाहा। द्यावापृथिवीभ्याꣳ स्वाहा। पितृभ्यो घर्मपेभ्य स्स्वाहा। रुद्राय रुद्रहोत्रे स्वाहा।। 38।।

❀ अह ज्योतिः केतुना जुषताम्। सुज्योति ज्योतिषाꣳ स्वाहा। रात्रि ज्योतिः केतुना जुषताम्। सुज्योति ज्योतिषाꣳ स्वाहा।

अपीपरो माऽह्नो रात्रियै मा पाहि। एषा ते अग्ने समित्। तया समिध्यस्व। आयुर्मे दाः। वर्चसा माऽञ्जीः।।

अपीपरो मा रात्रिया अह्नो मा पाहि।। 39।। ❀ एषा ते अग्ने समित्। तया समिध्यस्व। आयुर्मे दाः। वर्चसा माऽञ्जीः। अग्नि ज्योति ज्योति रग्निस्स्वाहा। सूर्यो ज्योति ज्योति स्सूर्य स्वाहा। भूस्स्वाहा। हुतꣳ हविः। मधु हविः। इन्द्रतमेऽग्नौ। पिता नोऽसि मा मा हिꣳसीः। अश्याम ते देव घर्म। मधुमतो वाजवतः पितुमतः। अङ्गिरस्वत स्स्वधाविनः। अशीमहि त्वा मा मा हिꣳसीः। स्वाहा त्वा सूर्यस्य रश्मिभ्यः। स्वाहा त्वा नक्षत्रेभ्यः।। 40।। (ब्रह्मवर्चसाय पीपिहि स्कन्दया द्रुद्राय रुद्रहोत्रे स्वाहाऽह्नो मा पाह्यग्नौ सप्त च। 10।)

❀ 卐 घर्म या ते दिवि शुक्। या गायत्रे छन्दसि। या ब्राह्मणे। या हविर्धाने। तान्त एतेनाव यजे स्वाहा।।

卐 घर्म या तेऽन्तरिक्षे शुक्। या त्रैष्टुभे छन्दसि। या राजन्ये। याऽऽग्नीध्रे। तान्त एतेनाव यजे स्वाहा।। 41।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

❀ 卐 घर्म या ते पृथिव्या९ शुक्। या जागते छन्दसि। या वैश्ये। या सदसि। तान्त एतेनाव यजे स्वाहा।

卐 अनु नोऽद्यानुमतिः[1]❀। 卐 अन्विदनुमते त्वम्[2]❀ ।

卐 दिवस्त्वा परस्पायाः। अन्तरिक्षस्य तनुव४ पाहि। पृथिव्यास्त्वा धर्मणा।। 42।। ❀ वय मनु क्रामाम सुविताय नव्यसे।।

卐 ब्रह्मणस्त्वा परस्पायाः। क्षत्त्रस्य तनुव४ पाहि। विशस्त्वा धर्मणा। वय मनु क्रामाम सुविताय नव्यसे।।

卐 प्राणस्य त्वा परस्पायै। चक्षुष स्तनुव४ पाहि। श्रोत्रस्य त्वा धर्मणा। वय मनु क्रामाम सुविताय नव्यसे।।

卐 वल्गुरसि शँयुधायाः।। 43।। ❀ शिशु र्जनधायाः। 卐 शञ्च वक्षि परि च वक्षि। 卐 चतुस्स्रक्ति र्नाभिर् ऋतस्य।

卐 सदो विश्वाऽऽयु श्शर्म सप्रथाः। 卐 अप द्वेषो अप ह्वरः। अन्यद्व्रतस्य सश्चिम।।

卐 घर्मैतत्तेऽन्न मेतत्पुरीषम्। तेन वर्धस्व चाऽऽच प्यायस्व। वर्धिषीमहि च वयम्। आ च प्यासिषीमहि।। 44।।

❀ 卐 रन्ति र्नामासि दिव्यो गन्धर्वः। तस्य ते पद्वद्धविर्धानम्। अग्नि रध्यक्षाः। रुद्रोऽधिपतिः।

卐 समह मायुषा। सं प्राणेन। सँ वर्चसा। सं पयसा। सङ्गौपत्येन। स९ रायस्पोषेण।। 45।।

❀ 卐 व्यसौ। योऽस्मा न्द्वेष्टि। यञ्च वय न्द्विष्मः।।

卐 अचिक्रद् द्वृषा हरिः। महा न्मित्रो न दर्शतः। स९ सूर्येण रोचते।।

卐 चिदसि समुद्रयोनिः। इन्दु र्दक्ष श्श्येन ऋतावा। हिरण्यपक्ष श्शकुनो भुरण्युः। महान्थ्सधस्थे ध्रुव आ निषत्तः।। 46।। ❀ नमस्ते अस्तु मा मा हि९सीः।।

卐 विश्वावसु९ सोमगन्धर्वम्। आपो ददृशुषीः। तदृतेनाव्यायन्। तदन्ववैत्। इन्द्रो रारहाण आसाम्। परि सूर्यस्य परिधी९ रपश्यत्।

卐 विश्वावसु रभि तन्नो गृणातु। दिव्यो गन्धर्वो रजसो विमानः। यद्वा घा सत्य मुत यन्न विद्म।। 47।। ❀ धियो हिन्वानो धिय इन्नो अव्यात्।।

1

2

卐 सन्नि मविन्द् च्चरणे नदीनाम्। अपावृणो द्दुरो अश्मव्रजानाम्। प्रासा ङ्गन्धर्वो अमृतानि वोचत्। इन्द्रो दक्षं परिजाना दहीनम्।।

卐 एतत्त्व न्देव घर्म देवो देवानुपागाः। 卐 इद महं मनुष्यो मनुष्यान्। सोमपीथानु मेहि। सह प्रजया सह रायस्पोषेण।।

卐 सुमित्रा न आप ओषधय स्सन्तु।। 48।। ❀ दुर्मित्रा स्तस्मै भूयासुः। योऽस्मा न्द्वेष्टि। यञ्च वय न्द्विष्मः।

卐 उद्वयन्तमसस्परि[1]❀। 卐 उदुत्य[2]❀ 卐 च्चित्रम्[3]❀।

卐 इम मूषु त्य मस्मभ्य॰ सनिम्। गायत्र न्नवीया॰सम्। अग्ने देवेषु प्रवोचः।। 49।। (याऽग्नीद्ध्रे तान्त एतेनाव यजे स्वाहा धर्मणा शँयुधाया॰ प्यासिषीमहि पोषेण निषत्तो विद्म सन्त्वष्टौ च। 11।)

❀ 卐 महीनां पयोऽसि विहित न्देवत्रा। 卐 ज्योतिर्भा असि वनस्पतीना मोषधीना॰ रसः। 卐 वाजिनन्त्वा वाजिनोऽव नयामः। ऊर्ध्वं मन स्सुवर्गम्।। 50।। 12।

❀ 卐 अस्का न्द्यौ॰ पृथिवीम्। अस्कानृषभो युवा गाः। स्कन्नेमा विश्वा भुवना। स्कन्नो यज्ञ॰ प्रजनयतु। अस्का नजनि प्राजनि। आस्कन्ना ज्जायते वृषा। स्कन्ना त्प्रजनिषीमहि।। 51।। 13।

❀ 卐 या पुरस्ता- द्विद्यु दापतत्। तान्त एतेनावयजे स्वाहा। 卐 या दक्षिणतः--। 卐 या पश्चात्--। 卐 योत्तरतः--। 卐 योपरिष्टा- द्विद्युदापतत्। तान्त एतेनाव यजे स्वाहा।। 52।। 14।

❀ 卐 प्राणाय स्वाहा 卐 व्यानाय स्वाहा卐ऽपानाय स्वाहा।

卐 चक्षुषे स्वाहा 卐 श्रोत्राय स्वाहा।

卐 मनसे स्वाहा 卐 वाचे सरस्वत्यै स्वाहा।। 53।। ❀ 15।

❀ 卐 पूष्णे स्वाहा 卐 पूष्णे शरसे स्वाहा।

卐 पूष्णे प्रपथ्याय स्वाहा 卐 पूष्णे नरन्धिषाय स्वाहा।

卐 पूष्णेऽङ्घृणये स्वाहा 卐 पूष्णे नरुणाय स्वाहा।

卐 पूष्णे साकेताय स्वाहा।। 54।। ❀ 16।

---

1

2

3

卐 उदस्य शुष्मा द्भानुर्नार्त बिभर्ति। भारं पृथिवी न भूम। प्रशुक्रैतु देवी मनीषा। अस्म थ्सुतष्टो रथो न वाजी। अर्चन्त एके महि साम मन्वत। तेन सूर्य मधारयन्न्। तेन सूर्य मरोचयन्न्। घर्म शिशर स्तदय मग्निः। पुरीषमसि सम्प्रियं प्रजया पशुभि र्भुवत्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद।। 55।। 17।

卐 यास्ते अग्न आर्द्रा योनयो याः कुलायिनीः। ये ते अग्न इन्दवो या उ नाभयः। यास्ते अग्ने तनुव ऊर्जो नाम। ताभि स्त्व मुभयीभि स्सँविदानः। प्रजाभि रग्ने द्रविणेह सीद। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्ध्रुवा सीद।। 56।। 18।

卐 अग्निरसि वैश्वानरोऽसि। सँवथ्सरोऽसि परिवथ्सरोऽसि। इदावथ्सरो ऽसीदुवथ्सरोऽसि। इद्वथ्सरोऽसि वथ्सरोऽसि। तस्य ते वसन्त शिशरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शर दुत्तरः पक्षः। हेमन्तो मध्यम्। पूर्वपक्षा श्चितयः।। 57।। ❀ अपरपक्षाः पुरीषम्। अहोरात्राणीष्टकाः। तस्य ते मासा श्चार्धमासाश्च कल्पन्ताम्। ऋतवस्ते कल्पन्ताम्। सँवथ्सरस्ते कल्पताम्। अहोरात्राणि ते कल्पन्ताम्। एति प्रेति वीति समित्युदिति। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुव स्सीद।। 58।। (चितयो नव च। 19।)

卐 भू卐 र्भुव卐 स्सुवः। 卐 ऊर्ध्व ऊषुण ऊतये[1]❀। 卐 ऊर्ध्वो नः पाह्यꣳहसः[2]❀।

卐 विधु न्दद्राणꣳ समने बहूनाम्। युवानꣳ सन्तं पलितो जगार। देवस्य पश्य काव्यं महित्वा द्यामार। सह्यस्समान।।

卐 यद्दते चिदभिश्रिषः। पुरा जर्तृभ्य आतृदः। सन्धाता सन्धिं मघवा पुरोवसुः।। 59।। ❀ निष्कर्ता विह्रुतं पुनः।

卐 पुनरूर्जा[3]❀ 卐 सह रय्या[4]❀।

卐 मा नो घर्म व्यथितो वि व्यथो नः। मा नः पर मधरं मा रजोऽनैः। मोष्वस्माꣳ स्तमस्यन्त राधाः। मा रुद्रियासो अभिगु र्वृधा नः।।

卐 मा नः क्रतुभिर् हीडितेभि रस्मान्। द्विषा सुनीते मा परादाः। मा नो रुद्रो निरृऋति र्मा नो अस्ता। मा द्यावापृथिवी हीडिषाताम्।। 60।।

1
2
3
4

❀ 卐 उप नो मित्रावरुणा विहावतम्। अन्वादीध्याथा मिह न स्सखाया। आदित्यानां प्रसितिर् हेतिः। उग्रा शतापाष्ठा घविषा परिणो वृणक्तु।।

卐 इमं मे वरुण[1]❉ 卐 तत्त्वा यामि[2]❉। 卐 त्वन्नो अग्ने❉ 卐 [3]स त्वन्नो अग्ने❉[4]। 卐 त्वमग्ने अयासि[5]❉। 卐 उद्वय न्तमसस्परि[6]❉। 卐 उदुत्य[7]❉ 卐चित्रम्[8]❉। 卐 वय स्सुपर्णाः[9]❉।। 61।। (पुरोवसुर् हीडिषाता॰ सुपर्णाः। 20।)

❀ 卐 भूर्भुवस्सुवः।

卐 मयि त्यदिन्द्रियं महत्। मयि दक्षो मयि क्रतुः। मयि धायि सुवीर्यम्। त्रिशुग्घर्मो वि भातु मे।।

卐 आकूत्या मनसा सह। विराजा ज्योतिषा सह। यज्ञेन पयसा सह। ब्रह्मणा तेजसा सह। क्षत्त्रेण यशसा सह। सत्येन तपसा सह। तस्य दोह मशीमहि। तस्य सुम्न मशीमहि। तस्य भक्ष मशीमहि। तस्य त इन्द्रेण पीतस्य मधुमतः। उपहूत.स्योपहूतो भक्षयामि।। 62।। (यशसा सह षड्व। 21।)

❀ 卐 यास्ते अग्ने घोरास्तनुवः। क्षुच्च तृष्णा च। अस्नुक्चानाहुतिश्च। अशनया च पिपासा च। सेदिश्चामतिश्च। एतास्ते अग्ने घोरा स्तनुवः। ताभि रमुङ्गच्छ। योऽस्मा न्द्वेष्टि। यञ्च वय न्द्विष्मः।। 63।। 22।

❀ 卐 स्निक्क स्नीहितिश्च स्निहितिश्च। उष्णा च शीता च। उग्रा च भीमा च। सदाम्नी सेदिरनिरा। एतास्ते अग्ने घोरा स्तनुवः। ताभिरमु ङ्गच्छ। योऽस्मा न्द्वेष्टि। यञ्च वय न्द्विष्मः।। 64।। 23।

❀ 卐 धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयङ्श्च। निलिम्पश्च विलिम्पश्च विक्षिपः।। 65।। 24।

❀ 卐 उग्रश्च धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयङ्श्च। सहसह्वा॰श्च सहमानश्च सहस्वा॰श्च सहीया॰श्च। एत्य प्रेत्य विक्षिपः।। 66।। 25।

❀ 卐 अहोरात्रे त्वोदीरयताम्। अर्घमासा स्त्वोदीञ्जयन्तु। मासास्त्वा श्रपयन्तु। ऋतवस्त्वा पचन्तु। सँवथ्सरस्त्वा हन्त्वसौ।। 67।। 26।

---

1

2

3

4

5

6

7

8

9

卐 खट् 卐 फफ्ङ्गहि। 卐 छिन्धी 卐 भिन्धी 卐 हन्धी 卐 कट्। - इति वाचः क्रूराणि।। 68।। 27।

卐 विगा इन्द्र विचरन्थ्स्पाशयस्व। स्वपन्त मिन्द्र पशुमन्त मिच्छ। वज्रेणामुं बोधय दुर्विदत्रम्। स्वपतोऽस्य प्र हर भोजनेभ्यः।।

卐 अग्ने अग्निना सँ वदस्व। मृत्यो मृत्युना सँ वदस्व। नमस्ते अस्तु भगवः।।

卐 सकृत्ते अग्ने नमः। द्विस्ते नमः। त्रिस्ते नमः। चतुस्ते नमः। पञ्चकृत्वस्ते नमः। दशकृत्वस्ते नमः। शतकृत्वस्ते नमः। आसहस्रकृत्वस्ते नमः। अपरिमितकृत्वस्ते नमः। नमस्ते अस्तु मा मा हिꣳसीः।। 69।। (त्रिस्ते नमस्सप्त च। 28।)

卐 असृङ्मुखो रुधिरेणाव्यक्तः। यमस्य दूत श्श्वपा द्विधावसि। गृद्ध्र स्सुपर्णꣳ कुणप न्निषेवसे। यमस्य दूतꣳ प्रहितो भवस्य चोभयोः।। 70।। 29।

卐 यदेतद्वृकसो भूत्वा। वाग्देव्यभिरायसि। द्विषन्तं मेऽभि राय। तं मृत्यो मृत्यवे नय। स आर्त्याऽऽर्ति मार्छतु।। 71।। 30।

卐 यदीषितो यदि वा स्वकामी। भयेडको वदति वाच मेताम्। तामिन्द्राग्नी ब्रह्मणा सँविदानौ। शिवा मस्मभ्यङ्कृणुत ङ्गृहेषु।। 72।। 31।

卐 दीर्घमुखि दुरूहणु। मा स्म दक्षिणतो वदः। यदि दक्षिणतो वदा द्विषन्तं मेऽव बाधासै।। 73।। 32।

卐 इत्था दुलूक आपप्तत्। हिरण्याक्षो अयोमुखः। रक्षसा न्दूत आगतः। तमितो नाशयाग्ने।। 74।। 33।

卐 यदेतद्भूता न्यन्वाविश्य। दैवीँ वाचँ वदसि। द्विषतो नꣳ परा वद। तान्मृत्यो मृत्यवे नय। त आर्त्याऽऽर्ति मार्छन्तु। अग्निनाऽग्नि स्सँ वदताम्।। 75।। 34।

卐 प्रसार्य सक्थ्यौ पतसि। सव्य मक्षि निपेपि च। मेहकस्य च नाममत्।। 76।। 35।

卐 अत्रिणा त्वा क्रिमे हन्मि। कण्वेन जमदग्निना। विश्वावसो ब्रह्मणा हतः। क्रिमीणाꣳ राजा। अप्येषाꣳ स्थपतिर् हतः। अथो माताऽथो पिता। अथो स्थूरा अथो क्षुद्राः। अथो कृष्णा अथो श्वेताः। अथो आशातिका हताः। श्वेताभि स्सह सर्वे हताः।। 77।। 36।

卐 आहरावद्य। शृतस्य हविषो यथा। तथ्सत्यम्। यदमुँ यमस्य जम्भयोः। आ दधामि तथा हि तत्। खण्फणम्रसि।। 78।। 37।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

❀ 卐 ब्रह्मणा त्वा शपामि। ब्रह्मणस्त्वा शपथेन शपामि। घोरेण त्वा भृगूणा ञ्चक्षुषा प्रेक्षे। रौद्रेण त्वाऽङ्गिरसां मनसा ध्यायामि। अघस्य त्वा धारया विध्यामि। अधरो मत्पद्यस्वासौ।। 79।। 38।

❀ 卐 उत्तुद शिमिजावरि। तल्पेजे तल्प उत्तुद। गिरी॰ रनु प्र वेशय। मरीची रुप सन्नुद। यावदितः पुरस्ता दुदयाति सूर्यः। तावदितोऽमु न्नाशय। योऽस्मा न्द्वेष्टि। यञ्च वय न्द्विष्मः।। 80।। 39।

❀ 卐 भूर्भुवस्सुवो भूर्भुवस्सुवो भूर्भुवस्सुवः। 卐 भुवोद्धायि भुवोद्धायि भुवोद्धायि। 卐 नृम्णायि नृम्ण न्नृम्णायि नृम्ण न्नृम्णायि नृम्णम्। 卐 निधाय्यो वायि निधाय्यो वायि निधाय्यो वायि। 卐 ए अस्मे अस्मे। 卐 सुवर्न ज्योतीः।। 81।। 40।

❀ 卐 पृथिवी समित्। तामग्नि स्समिन्धे। साऽग्नि॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा।।

卐 अन्तरिक्ष॰ समित्।। 82।। ❀ ताँ वायु स्समिन्धे। सा वायु॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा।।

卐 द्यौस्समित्। तामादित्य स्समिन्धे।। 83।। ❀ साऽऽदित्य॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा।।

卐 प्राजापत्या मे समिदसि सपत्नक्षयणी। भ्रातृव्यहा मेऽसि स्वाहा।।

卐 अग्ने व्रतपते- व्रत ञ्चरिष्यामि।। 84।। ❀ तच्छकेय न्तन्मे राध्यताम्।

卐 वायो व्रतपत-- 卐 आदित्य व्रतपते--। 卐 व्रतानाँ व्रतपते- व्रत ञ्चरिष्यामि। तच्छकेय न्तन्मे राध्यताम्।

卐 द्यौस्समित्। तामादित्य स्समिन्धे। साऽऽदित्य॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा।। 85।। ❀ वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा।।

卐 अन्तरिक्ष॰ समित्। ताँ वायु स्समिन्धे। सा वायु॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया।। 86।। ❀ यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा।।

卐 पृथिवी समित्। तामग्नि स्समिन्धे। साऽग्नि॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन।। 87।। ❀ अन्नाद्येन समिन्ता॰ स्वाहा।।

卐 प्राजापत्या मे समिदसि सपत्नक्षयणी। भ्रातृव्यहा मेऽसि स्वाहा।।

卐 आदित्य व्रतपते- व्रत मचारिषम्। तदशकन्तन्मे राधि।।

卐 वायो व्रतपते--卐ऽग्ने व्रतपते--। 卐 व्रतानाँ व्रतपते- व्रत मचारिषम्। तदशकन्तन्मे राधि।। 88।।
(समित्समिन्धे व्रत ञ्चरिष्या म्यायुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनाष्टौ च। 41।)

卐 शन्नो वातः पवतां मातरिश्वा शन्न स्तपतु सूर्यः। अहानि शं भवन्तु न श्शः रात्रिः प्रति धीयताम्।।

卐 शमुषा नो व्युच्छतु शमादित्य उदेतु नः। शिवा नश्शन्तमा भव सुमृडीका सरस्वति। मा ते व्योम सन्दृशि।।

卐 इडायै वास्त्वसि वास्तुम द्वास्तुमन्तो भूयास्म मा वास्तो श्छिथ्स्मह्यवास्तु स्स भूया द्योऽस्मा न्द्वेष्टि यञ्च वय न्द्विष्मः।।

卐 प्रतिष्ठाऽसि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठाया श्छिथ्स्मह्यप्रतिष्ठ स्स भूया द्योऽस्मा न्द्वेष्टि यँ च वय न्द्विष्मः।।

卐 आ वात वाहि भेषजँ वि वात वाहि यद्रपः। त्वः हि विश्वभेषजो देवाना न्दूत ईयसे।।

卐 द्वाविमौ वातौ वात आ सिन्धो रा परावतः।। 89।। दक्षं मे अन्य आवातु पराऽन्यो वातु यद्रपः।।

卐 यददो वात ते गृहेऽमृतस्य निधिर् हितः। ततो नो देहि जीवसे ततो नो धेहि भेषजम्। ततो नो मह आवह-

卐 वात आवातु भेषजम्। शम्भू र्मयोभू र्नो हृदे प्रण आयूःषि तारिषत्।।

卐 इन्द्रस्य गृहोऽसि तन्त्वा प्र पद्ये सगु स्साश्वः। सह यन्मे अस्ति तेन।।

卐 भूः प्र पद्ये भुवः प्र पद्ये सुवः प्र पद्ये भूर्भुवस्सुवः प्र पद्ये वायुं प्र पद्ये ऽनार्ता न्देवतां प्र पद्येऽश्मान माखणं प्रपद्ये प्रजापते र्ब्रह्मकोशं ब्रह्म प्र पद्य ओं प्र पद्ये।।

卐 अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वात स्स्वस्त्या स्वस्तिमा न्तया स्वस्त्या स्वस्तिमा नसानि।।

卐 प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं

卐 मयि मेधां मयि प्रजां मय्यग्नि स्तेजो दधातु

卐 मयि मेधां मयि प्रजां मयीन्द्र इन्द्रिय न्दधातु

卐 मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु।। 90।।

❀ 卐 द्युभि रक्तुभि॰ परि पात मस्मा नरिष्टेभि रश्विना सौभगेभिः। तन्नो मित्रो वरुणो मा महन्ता मदिति स्सिन्धु॰ पृथिवी उत द्यौः।।

卐 कया न श्चित्र आ भुव दूती सदावृध स्सखा। कया शचिष्ठया वृता।।

卐 कस्त्वा सत्यो मदानां मꣳहिष्ठो मथ्सदन्धसः। दृढा चिदारुजे वसु।।

卐 अभीषुण स्सखीना मविता जरितृणाम्। शतं भवास्यूतिभिः।।

卐 वयस्सुपर्णा उपसेदु रिन्द्रं प्रियमेधा ऋषयो नाधमानाः। अप ध्वान्त मूर्णुहि पूर्धि चक्षु र्मुमुग्ध्यस्मा न्निधयेऽव बद्धान्।। 91।।

❀ 卐 शन्नो देवी रभिष्टय आपो भवन्तु पीतये। शँ यो रभि स्त्रवन्तु नः।।

卐 ईशाना वार्याणा ङ्क्षयन्ती श्चर्षणीनाम्। अपो याचामि भेषजम्।।

卐 सुमित्रा न आप ओषधय स्सन्तु दुर्मित्रा स्तस्मै भूयासु र्योऽस्मा न्द्वेष्टि यँ च वय न्द्विष्मः।

卐 आपो हिष्ठा मयोभुव स्ता न ऊर्जे दधातन। महे रणाय चक्षसे।।

卐 यो व श्शिवतमो रस स्तस्य भाजयतेह नः। उशतीरिव मातरः।।

卐 तस्मा अर ङ्गमाम वो यस्य क्षयाय जिन्वथ।। 92।। ❀ आपो जनयथा चनः।।

卐 पृथिवी शान्ता साऽग्निना शान्ता सा मे शान्ता शुचꣳ शमयतु।।

卐 अन्तरिक्षꣳ शान्त न्तद्वायुना शान्त न्तन्मे शान्तꣳ शुचꣳ शमयतु।।

卐 द्यौश्शान्ता साऽऽदित्येन शान्ता सा मे शान्ता शुचꣳ शमयतु।।

卐 पृथिवी शान्ति रन्तरिक्षꣳ शान्ति र्द्यौश्शान्ति र्दिश श्शान्ति रवान्तरदिशा श्शान्ति रग्नि श्शान्ति र्वायु श्शान्ति रादित्य श्शान्ति श्चन्द्रमा श्शान्ति र्नक्षत्राणि शान्ति राप श्शान्ति रोषधय श्शान्ति र्वनस्पतय श्शान्तिर्गौ श्शान्ति रजा शान्ति रश्व श्शान्ति॰ पुरुषश्शान्ति र्ब्रह्म शान्ति र्ब्राह्मणश्शान्ति श्शान्तिरेव शान्ति श्शान्ति र्मे अस्तु शान्तिः।

卐 तयाऽहꣳ शान्त्या सर्वशान्त्या मह्य न्द्विपदे चतुष्पदे च शान्ति ङ्करोमि शान्ति र्मे अस्तु शान्तिः।।

卐 एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्य न्धर्म श्चैतानि मोत्तिष्ठन्त मनूत्तिष्ठन्तु मा माꣳ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्य न्धर्म श्चैतानि मा मा हासिषुः।।

卐 उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्था ममृताꣳ अनु।।

卐 तच्चक्षु र्देवहितं पुरस्ता च्छुक्र मुच्चरत्।

卐 पश्येम शरद श्शत 卐 ञ्जीवेम शरद श्शत 卐 न्नन्दाम शरद श्शतं 卐 मोदाम शरद श्शतं 卐 भवाम शरद श्शत९ 卐 श्शृणवाम शरद श्शतं 卐 प्र ब्रवाम शरद श्शत 卐 मजीता स्स्याम शरद श्शत 卐 ञ्ज्योक्क सूर्यन्दृशे।।

卐 य उदगा न्महतोऽर्णवा द्विभ्राजमान स्सरिरस्य मध्या थ्समा वृषभो लोहिताक्ष स्सूर्यो विपश्चि न्मनसा पुनातु।।

卐 ब्रह्मण श्श्चोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारित मेनेन महदन्तरिक्ष न्दिव न्दाधार पृथिवी९ सदेवाँ यदहँ वेद तदह न्धारयाणि मा मद्वेदोऽधि विस्रसत्।।

卐 मेधामनीषे मा विशता९ समीची भूतस्य भवस्यावरुध्यै सर्वमायु रयाणि सर्वमायु रयाणि।।

卐 आभि र्गीर्भि र्यदतो न ऊन माप्यायय हरिवो वर्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम।।

卐 ब्रह्म प्रावादिष्म तन्नो मा हासीत्।। 卐 ओं शान्ति श्शान्ति श्शान्तिः।। 93।। (परावतो दधातु बद्धा ञ्जिन्वथ दृशे सप्त च। 42।)

(नमो युञ्जते वृष्णो अश्वस्य ब्रह्म न्प्रवर्ग्येण ब्रह्म न्प्रचरिष्यामो दश प्राची रपश्य ङ्गोपा न्देवस्य समुद्रायेषे पीपिहि घर्म या ते महीना श्चत्वार्यस्कान् या पुरस्ताथ्सप्तसप्त प्राणाय त्रीणि पूष्णे चत्वार्युदस्यैकादश यास्ते सप्ताग्नि ध्रुव स्सीदैकान्न विं९शति र्भूरूर्ध्व स्त्रिं९श,द्रू मयि षोडश, यास्ते घोरा नव, स्त्रिक्काष्टौ, धुनिश्च द्वे, उग्रश्च त्रीण्यहोरात्रे पञ्च, खड्डीणि, विगा स्सप्तदशासृञ्जुख श्चत्वारि यदेतद्धृकस४ पञ्च यदीषित श्चत्वारि, दीर्घमुखि त्रीणीत्था चत्वारि, यदेतद्भूतानि षड्वसार्य त्रीण्यत्रिणा दशाऽहरावद्य, ब्रह्मणा षट्थ्षडुत्तुदाष्टौ, भूष्षट् पृथिव्यष्टषष्टि श्शन्न स्सप्तपञ्चाश द्विचत्वारिं९शत्। 43।

युञ्जते ब्रह्म न्प्र चरिष्यामो ऽपश्य ङ्गोपा९ समुद्राय वय मनु क्रामाम पूष्णे धुनिश्च यदेत द्भूतानि तच्छकेय मष्टाशीतिः। नमो वाचे ब्रह्म न्प्रवर्ग्येण मयि रुगन्तरिक्षेण घर्म या ते दिविशु गस्कान्द्यौ४ पृथिवी मुप नो मित्रावरुणा यदेत द्धृकसो भूर्भुवस्सुव र्द्युभि स्त्रिनवतिः।। 93।। युञ्जते मनो मा हासीत्।)

ओं शान्तिश्शान्तिः।

## आरण्यके पञ्चमः प्रपाठकः

### सौ।का। ब्राह्मणम् (प्रवर्ग्य)शुक्रिय 7

(शन्न स्तन्नो मा हासीत्। ओं शान्ति श्शान्ति श्शान्तिः।। )

❀ देवा वै सत्र मासत। ऋद्धिपरिमितँ यशस्कामाः। तेऽब्रुवन्न्। यन्नः प्रथमँ यश ऋच्छात्। सर्वेषान्न स्त थ्सहासदिति। तेषा ङ्कुरुक्षेत्रँ वेदि रासीत्। तस्यै खाण्डवो दक्षिणार्ध आसीत्। तूर्घ्न मुत्तरार्धः। परीण ज्जघनार्धः। मरव उत्करः।। 1।। ❀ तेषां मखँ वैष्णवँ यश आर्छत्। तन्न्यकामत। तेनापाक्रामत्। तन्देवा अन्वायन्न्। यशोऽवरुरुथ्समानाः। तस्यान्वागतस्य। सव्या द्धनु रजायत। दक्षिणा दिषवः। तस्मा दिषुधन्वं पुण्यजन्म। यज्ञजन्मा हि।। 2।। ❀ तमेकꣳ सन्तम्। बहवो नाभ्यधृष्णुवन्न्। तस्मा देकमिषुधन्विनम्। बहवोऽनिषुधन्वा नाभि धृष्णुवन्ति। सोऽस्मयत। एकं मा सन्तं बहवो नाभ्यधर्षिषुरिति। तस्य सिष्मियाणस्य तेजोऽपाक्रामत्। तद्देवा ओषधीषु न्यमृजुः। ते श्यामाका अभवन्न्। स्मयाका वै नामैते।। 3।। ❀ तथ्स्मयाकानाꣳ स्मयाकत्वम्। तस्मा द्दीक्षितेनापिगृह्य स्मेतव्यम्। तेजसो धृत्यै। स धनुः प्रतिष्कभ्यातिष्ठत्। ता उपदीका अब्रुवन्वरँ वृणामहै। अथ व इमꣳ रन्धयाम। यत्र क्व च खनाम। तदपोऽभि तृणदामेति। तस्मादुपदीका यत्र क्व च खनन्ति। तदपोऽभि तृन्दन्ति।। 4।। ❀ वारेवृतꣳ ह्यासाम्। तस्य ज्या मप्यादन्न्। तस्य धनु र्विप्रवमाणꣳ शिर उदवर्तयत्। तद्यावापृथिवी अनु प्रावर्तत। यत्प्रावर्तत। तत्प्रवर्ग्यस्य प्रवर्ग्यत्वम्। यद्घ्राँ '4' इत्यपतत्। तद्घर्मस्य घर्मत्वम्। महतो वीर्य मपप्त दिति। तन्महावीरस्य महावीरत्वम्।। 5।। ❀ यदस्या स्समभरन्न्। तथ्सम्राज्ञ स्सम्राड्त्वम्। तꣳस्तृत न्देवता स्त्रेधा व्यगृह्णत। अग्निः प्रातस्सवनम्। इन्द्रो माध्यन्दिनꣳ सवनम्। विश्वे देवा स्तृतीयसवनम्। तेनापशीर्ष्णा यज्ञेन यजमानाः। नाऽऽशिषोऽवारुन्धत। न सुवर्गँ लोक मभ्यजयन्न्। ते देवा अश्विनावब्रुवन्न्।। 6।। ❀ भिषजौ वै स्थः। इदँ यज्ञस्य शिरः प्रति धत्तमिति। तावब्रूताँ वरँ वृणावहै। ग्रह एव नावत्रापि गृह्यतामिति। ताभ्या मेत माश्विन मगृह्णन्न्। तावेत द्यज्ञस्य शिरः प्रत्यधत्ताम्। यत्प्रवर्ग्यः। तेन सशीर्ष्णा यज्ञेन यजमानाः। अवाऽऽशिषो ऽरुन्धत। अभि सुवर्गँ लोक मजयन्न्। यत्प्रवर्ग्यं प्रवृणक्ति। यज्ञस्यैव तच्छिरः प्रति दधाति। तेन सशीर्ष्णा यज्ञेन यजमानः। अवाऽऽशिषो रुन्धे। अभि सुवर्गँ लोक ञ्जयति। तस्मादेष आश्विनप्रवया इव। यत्प्रवर्ग्यः।। 7।। (उत्करो ह्येते तृन्दन्ति महावीरत्व मब्रुव न्नजय'2'न्थ्सप्त च। 1।)

❀ सावित्र ञ्जुहोति प्रसूत्यै। चतुर्गृहीतेन जुहोति। चतुष्पादः॒ पशवः। पशूनेवाव रुन्धे। चतस्रो दिशः। दिक्ष्वेव प्रति तिष्ठति। छन्दा॑ꣳसि देवेभ्योऽपाक्रामन्न्। न वोऽभागानि हव्यँ वक्ष्याम इति। तेभ्य एत च्चतुर्गृहीत मधारयन्न्। पुरोऽनुवाक्यायै याज्यायै।। 8।। ❀ देवतायै वषट्काराय। यच्चतुर्गृहीत ञ्जुहोति। छन्दा॑ꣳस्येव तत्प्रीणाति। तान्यस्य प्रीतानि देवेभ्यो हव्यँ वहन्ति। ब्रह्मवादिनो वदन्ति। होतव्य न्दीक्षितस्य गृहा '3' इ न होतव्या '3' मिति। हविर्वै दीक्षितः। यज्जुहुयात्। हविष्कृतँ यजमान मग्नौ प्र दध्यात्। यन्न जुहुयात्।। 9।। ❀ यज्ञपरु रन्तरियात्। यजुरेव वदेत्। न हविष्कृतँ यजमान मग्नौ प्रदधाति। न यज्ञपरु रन्तरेति। गायत्री छन्दा॑ꣳस्यत्यमन्यत। तस्यै वषट्कारोऽभ्यग्य शिरोऽच्छिनत्। तस्यै द्वेधा रसः॒ पराऽपतत्। पृथिवी मर्धः॒ प्राविशत्। पशूनर्धः। यः॒ पृथिवीं प्राविशत्।। 10।। ❀ स खदिरोऽभवत्। यः॒ पशून्। सोऽजाम्। यत्खादिर्यभ्रि र्भवति। छन्दसामेव रसेन यज्ञस्य शिर स्सं भरति। यदौदुम्बरी। ऊर्ग्वा उदुम्बरः। ऊर्जैव यज्ञस्य शिरस्सं भरति। यद्वैणवी। तेजो वै वेणुः।। 11।। ❀ तेजसैव यज्ञस्य शिर स्सं भरति। यद्वैकङ्कती। भा एवाव रुन्धे। देवस्य त्वा सवितुः॒ प्रसव इत्यभ्रि मादत्ते प्रसूत्यै। अश्विनो र्बाहुभ्या मित्याह। अश्विनौ हि देवाना मध्वर्यू आस्ताम्। पूष्णो हस्ताभ्या मित्याह यत्यै। वज्र इव वा एषा। यदभ्रिः। अभ्रिरसि नारि रसीत्याह शान्त्यै।। 12।। ❀ अध्वरकृ द्देवेभ्य इत्याह। यज्ञो वा अध्वरः। यज्ञकृ द्देवेभ्य इति वावैतदाह। उत्तिष्ठ ब्रह्मणस्पत इत्याह। ब्रह्मणैव यज्ञस्य शिरोऽच्छैति। प्रैतु ब्रह्मणस्पति रित्याह। प्रेत्यैव यज्ञस्य शिरोऽच्छैति। प्रदेव्येतु सूनृतेत्याह। यज्ञो वै सूनृता। अच्छा वीर न्नर्यं पङ्क्तिराधस मित्याह।। 13।। ❀ पाङ्क्तो हि यज्ञः। देवा यज्ञ न्नयन्तु न इत्याह। देवानेव यज्ञनियः॒ कुरुते। देवी द्यावापृथिवी अनु मे म॑ꣳसाथा मित्याह। आभ्या मेवानुमतो यज्ञस्य शिर स्सं भरति। ऋध्यास मद्य मखस्य शिर इत्याह। यज्ञो वै मखः। ऋध्यास मद्य यज्ञस्य शिर इति वावैतदाह। मखाय त्वा मखस्य त्वा शीर्ष्ण इत्याह। निर्दिश्यैवैन द्धरति।। 14।। ❀ त्रिर्हरति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो यज्ञस्य शिरस्सं भरति। तूष्णीञ्चतुर्थ॑ꣳ हरति। अपरिमिता देव यज्ञस्य शिरस्सं भरति। मृत्खनादग्रे हरति। तस्मा न्मृत्खनः॒ करुण्यतमः। इयत्यग्र आसी रित्याह। अस्यामेवाछम्बट्कारँ यज्ञस्य शिरस्सं भरति। ऊर्जँ वा एत॑ꣳ रसं पृथिव्या उपदीका उद्दिहन्ति।। 15।। ❀ यद्वल्मीकम्। यद्वल्मीकवपा सम्भारो भवति। ऊर्जमेव रसं पृथिव्या अव रुन्धे। अथो श्रोत्रमेव। श्रोत्रꣳ ह्येत त्पृथिव्याः। यद्वल्मीकः। अबधिरो भवति। य एवँ वेद। इन्द्रो वृत्राय वज्र मुदयच्छत्। स यत्रयत्र पराऽक्रमत।। 16।। ❀ तन्नाध्रियत। स पूतीकस्तम्बे

पराक्रमत। सोऽध्रियत। सोऽब्रवीत्। ऊतिँ वै मेधा इति। तदूतीकाना मूतीकत्वम्। यदूतीका भवन्ति। यज्ञायैवोति न्दधाति। अग्निजा असि प्रजापते रेत इत्याह। य एव रसः पशू न्प्राविशत्।। 17।।❀ तमेवाव रुन्धे। पञ्चैते सम्भारा भवन्ति। पाङ्क्तो यज्ञः। यावानेव यज्ञः। तस्य शिरस्सं भरति। यद्ग्राम्याणां पशूना ञ्चर्मणा सम्भरेत्। ग्राम्या न्पशू न्छुचाऽर्पयेत्। कृष्णाजिनेन सं भरति। आरण्यानेव पशू न्छुचाऽर्पयति। तस्माथ्समावत्पशूनां प्रजायमानानाम्।। 18।।❀ आरण्याः पशवः कनीयाꣳसः। शुचा ह्यृताः। लोमत स्सं भरति। अतो ह्यस्य मेध्यम्। परिगृह्याऽयन्ति। रक्षसा मपहत्यै। बह्वो हरन्ति। अपचिति मेवास्मि न्दधाति। उद्धते सिकतोपोप्ते परिश्रिते नि दधाति शान्त्यै। मदन्तीभि रुप सृजति।। 19।।❀ तेज एवास्मि न्दधाति। मधु त्वा मधुला करोत्वित्याह। ब्रह्मणैवास्मि न्तेजो दधाति। यद्ग्राम्याणां पात्राणां कपालै स्सꣳसृजेत्। ग्राम्याणि पात्राणि शुचाऽर्पयेत्। अर्मकपालै स्सꣳ सृजति। एतानि वा अनुपजीवनीयानि। तान्येव शुचाऽर्पयति। शर्कराभि स्सꣳ सृजति धृत्यै। अथो शन्त्वाय। अजलोमै स्सꣳसृजति। एषा वा अग्नेः प्रिया तनूः। यदजा। प्रिययैवैन न्तनुवा सꣳसृजति। अथो तेजसा। कृष्णाजिनस्य लोमभि स्सꣳ सृजति। यज्ञो वै कृष्णाजिनम्। यज्ञेनैव यज्ञꣳ सꣳ सृजति।। 20।। (याज्यायै न जुहुया दविश द्वेणु श्शान्त्यै पङ्क्तिराधसमित्याह हरति दिहन्ति पराऽक्रमताविश त्प्रजायमानानाꣳ सृजति शन्त्वायाष्टौ च। 2।)

❀ परिश्रिते करोति। ब्रह्मवर्चसस्य परिगृहीत्यै। न कुर्व न्नभि प्राण्यात्। यत्कुर्व न्नभिप्राण्यात्। प्राणा न्छुचाऽर्पयेत्। अपहाय प्राणिति। प्राणाना ङ्गोपीथाय। न प्रवर्ग्य ञ्चाऽऽदित्य ञ्चान्तरेयात्। यदन्तरेयात्। दुश्चर्मा स्यात्।। 21।।❀ तस्मा न्नान्तराय्यम्। आत्मनो गोपीथाय। वेणुना करोति। तेजो वै वेणुः। तेजः प्रवर्ग्यः। तेजसैव तेज स्समर्धयति। मखस्य शिरोऽसीत्याह। यज्ञो वै मखः। तस्यैतच्छिरः। यत्प्रवर्ग्यः।। 22।।❀ तस्मा देवमाह। यज्ञस्य पदे स्थ इत्याह। यज्ञस्य ह्येते पदे। अथो प्रतिष्ठित्यै। गायत्रेण त्वा छन्दसा करोमीत्याह। छन्दोभि रेवैन ङ्करोति। त्र्युद्धि ङ्करोति। त्रय इमे लोकाः। एषाँ लोकाना माप्त्यै। छन्दोभिः करोति।। 23।।❀ वीर्यँ वै छन्दाꣳसि। वीर्येणैवैन ङ्करोति। यजुषा बिल ङ्करोति व्यावृत्त्यै। इयन्त ङ्करोति। प्रजापतिना यज्ञमुखेन संमितम्। इयन्त ङ्करोति। यज्ञपरुषा संमितम्। इयन्त ङ्करोति। एतावद्वै पुरुषे वीर्यम्। वीर्यसम्मितम्।। 24।।❀ अपरिमित ङ्करोति। अपरिमितस्यावरुद्ध्यै। परिग्रीव ङ्करोति धृत्यै। सूर्यस्य हरसा श्रायेत्याह। यथायजु रेवैतत्। अश्वशकेन धूपयति। प्राजापत्यो वा अश्व स्सयोनित्वाय। वृष्णो अश्वस्य निष्पदसीत्याह। असौ वा आदित्यो

वृषाऽश्वः। तस्य छन्दाꣳसि निष्पत्।। 25।।❀ छन्दोभि रेवैन न्यूपयति। अर्चिषे त्वा शोचिषे त्वेत्याह। तेज एवास्मि न्दधाति। वारुणोऽभीद्धः। मैत्रियोपैति शान्त्यै। सिद्ध्यै त्वेत्याह। यथायजु रेवैतत्। देवस्त्वा सवितोद्वपत्वित्याह। सवितृप्रसूत एवैनं ब्रह्मणा देवताभि रुद्वपति। अपद्यमानꣳ पृथिव्या माशा दिश आ पृणेत्याह।। 26।।❀ तस्मादग्नि स्सर्वा दिशोऽनु वि भाति। उत्तिष्ठ बृहन्भवोर्ध्व स्तिष्ठ ध्रुवस्त्व मित्याह प्रतिष्ठित्यै। ईश्वरो वा एषोऽन्धो भवितोः। यꣳ प्रवर्ग्य मन्वीक्षते। सूर्यस्य त्वा चक्षुषाऽन्वीक्ष इत्याह। चक्षुषो गोपीथाय। ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वेत्याह। इयँ वा ऋजुः। अन्तरिक्षꣳ साधु। असौ सुक्षितिः।। 27।।❀ दिशो भूतिः। इमानेवास्मै लोका न्कल्पयति। अथो प्रतिष्ठित्यै। इद मह ममु मामुष्यायणँ विशा पशुभि र्ब्रह्मवर्चसेन पर्यूहामीत्याह। विशैवैनं पशुभि र्ब्रह्मवर्चसेन पर्यूहति। विशेति राजन्यस्य ब्रूयात्। विशैवैनं पर्यूहति। पशुभिरिति वैश्यस्य। पशुभिरेवैनं पर्यूहति। असुर्यं पात्र मनाच्छृण्णम्।। 28।।❀ आच्छृणत्ति। देवत्राऽकः। अजक्षीरेणा ऽऽच्छृणत्ति। परमँ वा एतत्पयः। यदजक्षीरम्। परमेणैवैनं पयसाऽऽच्छृणत्ति। यजुषा व्यावृत्यै। छन्दोभिराऽऽच्छृणत्ति। छन्दोभिर्वा एष क्रियते। छन्दोभि रेव छन्दाꣳस्याऽऽच्छृणत्ति। छृन्धि वाच मित्याह। वाच मेवाव रुन्धे। छृन्ध्यूर्जं मित्याह। ऊर्जं मेवाव रुन्धे। छृन्धि हविरित्याह। हवि रेवाकः। देव पुरश्चर सघ्यास न्त्वेत्याह। यथायजु रेवैतत्।। 29।। (स्याद्यत्प्रवर्ग्यं श्छन्दोभिꣳ करोति वीर्यसम्मित ञ्छन्दाꣳसि निष्पत्पृणेत्याह सुक्षिति रनाच्छृण्ण ञ्छन्दाꣳ स्याच्छृणत्त्यष्टौ च। 3।)

❀ ब्रह्म न्प्र चरिष्यामो होत र्घर्म मभिष्टुहीत्याह। एष वा एतर्हि बृहस्पतिः। यद्ब्रह्मा। तस्मा एव प्रतिप्रोच्य प्र चरति। आत्मनोऽनार्त्यै। यमाय त्वा मखाय त्वेत्याह। एता वा एतस्य देवताः। ताभि रेवैनꣳ समर्धयति। मदन्तीभिꣳ प्रोक्षति। तेज एवास्मि न्दधाति।। 30।।❀ अभिपूर्वं प्रोक्षति। अभिपूर्व मेवास्मि न्तेजो दधाति। त्रिꣳ प्रोक्षति। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय। होताऽन्वाह। रक्षसा मपहत्यै। अनवानम्। प्राणानाꣳ सन्तत्यै। त्रिष्टुभ स्सती गायत्री रिवान्वाह।। 31।।❀ गायत्रो हि प्राणः। प्राणमेव यजमाने दधाति। सन्तत मन्वाह। प्राणाना मन्नाद्यस्य सन्तत्यै। अथो रक्षसा मपहत्यै। यत्परिमिता अनुब्रूयात्। परिमित मव रुन्धीत। अपरिमिता अन्वाह। अपरिमित स्यावरुद्ध्यै। शिरो वा एतद्यज्ञस्य।। 32।।❀ यत्प्रवर्ग्यः। ऊर्ग्मुञ्जाः। यन्मौञ्जो वेदो भवति। ऊर्जैव यज्ञस्य शिर स्समर्धयति। प्राणाहुती र्जुहोति। प्राणानेव यजमाने दधाति। सप्त जुहोति। सप्त वै शीर्‌षण्याꣳ प्राणाः। प्राणा नेवास्मि न्दधाति। देवस्त्वा सविता मध्वाऽनक्त्वित्याह।। 33।।❀ तेजसैवैन मनक्ति। पृथिवी

न्तपस स्त्रायस्वेति हिरण्य मुपास्यति। अस्या अनतिदाहाय। शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। अग्नि स्सर्वा देवताः। प्रलवा नादीप्योपास्यति। देवतास्वेव यज्ञस्य शिरः प्रति दधाति। अप्रतिशीर्णाग्रं भवति। एतद्वर्हि ह्येषः।। 34।। ❀ अर्चिरसि शोचिरसीत्याह। तेज एवास्मि न्ब्रह्मवर्चस न्दधाति। सꣳ सीदस्व महाꣳ असीत्याह। महान् ह्येषः। ब्रह्मवादिनो वदन्ति। एते वाव त ऋत्विजः। ये दर्शपूर्णमासयोः। अथ कथा होता यजमानायाऽऽशिषो नाऽऽशास्त इति। पुरस्तादाशीः खलु वा अन्यो यज्ञः। उपरिष्टादाशी रन्यः।। 35।। ❀ अनाधृष्या पुरस्ता दिति यदेतानि यजूꣳष्याह। शीर्षत एव यज्ञस्य यजमान आशिषोऽव रुन्धे। आयुः पुरस्तादाह। प्रजा न्दक्षिणतः। प्राणं पश्चात्। श्रोत्र मुत्तरतः। विधृति मुपरिष्टात्। प्राणानेवास्मै समीचो दधाति। ईश्वरो वा एष दिशोऽनून्मदितोः। यन्दिशोऽनु व्यास्थापयन्ति।। 36।। ❀ मनो रश्वाऽसि भूरि पुत्रेतीमा मभि मृशति। इयँ वै मनो रश्वा भूरिपुत्रा। अस्यामेव प्रतितिष्ठ त्यनुन्मादाय। सूपसदा मे भूया मा मा हिꣳसी रित्याहाहिꣳसायै। चितस्स्थस परिचित इत्याह। अपचिति मेवास्मि न्दधाति। शिरो वा एत द्यज्ञस्य। यत्प्रवर्ग्यः। असौ खलु वा आदित्यः प्रवर्ग्यः। तस्य मरुतो रश्मयः।। 37।। ❀ स्वाहा मरुद्भिः परि श्रयस्वेत्याह। अमु मेवाऽऽदित्यꣳ रश्मिभिः पर्यूहति। तस्मा दसावादित्योऽमुष्मि न्लोके रश्मिभिः पर्यूढः। तस्माद्राजा विशा पर्यूढः। तस्माद्ग्रामणी स्सजातैः पर्यूढः। अग्ने स्सृष्टस्य यतः। विकङ्कतं भा आर्च्छत्। यद्वैकङ्कताः परिधयो भवन्ति। भा एवाव रुन्धे। द्वादश भवन्ति।। 38।। ❀ द्वादश मासा स्सँवथ्सरः। सँवथ्सर मेवाव रुन्धे। अस्ति त्रयोदशो मास इत्याहुः। यत्त्रयोदशः परिधि र्भवति। तेनैव त्रयोदशं मास मव रुन्धे। अन्तरिक्षस्यान्तर्धि रसीत्याह व्यावृत्त्यै। दिव न्तपस स्त्रायस्वे त्युपरिष्टा द्धिरण्य मधि नि दधाति। अमुष्या अनतिदाहाय। अथो आभ्यामेवैन मुभयतः परि गृह्णाति। अर्हन् बिभर्षि सायकानि धन्वेत्याह।। 39।। ❀ स्तौत्येवैन मेतत्। गायत्रमसि त्रैष्टुभमसि जागत मसीति धवित्राण्या दत्ते। छन्दोभि रेवैनान्या दत्ते। मधु मध्विति धूनोति। प्राणो वै मधु। प्राणमेव यजमाने दधाति। त्रिः परि यन्ति। त्रिवृद्धि प्राणः। त्रिः परि यन्ति। त्र्यावृद्धि यज्ञः।। 40।। ❀ अथो रक्षसा मपहत्यै। त्रिः पुनः परि यन्ति। षट्थ्सं पद्यन्ते। षड्वा ऋतवः। ऋतुष्वेव प्रतितिष्ठन्ति। यो वै घर्मस्य प्रिया न्तनुव माक्रामति। दुश्चर्मा वै स भवति। एष ह वा अस्य प्रिया न्तनुव मा क्रामति। यस्त्रिः परीत्य चतुर्थं पर्येति। एताꣳ ह वा अस्योग्रदेवो राजनि राचक्राम।। 41।। ❀ ततो वै स दुश्चर्माऽभवत्। तस्मात्त्रिः परीत्य न चतुर्थं परीयात्। आत्मनो गोपीथाय। प्राणा वै धवित्राणि। अव्यतिषङ्ग न्धून्वन्ति। प्राणाना

मव्यतिषङ्गाय क्लृप्त्यै। विनिषद्य धून्वन्ति। दिक्ष्वेव प्रति तिष्ठन्ति। ऊर्ध्वं न्धून्वन्ति। सुवर्गस्य लोकस्य समष्ट्यै। सर्वतो धून्वन्ति। तस्मादय५ सर्वतः पवते।। 42।। (दधातीवान्वाह यज्ञस्याहैष उपरिष्टादाशी रन्यो व्यास्थापयन्ति रश्मयो भवन्ति धन्वेत्याह यज्ञ श्चक्राम समष्ट्यै द्वे च। 4।)

❀ अग्निष्ट्वा वसुभिः पुरस्ता द्रोचयतु गायत्रेण छन्दसेत्याह। अग्निरेवैनँ वसुभिः पुरस्ता द्रोचयति गायत्रेण छन्दसा। स मा रुचितो रोचयेत्याह। आशिष मेवैता माशास्ते। इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसेत्याह। इन्द्र एवैन५ रुद्रै र्दक्षिणतो रोचयति त्रैष्टुभेन छन्दसा। स मा रुचितो रोचयेत्याह। आशिष मेवैता माऽऽशास्ते। वरुणस्त्वा ऽऽदित्यैः पश्चा द्रोचयतु जागतेन छन्दसेत्याह। वरुण एवैन मादित्यैः पश्चा द्रोचयति जागतेन छन्दसा।। । 43।। ❀ स मा रुचितो रोचयेत्याह। आशिष मेवैता माशास्ते। द्युतानस्त्वा मरुतो मरुद्भि रुत्तरतो रोचय त्वानुष्टुभेन छन्दसेत्याह। द्युतान एवैनं मारुतो मरुद्भि रुत्तरतो रोचय त्यानुष्टुभेन छन्दसा। स मा रुचितो रोचयेत्याह। आशिष मेवैता माशास्ते। बृहस्पतिस्त्वा विश्वै र्देवै रुपरिष्टा द्रोचयतु पाङ्क्तेन छन्दसेत्याह। बृहस्पति रेवैनँ विश्वै र्देवै रुपरिष्टा द्रोचयति पाङ्क्तेन छन्दसा। स मा रुचितो रोचयेत्याह। आशिष मेवैता माशास्ते।। 44।। ❀ रोचित स्त्वन्देव घर्म देवेष्वसीत्याह। रोचितो ह्येष देवेषु। रोचिषीयाहं मनुष्येष्वित्याह। रोचत एवैष मनुष्येषु। सम्राड्घर्म रुचितस्त्व न्देवेष्वायुष्मा५ स्तेजस्वी ब्रह्मवर्चस्यसीत्याह। रुचितो ह्येष देवेष्वायुष्मा५ स्तेजस्वी ब्रह्मवर्चसी। रुचितोऽहं मनुष्येष्वायुष्मा५ स्तेजस्वी ब्रह्मवर्चसी भूयासमित्याह। रुचित एवैष मनुष्येष्वायुष्मा५ स्तेजस्वी ब्रह्मवर्चसी भवति। रुगसि रुचं मयि धेहि मयि रुगित्याह। आशिष मेवैतामाशास्ते। तँ यदेतै र्यजुर्भि ररोचयित्वा।卐 रुचितो घर्म - इति प्रब्रूयात्। अरोचुकोऽध्वर्यु स्स्यात्। अरोचुको यजमानः। अथ यदेन मेतै र्यजुर्भी रोचयित्वा। रुचितो घर्म इति प्राऽऽह। रोचुकोऽध्वर्यु र्भवति। रोचुको यजमानः।। 45।। (पश्चाद्रोचयति जागतेन छन्दसा स मा रुचितो रोचयेत्याहा ऽऽशिष मेवैता माशास्ते शास्तेऽष्टौ च। 5।)

❀ शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। ग्रीवा उपसदः। पुरस्ता दुपसदां प्रवर्ग्यं प्र वृणक्ति। ग्रीवास्वेव यज्ञस्य शिरः प्रति दधाति। त्रिः प्र वृणक्ति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो यज्ञस्य शिरोऽव रुन्धे। षट्थ्सं पद्यन्ते। षड्वा ऋतवः।। 46।। ❀ ऋतुभ्य एव यज्ञस्य शिरोऽव रुन्धे। द्वादशकृत्वः प्र वृणक्ति। द्वादश मासा स्संवथ्सरः। सँवथ्सरादेव यज्ञस्य शिरोऽव रुन्धे। चतुर्वि५शति स्सं पद्यन्ते। चतुर्वि५शति रर्धमासाः। अर्धमासेभ्य एव यज्ञस्य शिरोऽव रुन्धे। अथो खलु। सकृदेव प्रवृज्यः। एक५

हि शिरः।। 47।। ❀ अग्निष्टोमे प्र वृणक्ति। एतावान् वै यज्ञः। यावा नग्निष्टोमः। यावानेव यज्ञः। तस्य शिरः प्रति दधाति। नोक्थ्ये प्र वृञ्ज्यात्। प्रजा वै पशव उक्थानि। यदुक्थ्ये प्रवृञ्ज्यात्। प्रजां पशूनस्य निर्दहेत्। विश्वजिति सर्वपृष्ठे प्र वृणक्ति।। 48।। ❀ पृष्ठानि वा अच्युत ञ्च्यावयन्ति। पृष्ठै रेवास्मा अच्युत ञ्च्यावयित्वाऽव रुन्धे। अपश्य ङ्गोपामित्याह। प्राणो वै गोपाः। प्राणमेव प्रजासु वि यातयति। अपश्य ङ्गोपा मित्याह। असौ वा आदित्यो गोपाः। स हीमाः प्रजा गोपायति। तमेव प्रजाना ङ्गोप्तार ङ्कुरुते। अनिपद्यमान मित्याह।। 49।। ❀ न ह्येष निपद्यते। आ च परा च पथिभि श्चरन्त मित्याह। आ च ह्येष परा च पथिभि श्चरति। स सध्रीची स्सविषूची र्वसान इत्याह। सध्रीचीश्च ह्येष विषूचीश्च वसानः प्रजा अभि विपश्यति। आ वरीवर्ति भुवनेष्वन्त रित्याह। आ ह्येष वरीवर्ति भुवनेष्वन्तः। अत्र प्रावी र्मधु माध्वीभ्यां मधु माधूचीभ्या मित्याह। वासन्तिका वेवास्मा ऋतू कल्पयति। समग्नि रग्निना गतेत्याह।। 50।। ❀ ग्रैष्मा वेवास्मा ऋतू कल्पयति। समग्नि रग्निना गतेत्याह। अग्निर्ह्येवैषोऽग्निना सङ्गच्छते। स्वाहा समग्नि स्तपसा गतेत्याह। पूर्वमेवोदितम्। उत्तरेणाभि गृणाति। धर्ता दिवो विभासि रजसः पृथिव्या इत्याह। वार्षिकावेवास्मा ऋतू कल्पयति। हृदे त्वा मनसे त्वेत्याह। शारदा वेवास्मा ऋतू कल्पयति।। 51।। ❀ दिवि देवेषु होत्रा यच्छेत्याह। होत्राभि रेवेमा न्लोका न्थ्सदधाति। विश्वासां भुवां पत इत्याह। हैमन्तिका वेवास्मा ऋतू कल्पयति। देवश्रू स्त्व न्देव घर्म देवा न्पाहीत्याह। शैशिरावेवास्मा ऋतू कल्पयति। तपोजाँ वाच मस्मे नियच्छ देवायुव मित्याह। या वै मेध्या वाक्। सा तपोजाः। तामेवाव रुन्धे।। 52।। ❀ गर्भो देवाना मित्याह। गर्भो ह्येष देवानाम्। पिता मतीना मित्याह। प्रजा वै मतयः। तासामेष एव पिता। यत्प्रवर्ग्यः। तस्मा देवमाह। पतिः प्रजाना मित्याह। पति र्ह्येष प्रजानाम्। मतिः कवीना मित्याह।। 53।। ❀ मति र्ह्येष कवीनाम्। सन्देवो देवेन सवित्राऽयतिष्ट सꣳ सूर्येणारुक्तेत्याह। अमुञ्चैवाऽऽदित्यं प्रवर्ग्यञ्च सꣳशास्ति। आयुर्दास्त्व मस्मभ्य ङ्घर्म वर्चोदा असीत्याह। आशिष मेवैता माशास्ते। पिता नोऽसि पिता नो बोधेत्याह। बोधय त्येवैनम्। नवैतेऽवकाशा भवन्ति। पत्नियै दशमः। नव वै पुरुषे प्राणाः।। 54।। ❀ नाभि र्दशमी। प्राणानेव यजमाने दधाति। अथो दशाक्षरा विराट्। अन्नँ विराट्। विराजैवान्नाद्य मव रुन्धे। यज्ञस्य शिरोऽच्छिद्यत। तद्देवा होत्राभिः प्रत्यदधुः। ऋत्विजो ऽवेक्षन्ते। एता वै होत्राः। होत्राभिरेव यज्ञस्य शिरः प्रति दधाति।। 55।। ❀ रुचित मवेक्षन्ते। रुचिताद्वै प्रजापतिः प्रजा असृजत। प्रजानाꣳ सृष्ट्यै। रुचित मवेक्षन्ते। रुचिताद्वै पर्जन्यो वर्षति। वर्षुकः पर्जन्यो भवति। सं प्रजा एधन्ते। रुचित

मवेक्षन्ते। रुचितँ वै ब्रह्मवर्चसम्। ब्रह्मवर्चसिनो भवन्ति।। 56।। ❀ अधीयन्तोऽवेक्षन्ते। सर्वमायुर्यन्ति। न पल्यवेक्षेत। यत्पल्यवेक्षेत। प्र जायेत। प्रजा न्त्वस्यै निर्दहेत्। यन्नावेक्षेत। न प्रजायेत। नास्यै प्रजा न्निर्दहेत्। तिरस्कृत्य यजु र्वाचयति। प्र जायते। नास्यै प्रजा न्निर्दहति। त्वष्टीमती ते सपेयेत्याह। सपाद्धि प्रजाः प्रजायन्ते।। 57।। (ऋतवो हि शिर स्सर्वपृष्ठे प्र वृणक्त्यनिपद्यमान मित्याह गतेत्याह शारदावेवास्मा ऋतू कल्पयति रुन्धे कवीना मित्याह प्राणाः प्रति दधाति भवन्ति वाचयति चत्वारि च। 61)

❀ देवस्य त्वा सवितुः प्रसव इति रशना मा दत्ते प्रसूत्यै। अश्विनो र्बाहुभ्या मित्याह। अश्विनौ हि देवाना मध्वर्यू आस्ताम्। पूष्णो हस्ताभ्या मित्याह यत्यै। आददेऽदित्यै रास्नाऽसीत्याह यजुष्कृत्यै। इड एह्यदित एहि सरस्वत्येहीत्याह। एतानि वा अस्यै देवनामानि। देवनामै रेवैना मा ह्वयति। असावे.ह्यसा वे.ह्यसा वेहीत्याह। एतानि वा अस्यै मनुष्यनामानि।। 58।। ❀ मनुष्यनामै रेवैना मा ह्वयति। षट्थ्सं पद्यन्ते। षड्वा ऋतवः। ऋतुभि रेवैना माह्वयति। अदित्या उष्णीष मसीत्याह। यथायजु रेवैतत्। वायुरस्यैड इत्याह। वायुदेवत्यो वै वथ्सः। पूषा त्वोपावसृज त्वित्याह। पौष्णा वै देवतया पशवः।। 59।। ❀ स्वयैवैन न्देवतयोपावसृजति। अश्विभ्यां प्रदापयेत्याह। अश्विनौ वै देवानां भिषजौ। ताभ्या मेवास्मै भेषज ङ्करोति। यस्ते स्तन श्शशय इत्याह। स्तौत्येवैनाम्। उस्र घर्मँ शिँषोस्र घर्मं पाहि घर्माय शिँषेत्याह। यथा ब्रूया दमुष्मै देहीति। तादृगेव तत्। बृहस्पति स्त्वोपसीद त्वित्याह।। 60।। ❀ ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवैना मुप सीदति। दानवस्स्थ पेरव इत्याह। मेध्या नेवैना न्करोति। विष्वग्वृतो लोहितेनेत्याह व्यावृत्त्यै। अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पिन्वते। इन्द्राय पिन्वस्वेन्द्राय पिन्वस्वेत्याह। इन्द्रमेव भागधेयेन समर्धयति। द्विरिन्द्रायेत्याह।। 61।। ❀ तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः। गायत्रोऽसि त्रैष्टुभोऽसि जागतमसीति शफोपयमा नादत्ते। छन्दोभि रेवैना नादत्ते। सहोर्जो भागेनोपमेहीत्याह। ऊर्ज एवैनं भाग मकः। अश्विनौ वा एतद्यज्ञस्य शिरः प्रतिदधता वब्रूताम्। आवाभ्यामेव पूर्वाभ्याँ वषड्क्रियाता इति। इन्द्राश्विना मधुन स्सारघस्येत्याह। अश्विभ्या मेव पूर्वाभ्याँ वषड्करोति। अथो अश्विनावेव भागधेयेन समर्धयति।। 62।। ❀ घर्मं पात वसवो यजता वडित्याह। वसूनेव भागधेयेन समर्धयति। यद्वषड्कुर्यात्। यातयामाऽस्य वषड्कारस्स्यात्। यन्न वषड्कुर्यात्। रक्षाँसि यज्ञँ हन्युः। वडित्याह। परोऽक्षमेव वषड्करोति। नास्य यातयामा वषड्कारो भवति। न यज्ञँ रक्षाँसि

घ्नन्ति।। 63।। ❀ स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्याह। यो वा अस्य पुण्यो रश्मिः। स वृष्टिवनिः। तस्मा एवैन ञ्जुहोति। मधु हविरसीत्याह। स्वदयत्येवैनम्। सूर्यस्य तप स्तपेत्याह। यथायजु रेवैतत्। द्यावापृथिवीभ्यान्त्वा परि गृह्णामीत्याह। द्यावापृथिवीभ्या मेवैनं परि गृह्णाति।। 64।। ❀ अन्तरिक्षेण त्वोप यच्छा मीत्याह। अन्तरिक्षेणैवैन मुप यच्छति। न वा एतं मनुष्यो भर्तु मर्हति। देवानान्त्वा पितृणा मनुमतो भर्तुꣳ शकेय मित्याह। देवैरेवैनं पितृभि रनुमत आदत्ते। वि वा एन मेत दर्धयन्ति। यत्पश्चात्प्रवृज्य पुरो जुह्वति। तेजोऽसि तेजोऽनु प्रेहीत्याह। तेज एवास्मि न्दधाति। दिविस्पृञ्मा मा हिꣳसी रन्तरिक्षस्पृञ्मा मा हिꣳसीः पृथिविस्पृञ्मा मा हिꣳसी रित्याहाहिꣳसायै।। 65।। ❀ सुवरसि सुवर्मे यच्छ दिवँ यच्छ दिवो मा पाहीत्याह। आशिष मेवैता माशास्ते। शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। आत्मा वायुः। उद्यत्य वातनामान्याह। आत्मन्नेव यज्ञस्य शिरः प्रति दधाति। अनवानम्। प्राणानाꣳ सन्तत्यै। पञ्चाऽऽह।। 66।। ❀ पाङ्क्तो यज्ञः। यावानेव यज्ञः। तस्य शिरः प्रति दधाति। अग्नये त्वा वसुमते स्वाहेत्याह। असौ वा आदित्योऽग्नि र्वसुमान्। तस्मा एवैन ञ्जुहोति। सोमाय त्वा रुद्रवते स्वाहेत्याह। चन्द्रमा वै सोमो रुद्रवान्। तस्मा एवैन ञ्जुहोति। वरुणाय त्वाऽऽदित्यवते स्वाहेत्याह।। 67।। ❀ अप्सु वै वरुण आदित्यवान्। तस्मा एवैन ञ्जुहोति। बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मण एवैन ञ्जुहोति। सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहेत्याह। सँवथ्सरो वै सवितर्भुमान् विभुमा न्प्रभुमान् वाजवान्। तस्मा एवैन ञ्जुहोति। यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहेत्याह। प्राणो वै यमोऽङ्गिरस्वा न्पितृमान्।। 68।। ❀ तस्मा एवैन ञ्जुहोति। एताभ्य एवैन न्देवताभ्यो जुहोति। दश सं पद्यन्ते। दशाक्षरा विराट्। अन्नँ विराट्। विराजैवान्नाद्य मवरुन्धे। रौहिणाभ्याँ वै देवा स्सुवर्गँ लोक मायन्न्। तद्रौहिणयो रौहिणत्वम्। यद्रौहिणौ भवतः। रौहिणाभ्यामेव तद्यजमान स्सुवर्गँ लोकमेति। अहर्ज्योतिः केतुना जुषताꣳ सुज्योति ज्योतिषाꣳ स्वाहा रात्रि ज्योतिः केतुना जुषताꣳ सुज्योति ज्योतिषाꣳ स्वाहेत्याह। आदित्यमेव तदमुष्मि न्लोकेऽह्ना परस्ता द्दाधार। रात्रिया अवस्तात्। तस्मा दसावादित्योऽमुष्मि न्लोके ऽहोरात्राभ्या न्धृतः।। 69।।(मनुष्यनामानि पशव स्सीद त्वित्याहेन्द्रायेत्या. हार्धयति घ्नन्ति गृह्णात्यहिꣳसायै पञ्चाऽऽहाऽऽदित्यवते स्वाहेत्याह पितृमानेति चत्वारि च। 7।)

❀ विश्वा आशा दक्षिणसदित्याह। विश्वानेव देवा न्प्रीणाति। अथो दुरिष्ट्या एवैनं पाति। विश्वा न्देवा नयाडिहेत्याह। विश्वानेव देवा न्भागधेयेन समर्धयति। स्वाहाकृतस्य घर्मस्य मधोः पिबत

मश्विनेत्याह। अश्विना वेव भागधेयेन समर्धयति। स्वाहाऽग्नये यज्ञियाय शँ यजुर्भि रित्याह। अभ्यैवैन ङ्घारयति। अथो हविरेवाकः।। 70।। ❀ अश्विना घर्मं पात९ हार्दिवान महर्दिवाभि रूतिभि रित्याह। अश्विना वेव भागधेयेन समर्धयति। अनु वान्द्यावापृथिवी म९साता मित्याहानुमत्यै। स्वाहेन्द्राय स्वाहेन्द्रा वडित्याह। इन्द्राय हि पुरो हूयते। आश्राव्याऽऽह- ॐ घर्मस्य यजे-ति। वषट्कृते जुहोति। रक्षसा मपहत्यै। अनु यजति स्वगाकृत्यै। घर्म मपात मश्विनेत्याह।। 71।। ❀ पूर्वमेवोदितम्। उत्तरेणाभि गृणाति। अनु वा न्द्यावापृथिवी अम९साता मित्याहानुमत्यै। तं प्राव्यँ यथावण्णमो दिवे नमः पृथिव्या इत्याह। यथायजु रेवैतत्। दिविधा इमँ यज्ञँ यज्ञ मिम न्दिविधा इत्याह। सुवर्ग मेवैनँ लोक ङ्गमयति। दिव ङ्गच्छान्तरिक्ष ङ्गच्छ पृथिवी ङ्गच्छेत्याह। एष्वेवैनँ लोकेषु प्रतिष्ठापयति। पञ्च प्रदिशो गच्छेत्याह।। 72।। ❀ दिक्ष्वेवैनं प्रतिष्ठापयति। देवा न्घर्मपा न्गच्छ पितृ न्घर्मपा न्गच्छेत्याह। उभयेष्वेवैनं प्रतिष्ठापयति। यत्पिन्वते। वर्षुकः पर्जन्यो भवति। तस्मा त्पिन्वमानः पुण्यः। यत्प्राङ्पिन्वते। तद्देवानाम्। यद्दक्षिणा। तत्पितृणाम्।। 73।। ❀ यत्प्रत्यक्। तन्मनुष्याणाम्। यदुदङ्। तद्रुद्राणाम्। प्राञ्च मुदञ्चं पिन्वयति। देवत्राऽकः। अथो खलु। सर्वा अनु दिशः पिन्वयति। सर्वा दिश स्समेधन्ते। अन्तःपरिधि पिन्वयति।। 74।। ❀ तेजसोऽस्कन्दाय। इषे पीपिह्यूर्जे पीपिहीत्याह। इषमेवोर्जँ यजमाने दधाति। यजमानाय पीपिहीत्याह। यजमानायैवैता माशिषमा शास्ते। मह्य ञ्ज्यैष्ठ्याय पीपिहीत्याह। आत्मन एवैता माशिष माशास्ते। त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वेत्याह। यथायजु रेवैतत्। धर्माऽसि सुधर्मा मे न्यस्मे ब्रह्माणि धारयेत्याह।। 75।। ❀ ब्रह्मन्नेवैनं प्रतिष्ठापयति। नेत्त्वा वात स्स्कन्दयादिति यद्यभिचरेत्। अमुष्य त्वा प्राणे सादयाम्यमुना सह निरर्थ ङ्गच्छेति ब्रूया द्यन्द्विष्यात्। यमेव द्वेष्टि। तेनैन९ सह निरर्थ ङ्गमयति। पूष्णे शरसे स्वाहेत्याह। या एव देवता हुतभागाः। ताभ्य एवैन ञ्जुहोति। ग्रावभ्य स्स्वाहेत्याह। या एवान्तरिक्षे वाचः।। 76।। ❀ ताभ्य एवैन ञ्जुहोति। प्रतिरेभ्य स्स्वाहेत्याह। प्राणा वै देवाः प्रतिराः। तेभ्य एवैन ञ्जुहोति। द्यावापृथिवीभ्या९ स्वाहेत्याह। द्यावापृथिवीभ्या मेवैन ञ्जुहोति। पितृभ्यो घर्मपेभ्य स्स्वाहेत्याह। ये वै यज्वानः। ते पितरो घर्मपाः। तेभ्य एवैन ञ्जुहोति।। 77।। ❀ रुद्राय रुद्रहोत्रे स्वाहेत्याह। रुद्रमेव भागधेयेन समर्धयति। सर्वत स्समनक्ति। सर्वत एव रुद्र न्निरवदयते। उदञ्च न्निरस्यति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्र न्निरवदयते। अप उप स्पृशति मेध्यत्वाय। नान्वीक्षेत। यदन्वीक्षेत।। 78।। ❀ चक्षुरस्य प्रमायुकङ् स्यात्। तस्मा न्नान्वीक्ष्यः। अपीपरो माऽह्नो रात्रियै मा पाह्येषा ते अग्ने समित्तया

समिध्यस्वाऽऽयुर्मे दा वर्चसा माञ्ज्ञी रित्याह। आयु रेवास्मिन्वर्चो दधाति। अपीपरो मा रात्रिया अह्नो मा पाह्येषा ते अग्ने समित्तया समिध्यस्वाऽऽयुर्मे दा वर्चसा माञ्ज्ञीरित्याह। आयु रेवास्मिन्वर्चो दधाति। अग्नि र्ज्योति र्ज्योति रग्नि स्स्वाहा सूर्यो ज्योति र्ज्योति स्सूर्य स्स्वाहेत्याह। यथायजु रेवैतत्। ब्रह्मवादिनो वदन्ति। होतव्य मग्निहोत्राँ '3' न होतव्या '3' मिति।। 79।। ❀ यद्यजुषा जुहुयात्। अयथापूर्व माहुती जुहुयात्। यन्न जुहुयात्। अग्निः परा भवेत्। भूस्स्वाहेत्येव होतव्यम्। यथापूर्व माहुती जुहोति। नाग्निः पराभवति। हुत॰ हवि र्मधु हविरित्याह। स्वदय त्येवैनम्। इन्द्रतमेऽग्ना वित्याह।। 80।। ❀ प्राणो वा इन्द्रतमोऽग्निः। प्राण एवैन मिन्द्रतमेऽग्नौ जुहोति। पिता नोऽसि मा मा हि॰सी रित्याहाहि॰सायै। अश्याम ते देवघर्म मधुमतो वाजवतः पितुमत इत्याह। आशिष मेवैता माशास्ते। स्वधाविनोऽशीमहि त्वा मा मा हि॰सी रित्याहाहि॰सायै। तेजसा वा एते व्यृध्यन्ते। ये प्रवर्ग्येण चरन्ति। प्राश्ञन्ति। तेज एवाऽऽत्म न्दधते।। 81।। ❀ सँवथ्सरन्न मा॰स मश्ञीयात्। न रामा मुपेयात्। न मृन्मयेन पिबेत्। नास्य राम उच्छिष्टं पिबेत्। तेज एव तथ्सꣳश्यति। देवासुरा स्सँयत्ता आसन्न्। ते देवा विजय मुपयन्तः। विभ्राजि सौर्ये ब्रह्म सन्न्यदधत। यत्किञ्च दिवाकीर्त्यम्। तदेते नैव व्रतेनागोपायत्। तस्मा देतद्व्रत ञ्चार्यम्। तेजसो गोपीथाय। तस्मा देतानि यजूꣳषि विभ्राज स्सौर्यस्येत्याहुः। स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रात स्स॰ सादयति। स्वाहा त्वा नक्षत्रेभ्य इति सायम्। एता वा एतस्य देवताः। ताभिरेवैन॰ समर्धयति।। 82।। (अक रश्विनेत्याह प्रदिशो गच्छेत्याह पितृणा मन्तःपरिधि पिन्वयति धारयेत्याह वाचो घर्मपा स्तेभ्य एवैन ञ्जुहोत्यन्वीक्षेत होतव्या '3' मित्यग्ना वित्याह दधते गोपाय थ्सप्त च। 8।)

❀ घर्म या ते दिवि शुगिति तिस्र आहुती र्जुहोति। छन्दोभि रेवास्यैभ्यो लोकेभ्य श्शुच मव यजते। इयत्यग्रे जुहोति। अथेयत्यथेयति। त्रय इमे लोकाः। एभ्य एव लोकेभ्य श्शुच मव यजते। अनुनोऽद्यानुमति रित्याहानुमत्यै। दिवस्त्वा परस्पाया इत्याह। दिव एवेमा न्लोका न्दाधार। ब्रह्मणस्त्वा परस्पाया इत्याह।। 83।। ❀ एष्वेव लोकेषु प्रजा दाधार। प्राणस्य त्वा परस्पाया इत्याह। प्रजास्वेव प्राणा न्दाधार। शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। असौ खलु वा आदित्यः प्रवर्ग्यः। तँ यद्दक्षिणा प्रत्यञ्च मुदञ्च मुद्वासयेत्। जिह्मँ यज्ञस्य शिरो हरेत्। प्राञ्च मुद्वासयति। पुरस्तादेव यज्ञस्य शिरः प्रति दधाति।। 84।। ❀ प्राञ्च मुद्वासयति। तस्मा दसावादित्यः पुरस्ता दुदेति। शफोपयमा न्धवित्राणि धृष्टी इत्यन्ववहरन्ति। साऽऽत्मान मेवैन॰ सतनु ङ्करोति। साऽऽत्मा ऽमुष्मि न्लोके भवति। य एवँ वेद।

औदुम्बराणि भवन्ति। ऊर्ग्वा उदुम्बरः। ऊर्जं मेवाव रुन्धे। वर्त्मना वा अन्वित्य।। 85।।❀ यज्ञ॰ रक्षा॰सि जिघा॰सन्ति। साम्ना प्रस्तोता ऽन्ववैति। साम वै रक्षोहा। रक्षसा मपहत्यै। त्रिर्निधन मुपैति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो रक्षा॰स्यप हन्ति। पुरुषःपुरुषो निधन मुपैति। पुरुषःपुरुषो हि रक्षस्वी। रक्षसा मपहत्यै।। 86।।❀ यत्पृथिव्या मुद्वासयेत्। पृथिवी॰ शुचा ऽर्पयेत्। यदप्सु। अप श्शुचा ऽर्पयेत्। यदोषधीषु। ओषधी श्शुचा ऽर्पयेत्। यद्वनस्पतिषु। वनस्पती न्छुचा ऽर्पयेत्। हिरण्य न्निधायोद्वासयति। अमृतँ वै हिरण्यम्।। 87।।❀ अमृत एवैनं प्रतिष्ठापयति। वल्गुरसि शँयुधाया इति त्रिः परिषिञ्च न्पर्येति। त्रिवृद्वा अग्निः। यावा नेवाग्निः। तस्य शुच॰ शमयति। त्रिः पुनः पर्येति। षट्थ्सं पद्यन्ते। षड्वा ऋतवः। ऋतुभि रेवास्य शुच॰ शमयति। चतुस्स्रक्ति र्नाभिर् ऋतस्येत्याह।। 88।।❀ इयँ वा ऋतम्। तस्या एष एव नाभिः। यत्प्रवर्ग्यः। तस्मा देवमाह। सदो विश्वाऽऽयु रित्याह। सदो हीयम्। अप द्वेषो अप ह्वर इत्याह भ्रातृव्यापनुत्यै। घर्मैतत्तेऽन्न मेतत्पुरीष मिति दध्ना मधुमिश्रेण पूरयति। ऊर्ग्वा अन्नाद्य न्दधि। ऊर्जैवैन मन्नाद्येन समर्धयति।। 89।।❀ अनशनायुको भवति। य एवँ वेद। रन्ति र्नामासि दिव्यो गन्धर्व इत्याह। रूप मेवास्यैत न्महिमान॰ रन्तिं बन्धुताँ व्याचष्टे। समह मायुषा सं प्राणेनेत्याह। आशिष मेवैता माशास्ते। व्यसौ योऽस्मा न्द्वेष्टि यञ्च वय न्द्विष्म इत्याह। अभिचार एवास्यैषः। अचिक्रद द्वृषा हरि रित्याह। वृषा ह्येषः।। 90।।❀ वृषा हरिः। महा न्मित्रो न दर्शत इत्याह। स्तौत्येवैन मेतत्। चिदसि समुद्रयोनि रित्याह। स्वामेवैनँ योनिङ्गमयति। नमस्ते अस्तु मा मा हि॰सी रित्याहाहि॰सायै। विश्वावसु॰ सोमगन्धर्व मित्याह। यदेवास्य क्रियमाणस्यान्तर्यन्ति। तदेवास्यैतेनाऽऽ प्याययति। विश्वावसु रभितन्नो गृणात्वित्याह।। 91।।❀ पूर्वमेवोदितम्। उत्तरेणाभि गृणाति। धियो हिन्वानो धिय इन्नो अव्यादित्याह। ऋतू नेवास्मै कल्पयति। प्राऽऽसा ङ्गन्धर्वो अमृतानि वोचदित्याह। प्राणा वा अमृताः। प्राणा नेवास्मै कल्पयति। एतत्त्व न्देव घर्म देवो देवा नुपागा इत्याह। देवो ह्येष सन्देवा नुपैति। इद महं मनुष्यो मनुष्यानित्याह।। 92।।❀ मनुष्यो हि। एष सन्मनुष्या नुपैति। ईश्वरो वै प्रवर्ग्य मुद्वासयन्न्। प्रजां पशू न्थ्सोमपीथ मनूद्वास स्सोमपीथानु मेहि। सह प्रजया सह राय स्पोषेणेत्याह। प्रजामेव पशून्थ्सोमपीथ मात्म न्धत्ते। सुमित्रा न आप ओषधय स्सन्त्वित्याह। आशिष मेवैता माशास्ते। दुर्मित्रा स्तस्मै भूयासु र्योऽस्मा न्द्वेष्टि यँ च वय न्द्विष्म इत्याह। अभिचार एवास्यैषः। प्र वा एषोऽस्माल्लोका च्च्यवते। यः प्रवर्ग्य मुद्वासयति। उदुत्य ञ्चित्रमिति सौरीभ्या मृग्भ्यां पुनरेत्य गार्हपत्ये जुहोति। अयँ वै लोको गार्हपत्यः। अस्मिन्नेव लोके प्रतितिष्ठति। असौ खलु वा

आदित्य स्सुवर्गो लोकः। यथ्सौरी भवतः। तेनैव सुवर्गा ल्लोकान्नैति।। 93।। (ब्रह्मणस्त्वा परस्पाया इत्याह दधात्यन्वित्य रक्षस्वी रक्षसा मपहत्यै वै हिरण्य माहार्धयति ह्येष गृणा त्वित्याह मनुष्या नित्याहास्यैषोऽष्टौ च। 9।)

प्रजापतिँ वै देवा श्शुक्रं पयोऽदुह्रन्न्। तदेभ्यो न व्यभवत्। तदग्नि र्व्यकरोत्। तानि शुक्रियाणि सामान्यभवन्न्। तेषाँ यो रसोऽत्यक्षरत्। तानि शुक्रयजू५ष्यभवन्न्। शुक्रियाणाँ वा एतानि शुक्रियाणि। सामपयसँ वा एतयो रन्यत्। देवाना मन्यत्पयः। यद्गोः पयः।। 94।। तत्साम्नः पयः। यदजायै पयः। तद्देवानां पयः। तस्माद्यत्रै र्यजुर्भि श्चरन्ति। तत्पयसा चरन्ति। प्रजापति मेव तद्देवा न्पयसा ऽन्नाद्येन समर्धयन्ति। एष ह त्वै साक्षात्प्रवर्ग्यं भक्षयति। यस्यैवँविदुषः प्रवर्ग्यः प्रवृज्यते। उत्तरवेद्या मुद्वसाये त्तेजस्कामस्य। तेजो वा उत्तरवेदिः।। 95।। तेजः प्रवर्ग्यः। तेजसैव तेज स्समर्धयति। उत्तरवेद्या मुद्वासये दन्नकामस्य। शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। मुख मुत्तरवेदिः। शीर्ष्णैव मुख५ सन्दधात्यन्नाद्याय। अन्नाद एव भवति। यत्र खलु वा एतमुद्वासितँ वया५सि पर्यासते। परि वै ता५ समां प्रजा वया५स्यासते।। 96।। तस्मा दुत्तरवेद्या मेवोद्वासयेत्। प्रजानां ङ्गोपीथाय। पुरो वा पश्चा द्वोद्वासयेत्। पुरस्ताद्वा एतज्ज्योति रुदेति। तत्पश्चा न्निम्रोचति। स्वामेवैनँ योनि मनूद्वासयति। अपां मध्य उद्वासयेत्। अपाँ वा एतन्मध्या ज्ज्योति रजायत। ज्योतिः प्रवर्ग्यः। स्व एवैनँ योनौ प्रतिष्ठापयति।। 97।। यन्द्विष्यात्। यत्र स स्यात्। तस्या न्दिश्युद्वासयेत्। एष वा अग्नि वैँश्वानरः। यत्प्रवर्ग्यः। अग्निनैवैनँ वैश्वानरेणाभि प्र वर्तयति। औदुम्बर्या५ शाखाया मुद्वासयेत्। ऊर्ग्वा उदुम्बरः। अन्नं प्राणः। शुग्घर्मः।। 98।। इदमह ममुष्या ऽऽमुष्यायणस्य शुचा प्राण मपि दहामी- त्याह। शुचैवास्य प्राण मपि दहति। ताजगार्ति मार्छति। यत्र दर्भा उपदीकसन्ततास्स्युः। तदुद्वासये द्वृष्टिकामस्य। एता वा अपा मनूज्झावर्यो नाम। यद्दर्भाः। असौ खलु वा आदित्य इतो वृष्टि मुदीरयति। असा वेवास्मा आदित्यो वृष्टि न्नि यच्छति। ता आपो नियता धन्वना यन्ति।। 99।। (गोः पय उत्तरवेदिरासते स्थापयति घर्मो यन्ति। 10।)

प्रजापति स्सम्भ्रियमाणः। सम्राट्थ्सम्भृतः। घर्मः प्रवृक्तः। महावीर उद्वासितः। असौ खलु वावैष आदित्यः। यत्प्रवर्ग्यः। स एतानि नामान्यकुरुत। य एवँ वेद। विदुरेन न्नाम्ना। ब्रह्मवादिनो वदन्ति।। 100।। यो वै वसीया५सँ यथानाम मुपचरति। पुण्याऽऽर्तिँ वै स तस्मै कामयते। पुण्याऽऽर्तिमस्मै कामयन्ते। य एवँ वेद। तस्मादेवँ विद्वान्। घर्म इति दिवाऽऽचक्षीत। सम्राडिति नक्तम्।

एते वा एतस्य प्रिये तनुवौ। एते अस्य प्रिये नामनी। प्रिययैवैन न्तनुवा।। 101।।❀ प्रियेण नाम्ना समर्धयति। कीर्तिरस्य पूर्वा ऽऽगच्छति जनता मायतः। गायत्री देवेभ्योऽपाक्रामत्। तान्देवाः प्रवर्ग्येणैवानु व्यभवन्न्। प्रवर्ग्येणाऽऽप्नुवन्न्। यच्चतुर्वि॰शतिकृत्वः प्रवर्ग्यं प्रवृणक्ति। गायत्रीमेव तदनु विभवति। गायत्री माप्नोति। पूर्वाऽस्य जनँ यतः कीर्ति गच्छति। वैश्वदेव स्स॰सन्नः।। 102।।❀ वसवः प्रवृक्तः। सोमोऽभिकीर्यमाणः। आश्विनः पयस्याऽऽनीयमाने। मारुतः क्वथन्न्। पौष्ण उदन्तः। सारस्वतो विष्यन्दमानः। मैत्र श्शरो गृहीतः। तेज उद्यतो वायुः। ह्रियमाणः प्रजापतिः। हूयमानो वाग्घुतः।। 103।।❀ असौ खलु वावैष आदित्यः। यत्प्रवर्ग्यः। स एतानि नामान्यकुरुत। य एवँ वेद। विदु रेन न्नाम्ना। ब्रह्मवादिनो वदन्ति। यन्मृन्मय माहुति न्नाश्ञुतेऽथ। कस्मा देषोऽश्ञुत इति। वागेष इति ब्रूयात्। वाच्येव वाच न्दधाति।। 104।।❀ तस्मादश्ञुते। प्रजापति र्वा एष द्वादशधा विहितः। यत्प्रवर्ग्यः। यत्प्रागवकाशेभ्यः। तेन प्रजा असृजत। अवकाशै र्देवासुरा नसृजत। यदूर्ध्व मवकाशेभ्यः। तेनान्न मसृजत। अन्नं प्रजापतिः। प्रजापति र्वावैषः।। 105।। (वदन्ति तनुवा स॰सन्नो हूयमानो वाग्घुतो दधात्येषः। 11।)

❀ सविता भूत्वा प्रथमेऽह न्प्रवृज्यते। तेन कामा॰ एति। यद्वितीयेऽह न्प्रवृज्यते। अग्नि र्भूत्वा देवानेति। यत्तृतीयेऽह न्प्रवृज्यते। वायु र्भूत्वा प्राणानेति। यच्चतुर्थेऽह न्प्रवृज्यते। आदित्यो भूत्वा रश्मीनेति। यत्पञ्चमेऽह न्प्रवृज्यते। चन्द्रमा भूत्वा नक्षत्राण्येति।। 106।।❀ यत्षष्ठेऽह न्प्रवृज्यते। ऋतु र्भूत्वा सँवथ्सर मेति। यथ्सप्तमेऽह न्प्रवृज्यते। धाता भूत्वा शक्करीमेति। यदष्टमेऽह न्प्रवृज्यते। बृहस्पति र्भूत्वा गायत्रीमेति। यन्नवमेऽह न्प्रवृज्यते। मित्रो भूत्वा त्रिवृत इमा न्लोकानेति। यद्दशमेऽह न्प्रवृज्यते। वरुणो भूत्वा विराजमेति।। 107।।❀ यदेकादशेऽह न्प्रवृज्यते। इन्द्रो भूत्वा त्रिष्टुभमेति। यद्द्वादशेऽह न्प्रवृज्यते। सोमो भूत्वा सुत्यामेति। यत्पुरस्ता दुपसदां प्रवृज्यते। तस्मादितः पराङ्मू न्लोका॰ स्तपन्नेति। यदुपरिष्टा दुपसदां प्रवृज्यते। तस्मा दमुतोऽर्वाङिमा न्लोका॰ स्तपन्नेति। य एवँ वेद। ऐव तपति।। 108।। (नक्षत्राण्येति विराजमेति तपति। 12।)

(देवा वै सत्र॰ सावित्रं परिश्रिते ब्रह्म न्प्रचरिष्यामोऽग्निष्ट्वा शिरो ग्रीवा देवस्य रशनाँ विश्वा आशा घर्मं या ते प्रजापति॰ शुक्रं प्रजापति स्सम्भ्रियमाण स्सविता भूत्वा द्वादश ।12। देवा वै सत्र॰ स खदिरः परिश्रिते ऽभिपूर्व मथो रक्षसां ग्रैष्मा वेवास्मै ब्रह्म वै देवाना मश्विना घर्मं पातं प्राणो वै वृषा हरि र्यो वै वसीया॰सँ यथानाम मष्टोत्तरशतम्। 108। देवा वै सत्र मैव तपति।)

शन्न स्तन्नो मा हासीत्।। ओं शान्ति श्शान्ति श्शान्तिः।।

## आरण्यके षष्ठः प्रपाठकः

### प्रा।का।11द्वादशानुवाकाः )पितृमेध मन्त्राः 5)

卐 ओम्। सन्त्वा सिञ्चामि यजुषा प्रजा मायु र्धनञ्च। ओं शान्ति श्शान्ति श्शान्तिः।।

卐 परेयुवाꣳसं प्रवतो महीरनु बहुभ्यः पन्था मनपस्पशानम्। वैवस्वतꣳ सङ्गमन ञ्जनानाँ यमꣳ राजानꣳ हविषा दुवस्यत।।

卐 इदन्त्वा वस्त्रं प्रथमन्वाग न्नपैतदूह यदिहाबिभः पुरा। इष्टापूर्त मनु सं पश्य दक्षिणाँ यथा ते दत्तं बहुधा विबन्धुषु।।

卐 इमौ युनज्मि ते वह्नी असुनीथाय वोढवे। याभ्याँ यमस्य सादनꣳ सुकृता ञ्चापि गच्छतात्।।

卐 पूषा त्वेतश्च्यावयतु प्रविद्वा ननष्टपशु र्भुवनस्य गोपाः। स त्वैतेभ्यः परि ददा त्पितृभ्योऽग्नि र्देवेभ्य स्सुविदत्रेभ्यः।।

卐 पूषेमा आशा अनुवेद सर्वास्सो अस्माꣳ अभयतमेन नेषत्। स्वस्तिदा अघृणि स्सर्ववीरोऽप्रयुच्छ न्पुर एतु प्रविद्वान्।। 1।।

卐 आयु र्विश्वाऽऽयुः परिपासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात्। यत्राऽऽसते सुकृतो यत्र ते ययु स्तत्र त्वा देव स्सविता दधातु।।

卐 भुवनस्य पत इदꣳ हविः। अग्नये रयिमते स्वाहा।।

卐 पुरुषस्य सयावर्यपे दघानि मृज्महे। यथा नो अत्र नापरः पुरा जरस आयति।।

卐 पुरुषस्य सयावरि वि ते प्राण मसिस्रसम्। शरीरेण मही मिहि स्वधयेहि पितृ नुप प्रजयाऽस्मा निहाऽऽवह।।

卐 मैवं माꣳस्ता प्रियेऽह न्देवी सती पितृलोकँ यदैषि। विश्वावारा नभसा सँव्यय न्त्युभौ नो लोकौ पयसाऽभ्याववृथ्स्व।। 2।।

卐 इयन्नारी पतिलोकँ वृणाना नि पद्यत उप त्वा मर्त्य प्रेतम्। विश्वं पुराण मनु पालयन्ती तस्यै प्रजा न्द्रविण ञ्चेह धेहि।।

卐 उदीर्ष्व नार्यभि जीवलोक मितासु मेत मुपशेष एहि। हस्तग्राभस्य दिधिषो स्त्वमेत त्पत्यु र्जनित्व मभि सम्बभूव।।

卐 सुवर्णꣳ हस्ता दाददाना मृतस्य श्रिये ब्रह्मणे तेजसे बलाय। अत्रैव त्व मिह वयꣳ सुशेवा विश्वास्पृधो अभिमाती जयेम।।

卐 धनुर् हस्ता दाददाना मृतस्य श्रिये क्षत्रायौजसे बलाय। अत्रैव त्वमिह वयꣳ सुशेवा विश्वास्पृधो अभिमाती जयेम।।

卐 मणिꣳ हस्ता दाददाना मृतस्य श्रिये विशे पुष्ट्यै बलाय। अत्रैव त्वमिह वयꣳ सुशेवा विश्वास्पृधो अभिमाती जयेम।। 3।।

❀ 卐 इममग्ने चमसं मा वि जीह्वरः प्रियो देवाना मुत सोम्यानाम्। एष यश्चमसो देवपान स्तस्मिन्देवा अमृता मादयन्ताम्।।

卐 अग्नेर्वर्म परिगोभि र्व्ययस्व सं प्रोर्णुष्व मेदसा पीवसा च। नेत्त्वा धृष्णुर् हरसा जर्हृषाणो दध द्विधक्ष्य न्पर्यङ्खयातै।।

卐 मैन मग्ने विदहो माऽभिशोचो माऽस्य त्वच ञ्चिक्षिपो मा शरीरम्। यदा शृत ङ्करवो जातवेदोऽथेमेनं प्र हिणुता त्पितृभ्यः।।

卐 शृतँ यदा करसि जातवेदोऽथेमेनं परि दत्तात्पितृभ्यः। यदा गच्छा त्यसुनीति मेता मथा देवानाँ वशनी र्भवाति।।

卐 सूर्यन्ते चक्षु र्गच्छतु वात मात्मा द्याञ्च गच्छ पृथिवीञ्च धर्मणा। अपो वा गच्छ यदि तत्र ते हित मोषधीषु प्रति तिष्ठा शरीरैः।।

卐 अजो भाग स्तपसा तन्तपस्व तन्ते शोचि स्तपतु तन्ते अर्चिः। यास्ते शिवा स्तनुवो जातवेद स्ताभि र्वहेमꣳ सुकृताँ यत्र लोकाः।।

卐 अयँ वै त्वमस्मादधि त्वमेत दयँ वै तदस्य योनि रसि। वैश्वानरः पुत्रः पित्रे लोककृ ज्जातवेदो वहेमꣳ सुकृताँ यत्र लोकाः।। 4।। (विद्वा नभ्यावबृथ्स्वाभिमाती जयेम शरीरै श्चत्वारि च। 1।)

❀ 卐 य एतस्य पथो गोप्तार स्तेभ्य स्स्वाहा 卐 य एतस्य पथो रक्षितार स्तेभ्य स्स्वाहा 卐 य एतस्य पथोऽभिरक्षितार स्तेभ्य स्स्वाहा卐ऽख्यात्रे स्वाहा卐ऽपाख्यात्रे स्वाहा卐ऽभिलालपते स्वाहा卐ऽपलालपते स्वाहा卐ऽग्नये कर्मकृते स्वाहा 卐 यमत्र नाधीम स्तस्मै स्वाहा।।

卐 यस्त इध्म ञ्जभर त्थिसिष्विदानो मूर्धानँ वा ततपते त्वाया। दिवो विश्वस्मा त्सीमघायत उरुष्यः।।

Sri Ganapathi Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 अस्मात्त्व मधि जातोऽसि त्वदय ञ्जायतां पुनः। अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा।। 5।। (य एतस्य त्वत्पञ्च। 2)

卐 प्रकेतुना बृहता भात्यग्नि राविर्विश्वानि वृषभो रोरवीति। दिव श्चिदन्ता दुप मा मुदान डपा मुपस्थे महिषो ववर्ध।।

卐 इदन्त एकं पर ऊत एकं न्तृतीयेन ज्योतिषा सँ विशस्व। सँवेशन स्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे।।

卐 नाके सुपर्ण मुपय त्पतन्तꣳ हृदा वेनन्तो अभ्यचक्षत त्वा। हिरण्यपक्षँ वरुणस्य दूतँ यमस्य योनौ शकुनं भुरण्युम्।।

卐 अतिद्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा। अथा पितृ न्थ्सुविदत्राꣳ अपीहि यमेन ये सधमादं मदन्ति।।

卐 यौ ते श्वानौ यमरक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा। ताभ्याꣳ राज न्परि देह्येनꣳ स्वस्ति चास्मा अनमीवञ्च धेहि।। 6।।

卐 उरुणसा वसुतृपा वुलुम्बलौ यमस्य दूतौ चरतो वशाꣳ अनु। तावस्मभ्य न्दृशये सूर्याय पुनर्दत्ता वसुम द्येह भद्रम्।।

卐 सोम एकेभ्यः पवते घृतमेक उपाऽऽसते। येभ्यो मधु प्रधावति ताꣳश्चिदेवापि गच्छतात्।।

卐 ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः। ये वा सहस्र दक्षिणा स्ताꣳश्चिदेवापि गच्छतात्।।

卐 तपसा ये अनाधृष्या स्तपसा ये सुवर्गताः। तपो ये चक्रिरे महत्ताꣳ श्चिदेवापि गच्छतात्।।

卐 अश्मन्वती रेवती स्सꣳ रभध्व मुत्तिष्ठत प्रतरता सखायः। अत्रा जहाम ये अस न्नशेवा श्शिवान् वय मभि वाजा नुत्तरेम।। 7।।

卐 यद्वै देवस्य सवितुः पवित्रꣳ सहस्रधारँ वितत मन्तरिक्षे। येनापुना दिन्द्र मनार्त मार्त्यै तेनाहं माꣳ सर्वतनुं पुनामि।।

卐 या राष्ट्रा त्पन्ना दपयन्ति शाखा अभिमृता नृपति मिच्छमानाः। धातु स्ता स्सर्वाः पवनेन पूताः प्रजयाऽस्मा न्रय्या वर्चसा सꣳसृजाथ।।

卐 उद्वय न्तमस स्परि पश्यन्तो ज्योति रुत्तमम्। देव न्देवत्रा सूर्य मगन्म ज्योति रुत्तमम्।।

卐 धाता पुनातु सविता पुनातु। अग्ने स्तेजसा सूर्यस्य वर्चसा।। 8।। (धेह्युत्तरेमाष्टौ च। 3।)

卐 यन्ते अग्नि ममन्थाम वृषभायेव पक्तवे। इमन्तꣳ शमयामसि क्षीरेण चोदकेन च।।
卐 यन्त्वमग्ने समदह स्त्वमु निर्वापया पुनः। क्याम्बू रत्र जायतां पाकदूर्वा व्यल्कशा।।
卐 शीतिके शीतिकावति ह्लादुके ह्लादुकावति। मण्डूक्यासु सङ्गमयेमꣴ स्वग्निꣳ शमय।।
卐 शन्ते धन्वन्या आप श्शमु ते सन्त्वनूक्याः। शन्ते समुद्रिया आप श्शमु ते सन्तु वर्ष्याः।।
卐 शन्ते स्रवन्ती स्तनुवे शमुते सन्तु कूप्याः। शन्ते नीहारो वर्षतु शमु पृष्वाव शीयताम्।। 9।।

卐 अवसृज पुनरग्ने पितृभ्यो यस्त आहुत श्चरति स्वधाभिः। आयु र्वसान उप यातु शेषꣳ सङ्गच्छता न्तनुवा जातवेदः।।
卐 सङ्गच्छस्व पितृभि स्सꣴ स्वधाभि स्समिष्टापूर्तेन परमे व्योमन्न्। यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देव स्सविता दधातु।।
卐 यत्ते कृष्ण श्शकुन आतुतोद पिपील स्सर्प उत वा श्वापदः। अग्निष्ट द्विश्वा दनृण ङ्कृणोतु सोमश्च यो ब्राह्मण माविवेश।।
卐 उत्तिष्ठात स्तनुवꣳ सम्भरस्व मेह गात्र मवहा मा शरीरम्। यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देव स्सविता दधातु।।
卐 इदन्त एकं पर ऊत एकं न्तृतीयेन ज्योतिषा सँ विशस्व। सँवेशन स्तनुवै चारु रेधि प्रियो देवानां परमे सधस्थे।।
卐 उत्तिष्ठ प्रेहि प्रद्रवौकꣳ कृणुष्व परमे व्योमन्न्। यमेन त्वँ यम्या सँविदानोत्तम न्नाक मधिरोहेमम्।।
卐 अश्मन्वती रेवती[1] ❃ 卐 यद्वै देवस्य सवितुꣳ पवित्रँ[2] ❃ 卐 या राष्ट्रा त्पन्ना[3] ❃ 卐 दुद्वय न्तमस स्परि[4] ❃ 卐 धाता पुनातु[5] ❃।
卐 अस्मा त्त्वमधि जातोऽस्यय न्त्वदधि जायताम्। अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा।। 10।। (अव शीयताꣳ सधस्थे पञ्च च। 4।)

卐 आ यातु देव स्सुमनाभि रूतिभि र्यमो ह वेह प्रयताभि रक्ता। आ सीदताꣳ सुप्रयतेह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्यै।।

1
2
3
4
5

卐 यमे इव यतमाने यदैतं प्रवां भर न्मानुषा देवयन्तः। आ सीदतꣳ स्वमु लोकँ विदाने स्वासस्थे भवत मिन्दवे नः।।
卐 यमाय सोमꣳ सुनुत यमाय जुहुता हविः। यमꣳ ह यज्ञो गच्छ त्यग्निदूतो अरङ्कृतः।।
卐 यमाय घृतवद्धवि र्जुहोत प्र च तिष्ठत। स नो देवे ष्वायम दीर्घ मायुः प्र जीवसे।।
卐 यमाय मधुमत्तमꣳ राज्ञे हव्य ञ्जुहोतन। इद न्नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्ध्यः।। 11।।
❀ 卐 योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी। यमं भङ्ग्यश्रवो गाय यो राजाऽनपरोध्यः।।
卐 यमङ्गाय भङ्ग्यश्रवो यो राजाऽनपरोध्यः। येनापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा।।
卐 हिरण्यकक्ष्या न्थ्सुधुरान् हिरण्याक्षा नयश्शफान्। अश्वा ननश्यतो दानँ यमो राजाऽभितिष्ठति।।
卐 यमो दाधार पृथिवीँ यमो विश्व मिद ञ्जगत्। यमाय सर्व मि [1]त्तस्थे यत्प्राण द्वायु रक्षितम्।।
卐 यथा पञ्च यथा षड्यथा पञ्च दशर्षयः। यमँ यो विद्यात्स ब्रूया द्यथैकऋषि र्विजानते।। 12।।
❀ 卐 त्रिकद्रुकेभिः पतति षडुर्वी रेकमि द्बृहत्। गायत्री त्रिष्टुप्छन्दाꣳसि सर्वा ता यम आहिता।।
卐 अहरह र्नयमानो गामश्वं पुरुष ञ्जगत्। वैवस्वतो न तृप्यति पञ्चभि र्मानवै र्यमः।।
卐 वैवस्वते विविच्यन्ते यमे राजनि ते जनाः। ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः।।
卐 ते राज न्निह विविच्यन्तेऽथाऽऽ यन्ति त्वामुप। देवाꣳश्च ये नमस्यन्ति ब्राह्मणाꣳ श्चापचित्यति।।
卐 यस्मि न्वृक्षे सुपलाशे देवै स्सम्पिबते यमः। अत्रा नो विश्पतिः पिता पुराणा अनु वेनति।। 13।।
(पथिकृद्ध्यो विजानतेऽनु वेनति। 5।)
❀ 卐 वैश्वानरे हवि रिद ञ्जुहोमि साहस्र मुथ्सꣳ शतधार मेतम्। तस्मि न्नेष पितरं पितामहं प्रपितामहं बिभर त्पिन्वमाने।।
卐 द्रप्स श्चस्कन्द पृथिवी मनु द्या मिमञ्च योनि मनु यश्च पूर्वः। तृतीयँ योनि मनु सञ्चरन्त न्द्रप्स ञ्जुहोम्यनु सप्त होत्राः।।
卐 इमꣳ समुद्रꣳ शतधार मुथ्सँ व्यच्यमानं भुवनस्य मध्ये। घृत न्दुहाना मदिति ञ्जनायाग्ने मा हिꣳसीः परमे व्योमन्न्।।
卐 अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः। अहोभि रद्भि रक्तुभि र्व्यक्तँ यमो ददा त्ववसान मस्मै।।

[1] मित्रस्थे

卐 सवितैतानि शरीराणि पृथिव्यै मातु रुपस्थ आ दधे। तेभि र्युज्यन्ता मघ्नियाः।। 14।।

❀ 卐 शुनँ वाहा श्शुन न्नारा श्शुनङ्कृषतु लाङ्गलम्। शुनँ वरत्रा बध्यन्ता॰ शुन मष्ट्रा मुदिङ्गय शुनासीरा शुन मस्मासु धत्तम्।।

卐 शुनासीरा विमाँ वाचँ यद्दिवि चक्रथु॰ पयः। तेनेमा मुप सिञ्चतम्।।

卐 सीते वन्दामहे त्वाऽर्वाची सुभगे भव। यथा न स्सुभगाससि यथा नस्सुफला ससि।।

卐 सवितैतानि शरीराणि पृथिव्यै मातु रुपस्थ आदधे। तेभि रदिते शं भव।।

卐 विमुच्यध्व मघ्निया देवयाना अतारिष्म तमस स्पारमस्य। ज्योति राऽपाम सुव रगन्म।। 15।।

❀ 卐 प्र वाता वान्ति पतयन्ति विद्युत उदोषधी र्जिहते पिन्वते सुवः। इरा विश्वस्मै भुवनाय जायते यत्पर्जन्य॰ पृथिवी॰ रेतसाऽवति।।

卐 यथा यमाय हार्म्य मवप न्पञ्च मानवाः। एवँ वपामि हार्म्यँ यथाऽसाम जीवलोके भूरयः।।

卐 चितस्थ्स परिचित ऊर्ध्वचित श्श्रयध्वं पितरो देवता। प्रजापति र्व स्सादयतु तया देवतया[1]❉।।

卐 आप्यायस्व[2]❉ 卐 सन्ते[3]❉।। 16।। (अघ्निया अगन्म सप्त च। 6।)

❀ 卐 उत्ते तभ्नोमि पृथिवी न्त्वत्परीमँ लोक न्निदध न्मो अह॰ रिषम्। एता॰ स्थूणां पितरो धारयन्तु तेऽत्रा यम स्सादनात्ते मिनोतु।।

卐 उप सर्प मातरं भूमि मेता मुरुव्यचसं पृथिवी॰ सुशेवाम्। ऊर्णम्रदा युवति र्दक्षिणावत्येषा त्वा पातु निरृत्या उपस्थे।।

卐 उच्छ्वञ्चस्व पृथिवि मा विबाधिथा स्सूपायनाऽस्मै भव सूपवञ्चना। माता पुत्रँ यथा सिचाऽभ्येनं भूमि वृणु।।

卐 उच्छ्वञ्चमाना पृथिवी हि तिष्ठसि सहस्रं मित उप हि श्रयन्ताम्। ते गृहासो मधुश्चुतो विश्वाऽहाऽस्मै शरणा स्सन्त्वत्र।।

卐 एणी र्धाना हरिणी रर्जुनी स्सन्तु धेनवः। तिलवथ्सा ऊर्ज मस्मै दुहाना विश्वाऽहा सन्त्वनपस्फुरन्तीः।। 17।।

❀ 卐 एषा ते यमसादने स्वधा नि धीयते गृहे। अक्षिति र्नाम ते असौ।।

1

2

3

卐 इदं पितृभ्यः प्र भरेम बर्हि र्देवेभ्यो जीवन्त उत्तरं भरेम। तत्त्व मा रोहासो मेध्यो भवँ यमेन त्वँ यम्या सँविदानः।

卐 मा त्वा वृक्षौ सं बाधिष्टां मा माता पृथिवि त्वम्। पितृन् ह्यत्र गच्छास्येधासँ यमराज्ये।।

卐 मा त्वा वृक्षौ सं बाधेथां मा माता पृथिवी मही। वैवस्वतꣳ हि गच्छासि यमराज्ये वि राजसि।।

卐 नळं प्लव मा रोहैत न्नळेन पथोऽन्विहि। स त्व न्नळप्लवो भूत्वा सन्तर प्रतरोत्तर।। 18।।

❀ 卐 सवितैतानि शरीराणि पृथिव्यै मातु रुपस्थ आ दधे। तेभ्यः पृथिवि शं भव।।

卐 षड्ढोता सूर्यन्ते चक्षु र्गच्छतु वात मात्मा द्याञ्च गच्छ पृथिवीञ्च धर्मणा। अपो वा गच्छ यदि तत्र ते हित मोषधीषु प्रतितिष्ठा शरीरैः।।

卐 परं मृत्यो अनु परेहि पन्थाँ यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान्।।

卐 शँ वात श्शꣳ हि ते घृणि श्शमु ते सन्त्वोषधीः। कल्पन्तां मे दिश श्शग्माः।।

卐 पृथिव्यास्त्वा- ꣳलोके सादयाम्यमुष्य शर्मासि पितरो देवता। प्रजापतिस्त्वा सादयतु तया देवतया[1]❀।।

卐 अन्तरिक्षस्य त्वा-- 卐 दिवस्त्वा-- 卐 दिशान्त्वा--卐 नाकस्य त्वा पृष्ठे-- 卐 ब्रध्नस्य त्वा विष्टपे-- सादया म्यमुष्य शर्मासि पितरो देवता। प्रजापतिस्त्वा सादयतु तया देवतया[2]❀।। 19।।
(अनपस्फुरन्ती रुत्तर देवतया द्वे च। 7।)

❀ 卐 अपूपवा न्घृतावाꣳ श्चरु रेह सीदतूत्तभ्नुव न्पृथिवी न्द्यामुतो परि। योनिकृतः पथिकृत स्सपर्यत ये देवाना ङ्घृतभागा इह स्थ। एषा ते यमसादने स्वधा निधीयते गृहेऽसौ।।

卐 दशाक्षरा- ꣳताꣳ रक्षस्व ताङ्गोपायस्व तान्ते परिददामि तस्यान्त्वा मा दभ न्पितरो देवता। प्रजापतिस्त्वा सादयतु तया देवतया[3]❀।

卐 अपूपवा ञ्छृतवा-- 卐 --न्क्षीरवाꣳ -- 卐 ꣳ--न्दधिवा-- 卐 ꣳ--न्मधुमाꣳ- ꣳश्चरु रेह सीदतूत्तभ्नुव न्पृथिवी न्द्यामुतो परि। योनिकृतः पथिकृत स्सपर्यत ये देवानाꣳ 卐--श्र्तभागाः~--ꣳक्षीरभागाꣳ -- 卐 --ꣳदधिभागा ꣳ-- 卐 ꣳ-- मधुभागा इह स्थ। एषा ते यमसादने स्वधा निधीयते गृहेऽसौ।।

1

2

3

卐 शताक्षरा-- 卐 सहस्राक्षरा--卐ऽयुताक्षरा-- 卐ऽच्युताक्षरा-ताः रक्षस्व ताङ्गोपायस्व तान्ते परि ददामि तस्यान्त्वा मा दभ न्पितरो देवता। प्रजापतिस्त्वा सादयतु तया देवतया[1]❈।। 20।। (अपूपवा नसौ दश। 8।)

❀ 卐 एतास्ते स्वधा अमृताः करोमि यास्ते धानाः परिकिराम्यत्र। तास्ते यमः पितृभि स्सँविदानोऽत्र धेनूः कामदुघाः करोतु।।

卐 त्वामर्जुनौषधीनां पयो ब्रह्माण इद्विदुः। तासान्त्वा मध्या दाददे चरुभ्यो अपि धातवे।।

卐 दूर्वाणाः स्तम्ब माहरैतां प्रियतमां मम। इमा न्दिशं मनुष्याणां भूयिष्ठाऽनु वि रोहतु।।

卐 काशानाः स्तम्ब मा हर रक्षसा मपहत्यै। य एतस्यै दिशः पराऽभव न्नघायवो यथा ते नाभवा न्पुनः।।

卐 दर्भाणाः स्तम्ब माहर पितृणा मोषधीं प्रियाम्। अन्वस्यै मूल ञ्जीवा दनु काण्ड मथो फलम्।। 21।।

❀ 卐 लोकं पृण[2]❈ 卐 ता अस्य सूददोहसः[3]❈।

卐 शँ वात श्शः हि ते घृणि श्शमु ते सन्त्वोषधीः। कल्पन्तान्ते दिश स्सर्वाः।।

卐 इदमेव मेतोऽपरा मार्ति माराम काञ्चन। तथा तदश्विभ्या ङ्कृतं मित्रेण वरुणेन च।।

卐 वरणो वारया दिद न्देवो वनस्पतिः। आर्त्यै निरृत्यै द्वेषाच्च वनस्पतिः।।

卐 विधृतिरसि विधारयास्म दघाद्वेषाःसि 卐 शमि शमयास्म दघा द्वेषाःसि 卐 यव यवयास्म दघा द्वेषाःसि।।

卐 पृथिवी ङ्गच्छान्तरिक्ष ङ्गच्छ दिव ङ्गच्छ दिशो गच्छ सुव र्गच्छ सुव र्गच्छ दिशो गच्छ दिव ङ्गच्छान्तरिक्ष ङ्गच्छ पृथिवी ङ्गच्छापो वा गच्छ यदि तत्र ते हित मोषधीषु प्रतितिष्ठा शरीरैः।।

卐 अश्मन्वती रेवती[4]❈ 卐 यद्वै देवस्य सवितुः पवित्रँ[5]❈ 卐 या राष्ट्रा त्पन्ना[6]❈卐 दुद्वय न्तमस स्परि[7]❈ 卐 धाता पुनातु[1]❈।। 22।। (अथो फल न्धाता पुनातु। 9।)

1
2
3
4
5
6
7

☸❀卐 आरोहताऽऽयु र्जरसं वृणाना अनुपूर्वँ यतमाना यतिष्ट। इह त्वष्टा सुजनिमा सुरत्नो दीर्घमायुः करतु जीवसे वः।।
卐 यथाऽहा न्यनुपूर्वं भवन्ति यथर्तव ऋतुभि र्यन्ति क्लृप्ताः। यथा न पूर्व मपरो जहा त्येवा धात रायूꣳषि कल्पयैषाम्।।
卐 न हि ते अग्ने तनुवै क्रूर ञ्चकार मर्त्यः। कपि र्बभस्ति तेजनं पुन र्जरायु गौरिव।।
卐 अप न श्शोशुच दघ मग्ने शुशुग्ध्या रयिम्। अप न श्शोशुच दघं मृत्यवे स्वाहा।।
卐 अनड्वाह मन्वारभामहे स्वस्तये। स न इन्द्र इव देवेभ्यो वह्नि स्संपारणो भव।। 23।।
❀ 卐 इमे जीवा विमृतै राववर्ति न्नभू द्भद्रा देवहूति न्नो अद्य। प्राञ्चोऽगामा नृतये हसाय द्राघीय आयुः प्रतरा न्दधानाः।।
卐 मृत्योः पदँ योपयन्तो यदैम द्राघीय आयुः प्रतरा न्दधानाः। आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवथ यज्ञियासः।।
卐 इम ञ्जीवेभ्यः परिधि न्दधामि मा नोऽनुगा दपरो अर्ध मेतम्। शत ञ्जीवन्तु शरदः पुरूची स्तिरो मृत्यु न्दध्महे पर्वतेन।।
卐 इमा नारी रविधवा स्सुपत्नी राञ्जनेन सर्पिषा सं मृशन्ताम्। अनश्रवो अनमीवा स्सुशेवा आरोहन्तु जनयो योनि मग्रे।।
卐 यदाञ्जन न्त्रैककुद ञ्जातꣳ हिमवत स्परि। तेनामृतस्य मूलेनाराती र्जम्भयामसि।।
卐 यथा त्वमुद्भिनथ्स्योषधे पृथिव्या अधि। एव मिम उद्भिन्दन्तु कीर्त्या यशसा ब्रह्मवर्चसेन।
卐 अजोऽस्यजास्म दघा द्वेषाꣳसि 卐 यवोऽसि यवयास्मदघा द्वेषाꣳसि।। 24।। (भव जम्भयामसि त्रीणि च। 10।)
☸❀ 卐 अप न श्शोशुच दघमग्ने शुशुग्ध्या रयिम्। अप न श्शोशुच दघम्।।
卐 सुक्षेत्रिया सुगातुया वसूया च यजामहे। अप न श्शोशुच दघम्।।
卐 प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः। अप न श्शोशुच दघम्।।
卐 प्र यदग्ने स्सहस्वतो विश्वतो यन्ति सूरयः। अप न श्शोशुच दघम्।।
卐 प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम्। अप न श्शोशुच दघम्।। 25।।

1

❀ 卐 त्व॰ हि विश्वतोमुख विश्वतः परिभूरसि। अप न श्शोशुच दघम्।।
卐 द्विषो नो विश्वतोमुखाऽति नावेव पारय। अप न श्शोशुच दघम्।।
卐 स न स्सिन्धु मिव नावयाऽतिपर्‌षा स्वस्तये। अप न श्शोशुच दघम्।।
卐 आपः प्रवणादिव यती रपास्मथ्स्यन्दता मघम्। अप न श्शोशुच दघम्।।
卐 उद्वना दुदका नीवापा ऽस्मथ्स्यन्दता मघम्। अप न श्शोशुच दघम्।।
卐 आनन्दाय प्रमोदाय पुन रागा॰ स्वा न्गृहान्। अप न श्शोशुच दघम्।।
卐 न वै तत्र प्र मीयते गौरश्वः पुरुषः पशुः। यत्रेदं ब्रह्म क्रियते परिधि र्जीवनाय क मप न श्शोशुच दघम्।। 26।। (अघ मघ श्चत्वारि च। 11।)
❀ 卐 अपश्याम युवति माचरन्तीं मृताय जीवां परिणीयमानाम्। अन्धेन या तमसा प्रावृताऽसि प्राची मवाची मवय न्नरिष्टै।।
卐 मयैतां मा॰स्तां भ्रियमाणा देवी सती पितृलोकँ यदैषि। विश्ववारा नभसा सँव्यय न्त्युभौ नो लोकौ पयसाऽऽवृणीहि।।
卐 रयिष्ठा मग्निं मधुमन्त मूर्मिण मूर्जस्वन्त[1] न्त्वा पयसोप स॰ सदेम। स॰ रय्या समु वर्चसा सचस्वा न स्स्वस्तये।।
卐 ये जीवा ये च मृता ये जाता ये च जन्त्याः। तेभ्यो घृतस्य धारयितुं मधुधारा व्युन्दती।।
卐 माता रुद्राणा न्दुहिता वसूना॰ स्वसाऽऽदित्याना ममृतस्य नाभिः। प्रणु वोच श्चिकितुषे जनाय मा गा मनागा मदितिँ वधिष्ट।।
卐 पिबतूदक न्तृणा न्यत्तु। ओमुथ्सृजत।। 27।। (वधिष्ट द्वे च। 12।
(परेयुवा॰सं प्र विद्वा न्भुवनस्याभ्यावव्रथ्स्वाजो भागोऽयँ वै चतुश्चत्वारि॰श- द्य एतस्य त्वत्पञ्च- प्रकेतुनेदन्ते नाके सुपर्णँ यौ ते ये युध्यन्ते तपसाऽश्मन्वती रेवती स्स॰ रभध्व मष्टावि॰शति- र्यन्ते यत्त उत्तिष्ठेदन्त उत्तिष्ठ प्रेह्यश्मन् यद्वा उद्वय मयं पञ्चवि॰शति- रा यातु त्रि॰श द्वैश्वानरे तस्मि न्द्रप्स इम मपेताहोभि र्युज्यन्ता मग्निया अदिते पाराँ व आ प्यायस्व सप्तवि॰शति- रुत्ते तन्नो म्यक्षिति स्तेभ्यः पृथिवि षड्ढोता परं मे शग्माः पृथिव्या अन्तरिक्षस्य द्वात्रि॰श दपूपवा नसौ दश शतद-शैता स्ते ते दिश स्सर्वा इद मश्मन्वि॰शति- रारोहत तनुवै क्रूर ञ्चकार पुन र्मृत्यवे मा नोऽनु गा द्ब्रह इमा नारीः परि

[1] ऊर्जस्सन्तन्त्वा

त्रयोवि॰शति- रप न स्सुक्षेत्रिया प्र यद्धन्दिष्ठ॰ प्रयदग्ने॰ प्र यत्ते अग्ने त्व॰ हि द्विष स्स न स्सिन्धु माप॰ प्रवणा दुद्भना दानन्दाय न वै तत्र यत्रेद श्चतुर्वि॰शति- रपश्यामाऽऽवृणीहि द्वादश द्वादश।। 12।। परेयुवा॰स माया त्वेतास्ते सप्तवि॰शतिः। 27। परेयुवा॰स मो मुथ्सृजत।)

ओम्। सन्त्वा सिञ्चामि यजुषा प्रजा मायुर्धनञ्च।। ओं शान्तिश्शान्तिश्शान्तिः।

माङ्गलिका मन्त्राः

卐 सुमङ्गलीरियँ वधू रिमा॰ समेत पश्यत। सौभाग्य मस्यै दत्वायाथास्तँ विपरेतन।।

卐 रोचनो रोचमान श्शोभन श्शोभमानः कल्याणः।। 卐 मङ्गलानि भवन्तु।। हरिः ओम्।

## ॐ उपनिषद् भागः

## आरण्यके सप्तम॰ प्रपाठकः (शिक्षा वल्ली)

### वै।का। स्रा 18॰हिती उपनिषत् मन्त्र ब्राह्मणात्मिका

❀ 卐 शन्नो मित्र श्शँ वरुणः। शन्नो भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णु रुरुक्रमः।

卐 नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतँ वदिष्यामि। सत्यँ वदिष्यामि। तन्मा मवतु। तद्वक्तार मवतु। अवतु माम्। अवतु वक्तारम्।। ओं शान्ति श्शान्ति श्शान्तिः।। 1।।

❀ शीक्षाँ व्याख्यास्यामः। वर्ण स्स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्त श्शीक्षाऽध्यायः।। 2।। (शीक्षां पञ्च। 2।)

❀ 卐 सह नौ यशः। सह नौ ब्रह्मवर्चसम्।

अथात स्स॰हिताया उपनिषदँ व्याख्यास्यामः। पञ्चस्वधिकरणेषु। अधिलोक मधिज्यौतिष मधिविद्य मधिप्रज मध्यात्मम्। ता महास॰हिता इत्या चक्षते।

अथाधिलोकम्। पृथिवी पूर्वरूपम्। द्यौ रुत्तररूपम्। आकाश स्सन्धिः।। 3।। ❀ वायु स्सन्धानम्। इत्यधिलोकम्।

अथाधिज्यौतिषम्। अग्नि॰ पूर्वरूपम्। आदित्य उत्तररूपम्। आप स्सन्धिः। वैद्युत स्सन्धानम्। इत्यधिज्यौतिषम्।

अथाधिविद्यम्। आचार्यः पूर्वरूपम्।। 4।।❀ अन्तेवास्युत्तररूपम्। विद्या सन्धिः। प्रवचनꣳ सन्धानम्। इत्यधिविद्यम्।

अथाधिप्रजम्। माता पूर्वरूपम्। पितोत्तररूपम्। प्रजा सन्धिः। प्रजननꣳ सन्धानम्। इत्यधिप्रजम्।। 5।।

❀ अथाध्यात्मम्। अधरा हनुः पूर्वरूपम्। उत्तरा हनु रुत्तररूपम्। वाख्सन्धिः। जिह्वा सन्धानम्। इत्यध्यात्मम्।

इतीमा महासꣳहिताः। य एव मेता महासꣳहिता व्याख्याता वेद। सन्धीयते प्रजया पशुभिः। ब्रह्मवर्चसेनान्नाद्येन [1]सुवर्ग्येण लोकेन।। 6।। (सन्धि राचार्यः पूर्वरूप मित्यधिप्रजँ लोकेन। 3।)

❀ 卐 यश्छन्दसा मृषभो विश्वरूपः। छन्दोभ्योऽध्यमृता थ्सम्बभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देव धारणो भूयासम्।।

卐 शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। ब्रह्मणः कोशोऽसि मेधयाऽपिहितः। श्रुतं मे गोपाय।।

卐 आवहन्ती वितन्वाना।। 7।।❀ कुर्वाणा चीर मात्मनः। वासाꣳसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे श्रिय मावह। लोमशां पशुभि स्सह स्वाहा।।

卐 आ मा यन्तु ब्रह्मचारिण स्स्वाहा। 卐 वि मा यन्तु ब्रह्मचारिण स्स्वाहा। 卐 प्र मा यन्तु ब्रह्मचारिण स्स्वाहा। 卐 दमायन्तु ब्रह्मचारिण स्स्वाहा। 卐 शमायन्तु ब्रह्मचारिण स्स्वाहा।। 8।।❀ 卐 यशो जनेऽसानि स्वाहा। 卐 श्रेयान् वस्यसोऽसानि स्वाहा। 卐 तन्त्वा भग प्र विशानि स्वाहा। 卐 स मा भग प्र विश स्वाहा। 卐 तस्मिन्थ्सहस्रशाखे। निभगाऽह न्त्वयि मृजे स्वाहा। 卐 यथाऽऽपः प्रवता यन्ति। यथा मासा अहर्जरम्। एवं मां ब्रह्मचारिणः। धात रायन्तु सर्वत स्स्वाहा।। 卐 प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व।। 9।। (वितन्वाना शमायन्तु ब्रह्मचारिण स्स्वाहा धात रायन्तु सर्वत स्स्वाहैकञ्च। 4।)

❀ 卐 भू 卐 र्भुव 卐 स्सुव- रिति वा एता स्तिस्रो व्याहृतयः। तासा मु ह स्मैता ञ्चतुर्थीम्। माहाचमस्यः प्रवेदयते।

卐 मह - इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः।

---

[1] सुवर्गेण लोकेन

भूरितिवा अयँ लोकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः।। 10।। ❀ मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते।

भूरिति वा अग्निः। भुव इति वायुः। सुव रित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते।

भूरिति वा ऋचः। भुव इति सामानि। सुव रिति यजूꣳषि।। 11।। ❀ मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते।

भूरिति वै प्राणः। भुव इत्यपानः। सुव रिति व्यानः। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते। ता वा एता श्चतस्र श्चतुर्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद। स वेद ब्रह्म। सर्वेऽस्मै देवा बलि मा वहन्ति।। 12।। (असौ लोको यजूꣳषि वेद द्वे च। 5।)

❀ स य एषोऽन्तरहृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रति तिष्ठति। भुव इति वायौ।। 13।। ❀ सुव रित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्। आप्नोति मनसस्पतिम्। वाक्पति श्चक्षुष्पतिः। श्रोत्रपति र्विज्ञानपतिः। एतत्ततो भवति। आकाशशरीरं ब्रह्म। सत्याऽऽत्म प्राणाऽऽरामं मनआनन्दम्। शान्तिसमृद्ध ममृतम्। इति प्राचीन योग्योपाऽऽस्व।। 14।।(वाया वमृत मेकञ्च। 6।)

❀ पृथिव्यन्तरिक्ष न्द्यौर्दिशोऽवान्तरदिशाः। अग्नि र्वायु रादित्य श्चन्द्रमा नक्षत्राणि। आप ओषधयो वनस्पतय आकाश आत्मा। इत्यधिभूतम्। अथाध्यात्मम्। प्राणो व्यानोऽपान उदान स्समानः। चक्षु श्रोत्रं मनो वाक्त्वक्। चर्म माꣳसꣳ स्नावाऽस्थि मज्जा। एतदधिविधाय ऋषि रवोचत्। पाङ्क्तं वा इदꣳ सर्वम्। पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति।। 15।। (सर्व मेकञ्च। 7।)

❀ 卐 ओ- मिति ब्रह्म। ओमितीदꣳ सर्वम्। ओमित्येत दनुकृति ह स्म वा अ卐प्यो श्रावये-त्या श्रावयन्ति। ओमिति सामानि गायन्ति।

卐 ओꣳशो- मिति शस्त्राणि शꣳसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्र मनु जानाति। ओमिति ब्राह्मणः प्रवक्ष्य न्नाह ब्रह्मोपाऽऽप्रवानीति। ब्रह्मैवोपाऽऽप्नोति।। 16।। (ओन्दश। 8।)

🪔❀ ऋतञ्च स्वाध्यायप्रवचने च। सत्यञ्च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रञ्च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषञ्च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्य मिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तप स्तद्धि तपः।। 17।। (प्रजा च स्वाध्यायप्रवचने च षट्। 9।)

🪔❀ 卐 अहँ वृक्षस्य रेरिवा। कीर्तिः पृष्ठङ्गिरे रिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृत मस्मि। द्रविण॰ सवर्चसम्। सुमेधा अमृतोक्षितः।- इति त्रिशङ्कोर्वेदानुवचनम्।। 18।। (अह॰षट्। 10।)

🪔❀ वेद मनूच्याऽऽचार्योऽन्तेवासिन मनुशास्ति। सत्यँ वद। धर्मञ्चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियन्धन माहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यान्न प्रमदितव्यम्।। 19।।❀ देवपितृकार्याभ्यान्न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माक॰ सुचरितानि। तानि त्वयोपाऽऽस्यानि।। 20।।❀ नो इतराणि। ये के चास्मच्छ्रेया॰सो ब्राह्मणाः। तेषा न्त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। सँविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्।। 21।।❀ ये तत्र ब्राह्मणा स्सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामास्स्युः। यथा ते तत्र वर्तेरन्न्। तथा तत्र वर्तेथाः। अथाभ्याऽऽख्यातेषु। ये तत्र ब्राह्मणा स्सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामास्स्युः। यथा ते तेषु वर्तेरन्न्। तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एव मुपाऽऽसितव्यम्। एव मु चैत दुपाऽऽस्यम्।। 22।। (स्वाध्यायप्रवचनाभ्यान्न प्रमदितव्य न्तानि त्वयोपाऽऽस्यानि स्यात्तेषु वर्तेर'2'न्थसप्त च। 11।)

🪔❀ 卐 शन्नो मित्र श्शँ वरुणः। शन्नो भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णु रुरुक्रमः। 卐 नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋत मवादिषम्। सत्य मवादिषम्। तन्मा मावीत्। तद्वक्तार मावीत्। आवीन्माम्। आवी द्वक्तारम्।। 卐 ओं शान्ति श्शान्ति श्शान्तिः।। 23।। (सत्य मवादिषं पञ्च च। 12।)

(शन्न श्शीक्षा॰ सह नौ यश्छन्दसां भू स्स य॰ पृथिव्योमित्यृतञ्चाहँ वेद मनूच्य शन्नो द्वादश। 13। शन्नो मह इत्यादित्यो नो इतराणि त्रयोवि॰शतिः। 14। शन्न आवी द्वक्तारम्।।)

## आरण्यके अष्टम॰ प्रपाठकः (ब्रह्म वल्ली उपनिषत्)

### वै।का। कृत्स्न)ब्रह्म वल्ली उपनिषत् मन्त्र ब्राह्मणात्मिका 19॰ प्रश्नः(

卐 सह नाववतु। सह नौ भुनक्तु। सह वीर्य ङ्करवावहै। तेजस्वि नावधीत मस्तु मा वि द्विषावहै। 卐 ओं शान्ति श्शान्ति श्शान्तिः।।

ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता।

### ब्रह्म स्ववरूप लक्षणम्

卐 सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहित ङ्गुहायां परमे व्योमन्न्। सोऽश्नुते सर्वा न्कामान्थ्सह। ब्रह्मणा विपश्चिते-ति।

### अन्नमय कोश निरूपणम्

तस्माद्वा एतस्मादात्मन आकाश स्सम्भूतः। आकाशा द्वायुः। वायो रग्निः। अग्ने रापः। अद्भ्य॰ पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्ना त्पुरुषः। स वा एष पुरुषोऽन्न.रसमयः। तस्येदमेव शिरः। अय न्दक्षिण॰ पक्षः। अय मुत्तर॰ पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।। 1।।

卐 अन्नाद्वै प्रजा॰ प्रजायन्ते। या॰ काश्च पृथिवी॰ श्रिताः। अथो अन्नेनैव जीवन्ति। अथैन दपियन्त्यन्ततः।

卐अन्न॰हि भूताना ज्येष्ठम्। तस्माथ्सर्वौषध मुच्यते। सर्वँ वै तेऽन्न माप्नुवन्ति। येऽन्नं ब्रह्मोपाऽसते।

卐अन्न॰ हि भूताना ज्येष्ठम्। तस्माथ्सर्वौषध मुच्यते। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति च भूतानि। तस्मादन्न न्तदुच्यत- इति।

### प्राणमय कोश निरूपणम्

तस्माद्वा एतस्मा दन्नरस.मयात्। अन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्राण एव शिरः। व्यानो दक्षिण॰ पक्षः। अपान उत्तर॰ पक्षः। आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।। 2।।

卐 प्राणन्देवा अनु प्राणन्ति। मनुष्या॑ पशवश्च ये। प्राणो हि भूताना मायुः। तस्माथ्सर्वाऽऽयुष मुच्यते।

卐 सर्वमेव त आयु र्यन्ति। ये प्राणं ब्रह्मोपाऽऽसते। प्राणो हि भूताना मायुः। तस्माथ्सर्वाऽऽयुष मुच्यत - इति। तस्यैष एव शारीर आत्मा। य॑ पूर्वस्य।

## मनोमय कोश निरूपणम्

तस्माद्वा एतस्मा त्प्राणमयात्। अन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुष विधः। तस्य यजुरेव शिरः। ऋग्दक्षिण॑ पक्षः। सामोत्तर॑ पक्षः। आदेश आत्मा। अथर्वाङ्गिरस॑ पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।। 3।।

卐 यतो वाचो निवर्तन्ते। अप्राऽऽप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचने-ति। तस्यैष एव शारीर आत्मा। य॑ पूर्वस्य।

## विज्ञानमय कोश निरूपणम्

तस्माद्वा एतस्मा न्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋत न्दक्षिण॑ पक्षः। सत्य मुत्तर॑ पक्षः। योग आत्मा। मह॑ पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।। 4।।

卐 विज्ञानँ यज्ञ न्तनुते। कर्माणि तनुतेऽपि च। विज्ञान न्देवा स्सर्वे। ब्रह्म ज्येष्ठ मुपाऽऽसते। विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वा न्कामा न्थ्समश्ञ्नुत - इति। तस्यैष एव शारीर आत्मा। य॑ पूर्वस्य।

## आनन्दमय कोश निरूपणम्

तस्माद्वा एतस्मा द्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिण॑ पक्षः। प्रमोद उत्तर॑ पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।। 5।।

卐 असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्त मेन न्ततो विदु- रिति। तस्यैष एव शारीर आत्मा। य॑पूर्वस्य।

अथातोऽनु प्रश्ञ्नाः। उताविद्वा नमुँ लोकं प्रेत्य। कश्चन गच्छती '3'। आहो विद्वा नमुँ लोकं प्रेत्य। कश्चिथ्समश्ञ्नुता'3' उ। सोऽकामयत। बहु स्यां प्र जायेयेति। स तपोऽतप्यत। स तप स्तप्त्वा। इद॰

सर्वं मसृजत। यदिद ङ्किञ्च। तथ्सृष्ट्वा। तदेवानु प्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्त ञ्चानिरुक्तञ्च। निलयन ञ्चानिलयनञ्च। विज्ञान ञ्चाविज्ञानञ्च। सत्यञ्चानृतञ्च सत्यमभवत्। यदिदङ्किञ्च। तथ्सत्य मित्याचक्षते। तदप्येष श्लोको भवति।। 6।।

卐 असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानꣳ स्वयमकुरुत। तस्मात्तथ्सुकृत मुच्यत - इति।

यद्वै तथ्सुकृतम्। रसो वै सः। रसꣳ ह्येवायँ लब्ध्वाऽऽनन्दी भवति। को ह्येवान्या त्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवाऽऽनन्दयाति। यदाह्येवैष एतस्मि न्नदृश्येऽनात्म्ये ऽनिरुक्ते ऽनिलयने भयं प्रतिष्ठाँ विन्दते। अथ सोऽभयङ्गतो भवति। यदाह्येवैष एतस्मि न्नुदर मन्तरङ्कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयँ विदुषो ऽमन्वानस्य। तदप्येष श्लोको भवति।। 7।।

卐 भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्यु र्धावति पञ्चम-इति।

## आनन्द मीमांसा

सैषाऽऽनन्दस्य मीमाꣳसा भवति। युवा स्याथ्साधु युवाऽध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः।

ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणा मानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं मनुष्यगन्धर्वाणा मानन्दाः। स एको देवगन्धर्वाणा मानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शत न्देवगन्धर्वाणा मानन्दाः। स एकः पितृणा ञ्चिरलोकलोकाना मानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शत पितृणा ञ्चिरलोकलोकाना मानन्दाः। स एक आजानजाना न्देवाना मानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शत माजानजाना न्देवाना मानन्दाः। स एकः कर्मदेवाना न्देवाना मानन्दः। ये कर्मणा देवा नपियन्ति। श्रोत्रियस्य चाकामहतस्य।

ते ये शत ङ्कर्मदेवाना न्देवाना मानन्दाः। स एको देवाना मानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शत न्देवाना मानन्दाः। स एक इन्द्रस्याऽऽनन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शत मिन्द्रस्याऽऽनन्दाः।

स एको बृहस्पते रानन्दः। श्रोत्रियस्य चाकामहतस्य।ते ये शतं बृहस्पते रानन्दाः।

स एकः प्रजापते रानन्दः। श्रोत्रियस्य चाकामहतस्य।ते ये शतं प्रजापते रानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य।

स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवँवित्। अस्माल्लोका त्प्रेत्य। एत मन्नमय मात्मान मुप सङ्क्रामति। एतं प्राणमय मात्मान मुप सङ्क्रामति। एतं मनोमय मात्मान मुप सङ्क्रामति। एतँ विज्ञानमय मात्मान मुप सङ्क्रामति। एत मानन्दमय मात्मान मुप सङ्क्रामति। तदप्येष श्लोको भवति।। 8।।

ॐ यतो वाचो निवर्तन्ते। अप्राऽप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चने-ति। एतँ ह वाव न तपति। किमहँ साधु नाकरवम्। किमहं पाप मकरवमिति। स य एवँविद्वा नेते आत्मानँ स्पृणुते। उभे ह्येवैष एते आत्मानँ स्पृणुते। य एवँ वेद। इत्युपनिषत्।। 9।।

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यङ्करवावहै। तेजस्वि नावधीत मस्तु मा वि द्विषावहै। ओं शान्ति श्शान्ति श्शान्तिः।।

(ब्रह्मविदिदमय मिदमेकविँशतिः। अन्ना दन्नरसमया त्प्राणो व्यानोऽपान आकाशः पृथिवी पुच्छँ षड्विँशतिः। प्राणं प्राणमया न्मनो यजुरृ ऋक्सामा ऽऽदेशो ऽथर्वाङ्गिरसः पुच्छ न्द्वाविँशतिः। यत श्श्रद्धर्तँ सत्यँ योगो महोऽष्टादश। विज्ञानं प्रियं मोदः प्रमोद आनन्दो ब्रह्म पुच्छं द्वाविँशतिः। असन्नेवाथाष्टाविँशतिः। असथ्षोडश। भीषाऽस्मा न्मानुषो मनुष्यगन्धर्वाणा न्देवगन्धर्वाणां पितृणा ञ्चिरलोकलोकाना माजानजाना ङ्कर्मदेवानाँ ये कर्मणा देवाना मिन्द्रस्य बृहस्पतेः प्रजापते र्ब्रह्मण स्स यश्च सङ्क्राम त्येकपञ्चाशत्। यतः कुतश्च नैत मेकादश नव। 9। ब्रह्मविन्नव। 9। ब्रह्मविदित्युपनिषत्)

## आरण्यके नवमः प्रपाठकः (वारुणी उपनिषत्)

## वै।का। - भृगु वल्ली 19मन्त्र ब्राह्मणात्मिका कृत्स्न)ः प्रश्नः(

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्य ङ्करवावहै। तेजस्वि नावधीत मस्तु मा वि द्विषावहै। ओं शान्ति श्शान्ति श्शान्तिः।।

भृगुर्वै वारुणिः। वरुणं पितर मुपससार।

ॐ अधीहि भगवो ब्रह्मे- ति। तस्मा एतत्प्रोवाच। अन्नं प्राण ञ्चक्षु श्श्रोत्रं मनो वाचमिति। तँ होवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रय न्त्यभि सँविशन्ति। तद्वि जिज्ञासस्व। तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।। 1।।

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभि सँविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितर मुप ससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म वि जिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।। 2।।

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभि सँविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितर मुप ससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म वि जिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।। 3।।

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि जीवन्ति। मनः प्रयन्त्यभि सँविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितर मुप ससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म वि जिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।। 4।।

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभि सँविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितर मुप ससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म वि जिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।। 5।।

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभि सँविशन्तीति। सैषा भार्गवी वारुणी विद्या। परमे व्योम न्प्रतिष्ठिता। य एवँ वेद प्रतितिष्ठति। अन्नवा नन्नादो भवति। महा न्भवति प्रजया पशुभि र्ब्रह्मवर्चसेन। महान्कीर्त्या।। 6।।

अन्न न्न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीर मन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेत दन्न मन्ने प्रतिष्ठितम्। स य एतदन्न मन्ने प्रतिष्ठितँ वेद प्रतितिष्ठति। अन्नवा नन्नादो भवति। महा न्भवति प्रजया पशुभि र्ब्रह्मवर्चसेन। महान्कीर्त्या।। 7।।

अन्नन्न परि चक्षीत। तद्व्रतम्। आपो वा अन्नम्। ज्योति रन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेत दन्न मन्ने प्रतिष्ठितम्। स य एतदन्न मन्ने प्रतिष्ठितँ वेद प्रति तिष्ठति। अन्नवा नन्नादो भवति। महा न्भवति प्रजया पशुभि र्ब्रह्मवर्चसेन। महान्कीर्त्या।। 8।।

☸❀ अन्नं बहु कुर्वीत। तद्व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्या माकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेत दन्न मन्ने प्रतिष्ठितम्। स य एतदन्न मन्ने प्रतिष्ठितँ वेद प्रतितिष्ठति। अन्नवा नन्नादो भवति। महा न्भवति प्रजया पशुभि र्ब्रह्मवर्चसेन। महान्कीर्त्या।। 9।।

☸❀ न कञ्चन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्मा द्यया कया च विधया बह्वन्नं प्राऽप्नुयात्। अराध्मस्मा अन्न मित्याचक्षते। एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नꣳ राध्यते। एतद्वै मध्यतोऽन्नꣳ राद्धम्। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते। य एवँ वेद।

क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः। विमुक्ति रिति पायौ। इति मानुषी स्समाज्ञाः।

अथ दैवीः। तृप्ति रिति वृष्टौ। बल मिति विद्युति। यश इति पशुषु। ज्योति रिति नक्षत्रेषु। प्रजाति रमृत मानन्द इत्युपस्थे। सर्व मित्याकाशे।

तत्प्रतिष्ठेत्युपाऽसीत। प्रतिष्ठावा न्भवति। तन्मह इत्युपाऽसीत। महा न्भवति। तन्मन इत्युपाऽसीत। मानवा न्भवति। तन्नम इत्युपाऽसीत। नम्यन्तेऽस्मै कामाः। तद्ब्रह्मेत्युपाऽसीत। ब्रह्मवा न्भवति। तद्ब्रह्मणः परिमर इत्युपाऽसीत। पर्येणं म्रियन्ते द्विषन्त स्सपत्नाः। परि ये प्रिया भ्रातृव्याः।

सयश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवँवित्। अस्मा ल्लोकात्प्रेत्य।

एत मन्नमय मात्मान मुप सङ्क्रम्य। एतं प्राणमय मात्मान मुप सङ्क्रम्य। एतं मनोमय मात्मान मुप सङ्क्रम्य। एतँ विज्ञानमय मात्मान मुप सङ्क्रम्य। एत मानन्दमय मात्मान मुप सङ्क्रम्य। इमान्लोका न्कामान्नी कामरूप्यनु सञ्चरन्। एतथ्साम गायन्नास्ते।

हा '3' वु हा '3' वु हा '3' वु। अह मन्न मह मन्न मह मन्नम्। अह मन्नादो '2' (ओ)ऽह मन्नादो '2' (ओ)ऽह मन्नादः। अहꣳ श्लोककृ दहꣳ श्लोककृ दहꣳ श्लोककृत्। अहमस्मि प्रथमजा ऋता'3'स्य। पूर्वं न्देवेभ्यो अमृतस्य ना '3' भाइ। यो मा ददाति स इदेव मा '3' वाः। अहमन्न मन्न मदन्त मा '3' द्मि। अहँ विश्वं भुवन मभ्यभवाम्। सुवर्न ज्योतीः। य एवँ वेद। इत्युपनिषत्।। 10।।

卐सह नाववतु। सह नौ भुनक्तु। सह वीर्यं ङ्करवावहै। तेजस्वि नावधीत मस्तु मा वि द्विषावहै। ओं शान्ति श्शान्ति श्शान्तिः।। )

Sri Sachidananda Avadhoota Datta Peetham

(भृगु स्त्रयोदशान्नं प्राणो मनो विज्ञानमिति विज्ञान न्द्वादश द्वादशाऽऽनन्दो दशान्न न्न निन्द्या दन्नन्न परिचक्षीतान्नं बहु कुर्वीतैकादशैकादश न कञ्चनैकषष्टि र्दश ।। 10।। भृगुर्वै दश। भृगु र्वा इत्युपनिषत्।)

## आरण्यके दशमः प्रपाठकः (याज्ञिकी उपनिषत्)

### वै।का। महा 20नारायणम् कृत्स्न)मन्त्र ब्राह्मणात्मकम् -ः प्रश्नः(

卐 सह नाववतु। सह नौ भुनक्तु। सह वीर्य ङ्करवावहै। तेजस्वि नावधीत मस्तु मा वि द्विषावहै। ओं शान्ति श्शान्ति श्शान्तिः।।

❀ 卐 अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्। शुक्रेण ज्योतीꣳषि समनुप्रविष्टः प्रजापति श्चरति गर्भे अन्तः।।

卐 यस्मि न्निदꣳ सञ्च वि चैति सर्वँ यस्मि न्देवा अधि विश्वे निषेदुः। तदेव भूत न्तदु भव्य मा इद न्तदक्षरे परमे व्योमन्न्।।

卐 येनाऽऽवृत ङ्खञ्च दिवं महीञ्च येनाऽऽदित्य स्तपति तेजसा भ्राजसा च। यमन्त स्समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः।।

卐 यतः प्रसूता जगतः प्रसूती तोयेन जीवा न्व्यचसर्ज भूम्याम्। यदोषधीभिः पुरुषा न्पशूꣳश्च विवेश भूतानि चराचराणि।।

卐 अतः पर न्नान्य दणीयसꣳ हि परात्परँ यन्महतो महान्तम्। यदेक मव्यक्त मनन्तरूपँ विश्वं पुराण न्तमसः परस्तात्।। 1।।

❀ 卐 तदेवर्त न्तदु सत्य माहु स्तदेव ब्रह्म परम ङ्कवीनाम्। इष्टापूर्तं बहुधा जात ञ्जायमानँ विश्वं बिभर्ति भुवनस्य नाभिः।।

卐 तदेवाग्नि स्तद्वायु स्तथ्सूर्य स्तदु चन्द्रमाः। तदेव शुक्र ममृत न्तद्ब्रह्म तदाप स्स प्रजापतिः।।

卐 सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः।।

卐 अर्धमासा मासा ऋतव स्सँवथ्सरश्च कल्पन्ताम्। स आपः प्रदुघे उभे इमे अन्तरिक्ष मथो सुवः।।

卐 नैन मूर्ध्वन्न तिर्यञ्चन्न मध्ये परिजग्रभत्। न तस्येशे कश्चन तस्य नाम महद्यशः।। 2।।

❀ 卐 न सन्दृशे तिष्ठति रूप मस्य न चक्षुषा पश्यति कश्चनैनम्। हृदा मनीषा मनसाऽभिक्लृप्तो य एनँ विदु रमृतास्ते भवन्ति।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore

卐 अद्भ्य स्सम्भूतो[1]❀ 卐 हिरण्यगर्भ[2]❀ - इत्यष्टौ।

卐 एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जात स्स उ गर्भे अन्तः। स विजायमान स्स जनिष्यमाणः प्रत्यङ्मुखा स्तिष्ठति विश्वतोमुखः।।

卐 विश्वतश्चक्षु रुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात्। सं बाहुभ्या न्नमति सं पतत्रै र्द्यावापृथिवी जनय न्देव एकः।।

卐 वेन स्तत्पश्यन्विश्वा भुवनानि विद्वान् यत्र विश्वं भव त्येकनीळम्। यस्मि न्निदं सञ्च वि चैकं स ओतः प्रोतश्च विभु प्रजासु।।

卐 प्र तद्वोचे अमृतन्नु विद्वा न्गन्धर्वो नाम निहित ङ्गुहासु।। 3।। ❀ त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितुः पिताऽसत्।।

卐 स नो बन्धु र्जनिता स विधाता धामानि वेद भुवनानि विश्वा। यत्र देवा अमृत मानशाना स्तृतीये धामा न्यभ्यैरयन्त।।

卐 परि द्यावापृथिवी यन्ति सद्यः परि लोका न्परि दिशः परि सुवः। ऋतस्य तन्तुं विततं विचृत्य तदपश्य त्तदभव त्प्रजासु।।

卐 परीत्य लोका न्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च। प्रजापतिः प्रथमजा ऋतस्याऽऽत्मनाऽऽत्मान मभि सं बभूव।।

卐 सदसस्पति मद्भुतं प्रिय मिन्द्रस्य काम्यम्। सनिं मेधा मयासिषम्।।

卐 उद्दीप्यस्व जातवेदोऽपघ्न न्निरृतिं मम।। 4।। ❀ पशूंश्च मह्य मावह जीवनञ्च दिशो दिश।।

卐 मा नो हिंसी ज्जातवेदो गामश्वं पुरुष ञ्जगत्। अबिभ्र दग्न आ गहि श्रिया मा परि पातय।।

卐 पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि। तन्नो रुद्रः प्रचोदयात्।।

卐 तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।।

卐 तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्।।

卐 तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि।। 5।। ❀ तन्नो नन्दिः प्रचोदयात्।।

卐 तत्पुरुषाय विद्महे महासेनाय धीमहि। तन्न ष्षण्मुखः प्रचोदयात्।।

卐 तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि। तन्नो गरुडः प्रचोदयात्।।

---

1

2

Sri Ganapati Sachchidananda Avadhoota Datta Peetham

卐 वेदाऽत्मनाय विद्महे हिरण्यगर्भाय धीमहि। तन्नो ब्रह्म प्रचोदयात्।।
卐 नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्।।
卐 वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि।। 6।। ❀ तन्नो नारसिꣳहः प्रचोदयात्।।
卐 भास्कराय विद्महे महद्युतिकराय धीमहि। तन्नो आदित्यः प्रचोदयात्।।
卐 वैश्वानराय विद्महे लालीलाय धीमहि। तन्नो अग्निः प्रचोदयात्।।
卐 कात्यायनाय विद्महे कन्यकुमारि धीमहि। तन्नो दुर्गिः प्रचोदयात्।।
卐 सहस्रपरमा देवी शतमूला शताङ्कुरा। सर्वꣳ हरतु मे पाप न्दूर्वा दुस्स्वप्ननाशनी।।
卐 काण्डात्काण्डा त्प्ररोहन्ती परुषःपरुषः परि।। 7।। ❀ एवा नो दूर्वे प्र तनु सहस्रेण शतेन च।।
卐 या शतेन प्रतनोषि सहस्रेण विरोहसि। तस्या स्ते देवीष्टके विधेम हविषा वयम्।।
卐 अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा। शिरसा धारयिष्यामि रक्षस्व मां पदेपदे।।
卐 भूमि र्धेनु र्धरणी लोकधारिणी। उद्धृताऽसि वराहेण कृष्णेन शतबाहुना।।
卐 मृत्तिके हन मे पापँ यन्मया दुष्कृत ङ्कृतम्। मृत्तिके ब्रह्मदत्ताऽसि काश्यपेनाभिमन्त्रिता। मृत्तिके देहि मे पुष्टि न्त्वयि सर्वं प्रतिष्ठितम्।। 8।।
❀ 卐 मृत्तिके प्रतिष्ठिते सर्वं न्तन्मे निर्णुद मृत्तिके। तया हतेन पापेन गच्छामि परमा ङ्गतिम्।।
卐 यत इन्द्र भयामहे ततो नो अभय ङ्कृधि। मघव ञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि।।
卐 स्वस्तिदा विशस्पति र्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु न स्स्वस्तिदा अभयङ्करः।।
卐 स्वस्ति न इन्द्रो वृद्धश्रवा स्स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति न स्ताक्ष्र्यो अरिष्टनेमि स्स्वस्ति नो बृहस्पति र्दधातु।।
卐 आपान्तमन्यु स्तृपलप्रभर्मा धुनि श्शिमीवा ञ्छरुमाꣳ ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वा गिन्द्रं प्रतिमानानि देभुः।। 9।।
❀ 卐 ब्रह्म जज्ञानं प्रथमं पुरस्ता द्वि सीमत स्सुरुचो वेन आवः। स बुध्निया उपमा अस्य विष्ठा स्सतश्च योनि मसतश्च विवः।।
卐 स्योना पृथिवि भवा नृक्षरा निवेशनी। यच्छा न श्शर्म सप्रथाः।।
卐 गन्धद्वारा न्दुराधर्षा न्नित्यपुष्टा ङ्करीषिणीम्। ईश्वरीꣳ सर्वभूताना न्तामिहोप ह्वये श्रियम्।।
卐 श्रीर्मे भजतु।। अलक्ष्मी र्मे नश्यतु।।

卐 विष्णुमुखा वै देवा श्छन्दोभि रिमा न्लोका ननपजय्य मभ्यजयन्न्।।

卐 महाऽ इन्द्रो वज्रबाहु ष्षोडशी शर्म यच्छतु।। 10।। ❀ स्वस्ति नो मघवा करोतु हन्तु पाप्मानँ योऽस्मा न्द्वेष्टि।।

卐 सोमानङ्ग् स्वरण ङ्कृणुहि ब्रह्मणस्पते। कक्षीवन्तँ य औशिजम्।।

卐 शरीरँ यज्ञशमल ङ्कुसीद न्तस्मि न्थ्सीदतु योऽस्मा न्द्वेष्टि।।

卐 चरणं पवित्रँ विततं पुराणँ येन पूत स्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूता अति पाप्मान मराति न्तरेम।।

卐 सजोषा इन्द्र सगणो मरुद्भि स्सोमं पिब वृत्रह ञ्छूर विद्वान्। जहि शत्रूऽ रप मृधो नुदस्वाथाभय ङ्कृणुहि विश्वतो नः।।

卐 सुमित्रा न आप ओषधय स्सन्तु दुर्मित्रा स्तस्मै भूयासु योऽस्मा न्द्वेष्टि यञ्च वय न्द्विष्मः।।

卐 आपो हि ष्ठा मयोभुव स्तान ऊर्जे दधातन।। 11।। ❀ महे रणाय चक्षसे।।

卐 यो व श्शिवतमो रस स्तस्य भाजयतेह नः। उशती रिव मातरः।।

卐 तस्मा अर ङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा चनः।।

卐 हिरण्यशृङ्गँ वरुणं प्र पद्ये तीर्थं मे देहि याचितः। यन्मया भुक्त मसाधूनां पापेभ्यश्च प्रतिग्रहः।।

卐 यन्मे मनसा वाचा कर्मणा वा दुष्कृत ङ्कृतम्। तन्न इन्द्रो वरुणो बृहस्पति स्सविता च पुनन्तु पुनःपुनः।।

卐 नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः।। 12।।

❀ 卐 यदपा ङ्क्रूरँ यदमेध्यँ यदशान्त न्तदप गच्छतात्।।

卐 अत्याशना दतीपाना द्यच्च उग्रा त्प्रतिग्रहात्। तन्नो वरुणो राजा पाणिना ह्यवमर्शतु।।

卐 सोऽह मपापो विरजो निर्मुक्तो मुक्तकिल्बिषः। नाकस्य पृष्ठ मारुह्य गच्छे द्ब्रह्मसलोकताम्।।

卐 यश्चाप्सु वरुण स्स पुना त्वघमर्षणः।।

卐 इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमऽ सचता परुष्णिया। असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया।।

卐 ऋतञ्च सत्यञ्चाभीद्धा त्तपसोऽध्यजायत। ततो रात्रि रजायत तत स्समुद्रो अर्णवः।। 13।।

❀ 卐 समुद्रा दर्णवा दधि सँवथ्सरो अजायत। अहोरात्राणि विदध द्विश्वस्य मिषतो वशी।।

卐 सूर्याचन्द्रमसौ धाता यथापूर्व मकल्पयत्। दिवञ्च पृथिवी ञ्चान्तरिक्ष मथो सुवः।।
卐 यत्पृथिव्याꣳ रजस्स्व मान्तरिक्षे विरोदसी। इमाꣳ स्तदापो वरुणꣳ पुना त्वघमर्षणः।।
卐 पुनन्तु वसवꣳ पुनातु वरुणꣳ पुना त्वघमर्षणः। एष भूतस्य मध्ये भुवनस्य गोप्ता।।
卐 एष पुण्यकृताँ लोका नेष मृत्यो र्हिरण्मयम्। द्यावापृथिव्यो र्हिरण्मयꣳ सꣳश्रितꣳ सुवः।। 14।। ❀
स न स्सुव स्सꣳशिशाधि।।
卐 आर्द्र ञ्ज्वलति ज्योति रह मस्मि। 卐 ज्योति र्ज्वलति ब्रह्माह मस्मि। 卐 योऽह मस्मि ब्रह्माह मस्मि।
卐 अहमस्मि ब्रह्माह मस्मि। 卐 अह मेवाहं माञ्जुहोमि स्वाहा।
卐 अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः। वरुणोऽपा मघमर्षण स्तस्मा त्पापा त्प्रमुच्यते।
卐 रजोभूमि स्त्वमाꣳ रोदयस्व प्रवदन्ति धीराः।
卐 आक्रा न्थ्समुद्रꣳ प्रथमे विधर्म ञ्जनय न्प्रजा भुवनस्य राजा। वृषा पवित्रे अधि सानो अव्ये बृहथ्सोमो वावृधे सुवान इन्दुः।। 15।।
(परस्ता द्यशो निहित ङ्गुहासु मम चक्रतुण्डाय धीमहि तीक्ष्णदꣳष्ट्राय धीमहि परि प्रतिष्ठित न्देभु र्यच्छतु दधातनाद्योऽर्णव स्सुवो राजैकञ्च। 1। रुद्रो रुद्रश्च दन्तिश्च नन्दि ष्षण्मुख एव च। गरुडो ब्रह्म विष्णुश्च नारसिꣳह स्तथैव च। आदित्योऽग्निश्च दुर्गिश्च क्रमेण द्वादशाम्भसि। म म व च म सु वे ना व भा वै कात्यायनाय। 1।)
❀ 卐 जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः। स नꣳ पर्षदति दुर्गाणि विश्वा नावेव सिन्धु न्दुरिताऽत्यग्निः।।
卐 ता मग्निवर्णा न्तपसा ज्वलन्तीँ वैरोचनी ङ्कर्मफलेषु जुष्टाम्। दुर्गा न्देवीꣳ शरण महं प्र पद्ये सुतरसि तरसे नमः।।
卐 अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभि रति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शँ योः।।
卐 विश्वानि नो दुर्गहा जातवेद सिन्धु न्न नावा दुरिताऽति पर्षि। अग्ने अत्रिव न्मनसा गृणानोऽस्माकं बोध्यविता तनुनाम्।।
卐 पृतनाजितꣳ सहमान मुग्र मग्निꣳ हुवेम परमा थ्सधस्थात्। स नꣳ पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः।।

卐 प्रत्नोषि क मीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि। स्वाञ्चाग्ने तनुवं पिप्रयस्वास्मभ्यञ्च सौभग मायजस्व।।

卐 गोभि र्जुष्ट मयुजो निषिक्त न्तवेन्द्र विष्णो रनु सञ्चरेम। नाकस्य पृष्ठ मभि सँवसानो वैष्णवीँ लोक इह मादयन्ताम्।। 16।। 2।

卐 भूरन्न मग्नये पृथिव्यै स्वाहा 卐 भुवोऽन्नँ वायवेऽन्तरिक्षाय स्वाहा 卐 सुव रन्न मादित्याय दिवे स्वाहा 卐 भूर्भुव स्सुव रन्न ञ्चन्द्रमसे दिग्भ्य स्स्वाहा 卐 नमो देवेभ्य

卐 स्स्वधा पितृभ्यो 卐 भूर्भुवस्सुव रन्न मोम्।। 17।। 3।

卐 भूरग्नये पृथिव्यै स्वाहा 卐 भुवो वायवेऽन्तरिक्षाय स्वाहा 卐 सुव रादित्याय दिवे स्वाहा 卐 भूर्भुव स्सुव श्चन्द्रमसे दिग्भ्य स्स्वाहा 卐 नमो देवेभ्य 卐 स्स्वधा पितृभ्यो 卐 भूर्भुवस्सुव रग्न ओम्।। 18।। 4।

卐 भूरग्नये च पृथिव्यै च महते च स्वाहा 卐 भुवो वायवे चान्तरिक्षाय च महते च स्वाहा 卐 सुव रादित्याय च दिवे च महते च स्वाहा 卐 भूर्भुव स्सुव श्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा 卐 नमो देवेभ्य 卐 स्स्वधा पितृभ्यो 卐 भूर्भुव स्सुव र्महरोम्।। 19।। 5।

卐 पाहि नो अग्न एनसे स्वाहा। 卐 पाहि नो विश्ववेदसे स्वाहा। 卐 यज्ञं पाहि विभावसो स्वाहा। 卐 सर्वं पाहि शतक्रतो स्वाहा।। 20।। 6।

卐 पाहि नो अग्न एकया। 卐 पाह्युत द्वितीयया। 卐 पाह्यूर्जं न्तृतीयया। 卐 पाहि गीर्भि श्चतसृभि र्वसो स्वाहा।। 21।। 7।

卐 यश्छन्दसा मृषभो विश्वरूप श्छन्दोभ्य श्छन्दाꣳस्या विवेश। सचाꣳ शिक्यः पुरोवाचोपनिष दिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्य स्स्वधा पितृभ्यो भूर्भुव स्सुव श्छन्द ओम्।। 22।। 8।

卐 नमो ब्रह्मणे धारणं मे अस्त्वनिराकरण न्धारयिता भूयास ङ्कर्णयो श्श्रुतं मा च्योढ्वं ममामुष्य ओम्।। 23।। 9।

卐 ऋत न्तप स्सत्य न्तप श्श्रुत न्तप श्शान्त न्तपो दम स्तप श्शम स्तपो दान न्तपो यज्ञ न्तपो भूर्भुव स्सुव र्ब्रह्मैत दुपाꣳस्यैतत्तपः।। 24।। 10।

☸❀ यथा वृक्षस्य सम्पुष्पितस्य दूरा द्गन्धो वात्येवं पुण्यस्य कर्मणो दूरा द्गन्धो वाति यथाऽसिधारा ङ्कर्तेऽवहिता मवक्रामे यद्युवेयुवे हवा विह्वयिष्यामि कर्तं पतिष्यामीत्येव ममृता दात्मान ञ्जुगुप्सेत्।। 25। 11।

☸❀ 卐 अणो रणीया न्महतो महीया नात्मा गुहाया न्निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादा न्महिमान मीशम्।।

卐 सप्त प्राणाः प्रभवन्ति तस्मा थ्सप्तार्चिष स्समिध स्सप्त जिह्वाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया न्निहिता स्सप्तसप्त।।

卐 अत स्समुद्रा गिरयश्च सर्वेऽस्माथ्स्यन्दन्ते सिन्धव स्सर्वरूपाः। अतश्च विश्वा ओषधयो रसाच्च येनैष भूत स्तिष्ठ त्यन्तरात्मा।।

卐 ब्रह्मा देवानां पदवीः कवीना मृषि र्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाꣳ स्वधिति र्वनानाꣳ सोमः पवित्र मत्येति रेभन्न्।।

卐 अजा मेकाँ लोहितशुक्लकृष्णां बह्वीं प्रजा ञ्जनयन्तीꣳ सरूपाम्। अजो ह्येको जुषमाणोऽनु शेते जहात्येनां भुक्तभोगा मजोऽन्यः।। 26।।

❀ 卐 हꣳस श्शुचिष द्वसु रन्तरिक्षस द्धोता वेदिष दतिथि र्दुरोणसत्। नृष द्वरस दृतस द्व्योमस दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।।

卐 घृतं मिमिक्षिरे घृतमस्य योनि र्घृते श्रितो घृतमु वस्य धाम। अनुष्वध मा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्।।

卐 समुद्रा दूर्मि र्मधुमाꣳ उदार दुपाꣳशुना सममृतत्व मानट्। घृतस्य नाम गुह्यँ यदस्ति जिह्वा देवाना ममृतस्य नाभिः।।

卐 वय न्नाम प्र ब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः। उप ब्रह्मा शृणव च्छस्यमान ञ्चतुश्शृङ्गोऽवमी द्गौर एतत्।।

卐 चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आ विवेश।। 27।।

❀ 卐 त्रिधा हितं पणिभि र्गुह्यमान ङ्गवि देवासो घृत मन्वविन्दन्न्। इन्द्र एकꣳ सूर्य एक ञ्जजान वेना देकꣳ स्वधया निष्टतक्षुः।।

卐 यो देवानां प्रथमं पुरस्ता द्विश्वा धियो रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमान९ स नो देव श्शुभया स्मृत्या स्सँ युनक्तु।।
卐 यस्मा त्पर न्नापर मस्ति किञ्चि द्यस्मा न्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठ त्येक स्तेनेदं पूर्णं पुरुषेण सर्वम्।।
卐 न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्व मानशुः। परेण नाक न्निहित ङ्गुहायाँ विभ्राज देत द्यतयो विशन्ति।।
卐 वेदान्तविज्ञान सुनिश्चितार्था स्सन्न्यासयोगा द्यतय श्शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृता त्परि मुच्यन्ति सर्वे।।
卐 दहँ विपापं परमेऽश्मभूतँ यत्पुण्डरीकं पुरमध्यसँस्थम्। तत्रापि दह ङ्गगनँ विशोक स्तस्मिन् यदन्त स्तदुपाऽऽसितव्यम्।।
卐 यो वेदाऽऽदौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः पर स्स महेश्वरः।। 28।।
(अजोऽन्य आ विवेश सर्वे चत्वारि च। 12।)
卐 सहस्रशीर्ष न्देवँ विश्वाक्षँ विश्वशम्भुवम्। विश्व न्नारायण न्देव मक्षरं परमं पदम्।।
卐 विश्वतः परमा न्नित्यँ विश्व न्नारायण९ हरिम्। विश्व मेवेदं पुरुष स्तद्विश्व मुप जीवति।।
卐 पतिँ विश्वस्याऽऽत्मेश्वर९ शाश्वत९ शिव मच्युतम्। नारायणं महाज्ञेयं विश्वाऽऽत्मानं परायणम्।।
卐 नारायणपरो ज्योति रात्मा नारायणः परः। नारायणपरं ब्रह्म तत्त्व न्नारायणः परः। नारायणपरो ध्याता ध्यान न्नारायणः परः।।
卐 यच्च किञ्चि ज्जगथ्सर्व न्दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तथ्सर्वँ व्याप्य नारायण स्स्थितः।।
卐 अनन्त मव्यय ङ्कवि९ समुद्रेऽन्तँ विश्वशम्भुवम्। पद्मकोशप्रतीकाश९ हृदय ञ्चाप्यधोमुखम्।।
卐 अधोनिष्ठ्या वितस्त्यान्ते नाभ्या मुपरि तिष्ठति। ज्वालमालाऽऽकुलं भाती विश्वस्याऽऽयतनं महत्।।
卐 सन्तत९ शिलाभि स्तुलंबत्या कोशसन्निभम्। तस्यान्ते सुषिर९ सूक्ष्म न्तस्मि न्थ्सर्वं प्रतिष्ठितम्।।
卐 तस्य मध्ये महानग्नि र्विश्वार्चि र्विश्वतोमुखः। सोऽग्रभु ग्विभज न्तिष्ठ न्नाहार मजरः कविः। तिर्यगूर्ध्व मधश्शायी रश्मय स्तस्य सन्तता।।
卐 सन्तापयति स्व न्देह मापादतल मस्तगः। तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः।।
卐 नीलतोयद मध्यस्था द्विद्युल्लेखेव भास्वरा। नीवारशूकव त्तन्वी पीता भास्व त्यणूपमा।।

卐 तस्या शिखाया मध्ये परमाऽऽत्मा व्यवस्थितः। स ब्रह्म स शिव स्स हरि स्सेन्द्र स्सोऽक्षरः परम स्स्वराट्।। 30।। (अपि वा सन्तता षट्च। 13।)

🏺❀ आदित्यो वा एष एत न्मण्डल न्तपति तत्र ता ऋच स्तदृचा मण्डलꣳ स ऋचाँ लोको,ऽथ य एष एतस्मि न्मण्डलेऽर्चि र्दीप्यते तानि सामानि स साम्नाँ लोको,ऽथ य एष एतस्मि न्मण्डलेऽर्चिषि पुरुष स्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषाँ लोक, स्सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः।। 31।। 14।

🏺❀ आदित्यो वै तेज ओजो बलँ यश श्चक्षु श्श्रोत्र मात्मा मनो मन्यु र्मनु र्मृत्यु स्सत्यो मित्रो वायु राकाशः प्राणो लोकपालः कः किङ्क न्तथ्सत्य मन्न ममृतो जीवो विश्वः कतम स्स्वयम्भु ब्रह्मैत दमृत एष पुरुष एष भूताना मधिपति र्ब्रह्मण स्सायुज्यꣳ सलोकता माप्नो त्येतासा मेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकता माप्नोति य एवँ वेदेत्युपनिषत्।। 32।। 15।

🏺❀ 卐 निधनपतये नमः। 卐 निधनपतान्तिकाय नमः। 卐 ऊर्ध्वाय नमः। 卐 ऊर्ध्वलिङ्गाय नमः। 卐 हिरण्याय नमः। 卐 हिरण्यलिङ्गाय नमः। 卐 सुवर्णाय नमः। 卐 सुवर्णलिङ्गाय नमः। 卐 दिव्याय नमः। 卐 दिव्यलिङ्गाय नमः।। 33।। ❀ 卐 भवाय नमः। 卐 भवलिङ्गाय नमः। 卐 शर्वाय नमः। 卐 शर्वलिङ्गाय नमः। 卐 शिवाय नमः। 卐 शिवलिङ्गाय नमः। 卐 ज्वलाय नमः। 卐 ज्वललिङ्गाय नमः। 卐 आत्माय नमः। 卐 आत्मलिङ्गाय नमः। 卐 परमाय नमः। 卐 परमलिङ्गाय नमः।
एतथ्सोमस्य सूर्यस्य सर्वलिङ्गꣳ स्थापयति पाणिमन्त्रं पवित्रम्।। 34।। 16।

🏺❀ 卐 सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः। भवेभवे नातिभवे भवस्व माम्। भवोद्भवाय नमः।। 35।। 17।

🏺❀ 卐 वामदेवाय नमो ज्येष्ठाय नम श्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नम स्सर्वभूतदमनाय नमो मनोन्मनाय नमः।। 36।। 18।

🏺❀ 卐 अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्य स्सर्वश्शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।। 37।। 19।

🏺❀ 卐 तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।। 38।। 20।

🏺❀ 卐 ईशान स्सर्वविद्याना मीश्वर स्सर्वभूतानां ब्रह्माधिपति ब्र्रह्मणोऽधिपति ब्र्रह्मा शिवो मे अस्तु सदाशिवोम्।। 39।। 21।

🏺❀ 卐 नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः।। 40।। 22।

🏺❀ 卐 ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतँ विरूपाक्षँ विश्वरूपाय वै नमो नमः।। 41।। 23।

🏺❀ 卐 सर्वो वै रुद्र स्तस्मै रुद्राय नमो अस्तु। पुरुषो वै रुद्र स्सन्महो नमो नमः। विश्वं भूतं भुवन श्चित्रं बहुधा जात ञ्जायमानञ्च यत्। सर्वो ह्येष रुद्र स्तस्मै रुद्राय नमो अस्तु।। 42।। 24।

🏺❀ 卐 कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शन्तमꣳ हृदे। सर्वो ह्येष रुद्र स्तस्मै रुद्राय नमो अस्तु।। 43।। 25।

🏺❀ यस्य वैकङ्क त्यग्निहोत्रहवणी भवति प्रत्येवास्याऽऽहुतय स्तिष्ठन्त्यथो प्रतिष्ठित्यै।। 44।। 26।

卐 कृणुष्व पाज[1]❀ - इति पञ्च।। 45।। 27।

🏺❀ 卐 अदिति र्देवा गन्धर्वा मनुष्याः पितरोऽसुरा स्तेषाꣳ सर्वभूतानां माता मेदिनी महता मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृते- ति वसिष्ठः।। 46।। 28।

🏺❀ 卐 आपो वा इदꣳ सर्वँ विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्न मापोऽमृत माप स्सम्राडापो विराडाप स्स्वराडाप श्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्याप स्सत्य माप स्सर्वा देवता आपो भूर्भुवस्सुव राप ओम्।। 47।। 29।

🏺❀ 卐 आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्। पुनन्तु ब्रह्मणस्पति र्ब्रह्मपूता पुनातु माम्। यदुच्छिष्ट मभोज्यँ यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापो ऽसताञ्च प्रति ग्रहꣳ स्वाहा।। 48।। 30।

🏺❀ 卐 अग्निश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यदह्ना पाप मकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्या मुदरेण शिश्ञा। अह स्तदव लुम्पतु। यत्किञ्च दुरितं मयि। इदमहं मा ममृतयोनौ। सत्ये ज्योतिषि जुहोमि स्वाहा।। 49।। 31।

1

卐 सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यद्रात्रिया पाप मकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्या मुदरेण शिश्ञा। रात्रि स्तदव लुम्पतु। यत्किञ्च दुरितं मयि। इद महं मा ममृतयोनौ। सूर्ये ज्योतिषि जुहोमि स्वाहा।। 50।। 32।

ओमित्येकाक्षरं ब्रह्म। अग्नि र्देवता ब्रह्म इत्यार्षम्। गायत्र ञ्छन्दं परमात्मं सरूपम्। सायुज्यँ विनियोगम्।। 51।। 33।

卐 आ यातु वरदा देवी अक्षरं ब्रह्म सम्मितम्। गायत्री ञ्छन्दसां मातेदं ब्रह्म जुषस्व मे।।
卐 यदह्ना त्कुरुते पाप न्तदह्ना त्प्रति मुच्यते। यद्रात्रिया त्कुरुते पाप न्तद्रात्रिया त्प्रति मुच्यते।।
卐 सर्ववर्णे महादेवि सन्ध्या विद्ये सरस्वति।। 52।। 34।

卐 ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवाना न्धाम नामाऽसि विश्वमसि विश्वाऽऽयु स्सर्वमसि सर्वाऽऽयु रभिभूरो 卐 ङ्गायत्री मावाहयामि, 卐 सावित्री मावाहयामि, 卐 सरस्वती मावाहयामि, 卐 छन्दर्षी नावाहयामि, 卐 श्रिय मावाहयामि

गायत्रिया गायत्री च्छन्दो, विश्वामित्र ऋषि, स्सविता देवताऽग्निर्मुखं, ब्रह्मा शिरो, विष्णुर् हृदयँ, रुद्र श्शिखा, पृथिवी योनिः प्राणापान-व्यानोदान-समाना सप्राणा, श्वेतवर्णा साङ्ख्यायन- सगोत्रा गायत्री, चतुर्विँशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्च शीर्षोपनयने विनियोग –

卐 ओं भूः। 卐 ओं भुवः। 卐 ओँ सुवः। 卐 ओं महः। 卐 ओञ्जनः। 卐 ओन्तपः। 卐 ओँ सत्यम्।
卐 ओ न्तथ्सवितु र्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।।
卐 ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुव स्सुवरोम्।। 53।। 35।

卐 उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि। ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्।।
卐 स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता। आयुः पृथिव्या न्द्रविणं ब्रह्मवर्चसं मह्य न्दत्वा प्रजातुं ब्रह्मलोकम्।। 54।। 36।

卐 घृणि स्सूर्य आदित्यो न प्रभावात्यक्षरम्। मधु क्षरन्ति तद्रसम्। सत्यँ वै तद्रस मापो ज्योती रसोऽमृतं ब्रह्म भूर्भुव स्सुवरोम्।। 55।। 37।

卐 ब्रह्म मेतु माम्। मधु मेतु माम्। ब्रह्ममेव मधु मेतु माम्। यास्ते सोम प्रजा वथ्सोऽभि सो अहम्। दुष्ष्वप्नह न्दुरुष्षह। यास्ते सोम प्राणाँ स्तान्जुहोमि।।

त्रिसुपर्णं मयाचितं ब्राह्मणाय दद्यात्। ब्रह्महत्याँ वा एते घ्नन्ति। ये ब्राह्मणा स्त्रिसुपर्णं पठन्ति। ते सोमं प्राऽऽप्नुवन्ति। आसहस्रा त्पङ्क्तिं पुनन्ति।

卐 ओम्।। 56।। 38।

卐 ब्रह्म मेधया। मधु मेधया। ब्रह्ममेव मधुमेधया।।

卐 अद्या नो देव सवितः प्रजावथ्सावी स्सौभगम्। परा दुष्ष्वप्नियꣳ सुव।।

卐 विश्वानि देव सवित र्दुरितानि परा सुव। यद्भद्र न्तन्म आ सुव।।

卐 मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वी र्न स्सन्त्वोषधीः।।

卐 मधु नक्त मुतोषसि मधुम त्पार्थिवꣳ रजः। मधु द्यौरस्तु नः पिता।।

卐 मधुमान्नो वनस्पति र्मधुमाꣳ अस्तु सूर्यः। माध्वी र्गावो भवन्तु नः।।

य इम न्त्रिसुपर्णं मयाचितं ब्राह्मणाय दद्यात्। भ्रूणहत्याँ वा एते घ्नन्ति। ये ब्राह्मणा स्त्रिसुपर्णं पठन्ति। ते सोमं प्राऽऽप्नुवन्ति। आसहस्रा त्पङ्क्तिं पुनन्ति।

卐 ओम्।। 57।। 39।

卐 ब्रह्म मेधवा। मधु मेधवा। ब्रह्ममेव मधु मेधवा।।

卐 ब्रह्मा देवानां पदवीः कवीना मृषि र्विप्राणां महिषो मृगाणाम्। श्येनो गृद्ध्राणाꣳ स्वधिति र्वनानाꣳ सोमः पवित्र मत्येति रेभन्न्।।

卐 हꣳस श्शुचिष द्वसु रन्तरिक्षस द्धोता वेदिष दतिथि र्दुरोणसत्। नृष द्वरस दृतस द्व्योमस दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।।

卐 ऋचे त्वा रुचे त्वा समिथ्स्रवन्ति सरितो न धेनाः। अन्तर्हृदा मनसा पूयमानाः।।

卐 घृतस्य धारा अभि चाकशीमि। हिरण्ययो वेतसो मध्य आसाम्।।

卐 तस्मिन्थ्सुपर्णो मधुकृ त्कुलायी भज न्नास्ते मधु देवताभ्यः। तस्याऽऽसते हरय स्सप्त तीरे स्वधा न्दुहाना अमृतस्य धाराम्।।

य इद न्त्रिसुपर्णं मयाचितं ब्राह्मणाय दद्यात्। वीरहत्याँ वा एते घ्नन्ति। ये ब्राह्मणा स्त्रिसुपर्णं पठन्ति। ते सोमं प्राऽऽप्नुवन्ति। आसहस्रा त्पङ्क्तिं पुनन्ति।

卐 ओम्।। 58।। 40।

☸❀ 卐 मेधा देवी जुषमाणा न आऽगा द्विश्वाची भद्रा सुमनस्यमाना। त्वया जुष्टा नुदमाना दुरुक्ता न्बृह द्वदेम विदथे सुवीराः।।

卐 त्वया जुष्ट ऋषि र्भवति देवि त्वया ब्रह्मा गतश्री रुत त्वया। त्वया जुष्टश्चित्रँ विन्दते वसु सा नो जुषस्व द्रविणोन मेधे।। 59।। 41।

☸❀ 卐 मेधां म इन्द्रो ददातु मेधा न्देवी सरस्वती। मेधां मे अश्विना वुभा वा धत्तां पुष्करस्त्रजा।।

卐 अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवीं मेधा सरस्वती सा मां मेधा सुरभि र्जुषता॰ स्वाहा।। 60।। 42।

☸❀ 卐 आ मां मेधा सुरभि र्विश्वरूपा हिरण्यवर्णा जगती जगम्या। ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताम्।। 61।। 43।

☸❀ 卐 मयि मेधां मयि प्रजां मय्यग्नि स्तेजो दधातु 卐 मयि मेधां मयि प्रजां मयीन्द्र इन्द्रिय न्दधातु 卐 मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु।। 62।। 44।

☸❀ 卐 अपैतु मृत्यु रमृतन्न आगन्वैवस्वतो नो अभय ङ्कृणोतु। पर्णँ वनस्पते रिवाभि न श्शीयता॰ रयि स्सचतान्न श्शचीपतिः।। 63।। 45।

☸❀ 卐 परं मृत्यो अनु परेहि पन्थाँ यस्ते स्व इतरो देवयानात्। चक्षुष्मते श्रृण्वते ते ब्रवीमि मा नः॰ प्रजा॰ रीरिषो मोत वीरान्।। 64।। 46।

☸❀ 卐 वातं प्राणं मनसाऽन्वा रभामहे प्रजापतिँ यो भुवनस्य गोपाः। स नो मृत्यो स्त्रायतां पात्व॰हसो ज्योग्जीवा जरा मशीमहि।। 65।। 47।

☸❀ 卐 अमुत्रभूया दध यद्यमस्य बृहस्पते अभिशस्ते रमुञ्चः। प्रत्यौहता मश्विना मृत्यु मस्मा द्देवाना मग्ने भिषजा शचीभिः।। 66।। 48।

☸❀ 卐 हरि॰ हरन्त मनु यन्ति देवा विश्वस्येशानँ वृषभं मतीनाम्। ब्रह्म सरूप मनु मेद माऽगा दयनं मा वि वधी र्विक्रमस्व।। 67।। 49।

☸❀ 卐 शल्कै रग्नि मिन्धान उभौ लोकौ सनेमहम्। उभयो र्लोकयोर् ऋध्वाऽतिमृत्यु न्तराम्यहम्।। 68।। 50।

☸❀ 卐 मा छिदो मृत्यो मा वधी र्मा मे बलँ विवृहो मा प्र मोषीः। प्रजां मा मे रीरिष आयु रुग्र नृचक्षस न्त्वा हविषा विधेम।। 69।। 51।

卐 मा नो महान्त मुत मा नो अर्भकं मा न उक्षन्त मुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं प्रिया मा न स्तनुवो रुद्र रीरिषः।। 70।। 52।

卐 मा नस्तोके तनये मा न आयुषि मानो गोषु मानो अश्वेषु रीरिषः। वीरा न्मा नो रुद्र भामितो वधीर् हविष्मन्तो नमसा विधेम ते।। 71।। 53।

卐 प्रजापते न त्वदेता न्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुम स्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम्।। 72।। 54।

卐 स्वस्तिदा विशस्पति र्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु न स्स्वस्तिदा अभयङ्करः।। 73।। 55।

卐 त्र्यम्बकँ यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धना न्मृत्यो र्मुक्षीय माऽमृतात्।। 74।। 56।

卐 ये ते सहस्र मयुतं पाशा मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया सर्वा नव यजामहे।। 75।। 57।

卐 मृत्यवे स्वाहा 卐 मृत्यवे स्वाहा।। 76।। 58।

卐 देवकृतस्यैनसो ऽवयजनमसि स्वाहा। 卐 मनुष्यकृतस्यैनसो ऽवयजनमसि स्वाहा। 卐 पितृकृतस्यैनसो ऽवयजनमसि स्वाहा। 卐 आत्मकृत स्यैनसो ऽवयजनमसि स्वाहा। 卐 अन्यकृतस्यैनसो ऽवयजनमसि स्वाहा। 卐 अस्मत्कृत स्यैनसो ऽवयजनमसि स्वाहा। 卐 यद्दिवा च नक्त श्चैन श्चकृम तस्यावयजनमसि स्वाहा। 卐 यथ्स्वपन्तश्च जाग्रतश्चैन श्चकृम तस्यावयजनमसि स्वाहा। 卐 यथ्सुषुप्तश्च जाग्रतश्चैन श्चकृम तस्यावयजनमसि स्वाहा। 卐 यद्विद्वाꣳस श्चाविद्वाꣳस श्चैन श्चकृम तस्यावयजनमसि स्वाहा। 卐 एनसएनसो ऽवयजनमसि स्वाहा।। 77।। 59।

卐 यद्वो देवा श्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेडनम्। अरा वायो नो अभि दुच्छुनायते तस्मि न्तदेनो वसवो निधेतन स्वाहा।। 78।। 60।

卐 कामोऽकार्षी न्नमो नमः।

卐 कामोऽकार्षी, त्कामः करोति नाह ङ्करोमि, कामः कर्ता नाह ङ्कर्ता, कामः कारयिता नाह ङ्कारयिता, एष ते कामकामाय स्वाहा।। 79।। 61।

卐 मन्युरकार्षी न्नमो नमः।

卐 मन्यु रकार्षी न्मन्युः करोति नाह ङ्करोमि मन्युः कर्ता नाह ङ्कर्ता मन्युः कारयिता नाह ङ्कारयिता एष ते मन्यो मन्यवे स्वाहा।। 80।। 62।

☸❀ 卐 तिला न्जुहोमि सरसाᳲ सपिष्टा न्गन्धारमम चित्ते रमन्तु स्वाहा। 卐 गावो हिरण्य न्धन मन्नपानᳲ सर्वेषाᳲ श्रियै स्वाहा। 卐 श्रियञ्च लक्ष्मिञ्च पुष्टिञ्च कीर्तिञ्चानृण्यताम्। ब्रह्मण्यं बहुपुत्रताम्। श्रद्धामेधे प्रजा स्सन्ददातु स्वाहा।। 81।। 63।

卐 तिलाः कृष्णा स्तिला श्श्वेता स्तिला स्सौम्या वशानुगाः। तिलाः पुनन्तु मे पापँ यत्किञ्चि दुरितं मयि स्वाहा।।

卐 चोरस्यान्न न्नवश्राद्धं ब्रह्महा गुरुतल्पगः। गोस्तेयᳲ सुरापानं भ्रूणहत्या तिलाशान्तिᳲ शमयन्तु स्वाहा।।

卐 श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिञ्चानृण्यताम्। ब्रह्मण्यं बहुपुत्रताम्। श्रद्धामेधे प्रज्ञातु जातवेद स्सन्ददातु स्वाहा।। 82।। 64।

☸❀ 卐 प्राणापान- व्यानोदान- समाना मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।

卐 वाङ्मन श्चक्षु श्श्रोत्र जिह्वा घ्राण रेतो बुद्ध्याकूति स्सङ्कल्पा मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।।

卐 त्वक्कर्म माᳲस रुधिर मेदो मज्जा स्नायवोऽस्थीनि मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।।

卐 शिरः पाणि पाद पार्श्व पृष्ठोरूदर जङ्घ शिश्ञोपस्थ पायवो मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।।

卐 उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्षि देहि देहि ददापयिता मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।। 83।। 65।

☸❀ 卐 पृथिव्याप स्तेजो वायु राकाशा मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।

卐 शब्द स्पर्श रूप रस गन्धा मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।

卐 मनो वाक्काय कर्माणि मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।

卐 अव्यक्तभावै रहङ्कारै र्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।

卐 आत्मा मे शुध्यन्ता ञ्ज्योति रहँ विरजा विपाप्मा भूयासᳬ स्वाहा।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 अन्तरात्मा मे शुध्यन्ता ज्योति रहँ विरजा विपाप्मा भूयासङ्ँ स्वाहा।

卐 परमात्मा मे शुध्यन्ता ज्योति रहँ विरजा विपाप्मा भूयासङ्ँ स्वाहा।

卐 क्षुधे स्वाहा। 卐 क्षुत्पिपासाय स्वाहा। 卐 विविट्यै स्वाहा। 卐 ऋग्विधानाय स्वाहा। 卐 कषोत्काय स्वाहा।

卐 क्षुत्पिपासामल ज्येष्ठा मलक्ष्मी नाशयाम्यहम्। अभूति मसमृद्धिञ्च सर्वा न्निर्णुद मे पाप्मानङ्ँ स्वाहा।

卐 अन्नमय प्राणमय मनोमय विज्ञानमय मानन्दमय मात्मा मे शुध्यन्ता ज्योति रहँ विरजा विपाप्मा भूयासङ्ँ स्वाहा।। 84।। 66।

❀ 卐 अग्नये स्वाहा। 卐 विश्वेभ्यो देवेभ्य स्स्वाहा। 卐 ध्रुवाय भूमाय स्वाहा। 卐 ध्रुवक्षितये स्वाहा। 卐 अच्युतक्षितये स्वाहा। 卐 अग्नये स्विष्टकृते स्वाहा। 卐 धर्माय स्वाहा। 卐 अधर्माय स्वाहा। 卐 अद्भ्य स्स्वाहा। 卐 ओषधिवनस्पतिभ्य स्स्वाहा।। 85।। ❀ 卐 रक्षोदेवजनेभ्य स्स्वाहा। 卐 गृह्याभ्य स्स्वाहा। 卐 अवसानेभ्य स्स्वाहा। 卐 अवसानपतिभ्य स्स्वाहा। 卐 सर्वभूतेभ्य स्स्वाहा। 卐 कामाय स्वाहा। 卐 अन्तरिक्षाय स्वाहा। 卐 यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा। 卐 पृथिव्यै स्वाहा। 卐 अन्तरिक्षाय स्वाहा।। 86।। ❀ 卐 दिवे स्वहा। 卐 सूर्याय स्वाहा। 卐 चन्द्रमसे स्वाहा। 卐 नक्षत्रेभ्य स्स्वाहा।

卐 इन्द्राय स्वाहा। 卐 बृहस्पतये स्वाहा। 卐 प्रजापतये स्वाहा। 卐 ब्रह्मणे स्वाहा। 卐 स्वधा पितृभ्य स्स्वाहा। 卐 नमो रुद्राय पशुपतये स्वाहा।। 87।

❀ 卐 देवेभ्य स्स्वाहा। 卐 पितृभ्य स्स्वधाऽस्तु। 卐 भूतेभ्यो नमः। 卐 मनुष्येभ्यो हन्ता। 卐 प्रजापतये स्वाहा। 卐 परमेष्ठिने स्वाहा।

卐 यथा कूप श्शतधार स्सहस्रधारो अक्षितः। एवा मे अस्तु धान्यऽ सहस्रधार मक्षितम्। धनधान्यै स्वाहा।

卐 ये भूताः प्रचरन्ति- दिवा-- 卐 --नक्तं-- बलि मिच्छन्तो वितुदस्य प्रेष्याः। तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपति र्दधातु स्वाहा।। 88।। (ओषधिवनस्पतिभ्य स्स्वाहा ऽन्तरिक्षाय स्वाहा नमो रुद्राय पशुपतये स्वाहा वितुदस्य प्रेष्या एकञ्च। 67।)

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore

☸❀ 卐 ओन्तद्ब्रह्म। ओन्तद्वायुः। ओन्तदात्मा। ओन्तथ्सत्यम्। ओन्तथ्सर्वम्। ओन्त त्पुरोर्नमः। अन्तश्चरति भूतेषु गुहायाँ विश्वमूर्तिषु। त्वँ यज्ञ स्त्वँ वषड्कार स्त्वमिन्द्र स्त्व॰ रुद्र स्त्वँ विष्णु स्त्वं ब्रह्म त्वं प्रजापतिः। त्व न्तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुव स्सुवरोम्।। 89।। 68।

☸❀ 卐 श्रद्धायां प्राणे निविष्टोऽमृत ञ्जुहोमि। 卐 श्रद्धाया मपाने निविष्टो ऽमृत ञ्जुहोमि। 卐 श्रद्धायाँ व्याने निविष्टोऽमृत ञ्जुहोमि। 卐 श्रद्धाया मुदाने निविष्टोऽमृत ञ्जुहोमि। 卐 श्रद्धाया॰ समाने निविष्टोऽमृत ञ्जुहोमि।

卐 ब्रह्मणि म आत्माऽमृतत्वाय। 卐 अमृतोपस्तरणमसि।

卐 श्रद्धायां प्राणे निविष्टोऽमृत ञ्जुहोमि। शिवो मा विशाप्रदाहाय। प्राणाय स्वाहा।। 90।।

❀ 卐 श्रद्धाया मपाने निविष्टोऽमृत ञ्जुहोमि। शिवो मा विशाप्रदाहाय। अपानाय स्वाहा।।

卐 श्रद्धायाँ व्याने निविष्टोऽमृत ञ्जुहोमि। शिवो मा विशाप्रदाहाय। व्यानाय स्वाहा।।

卐 श्रद्धायामुदाने निविष्टोऽमृत ञ्जुहोमि। शिवो मा विशाप्रदाहाय। उदानाय स्वाहा।।

卐 श्रद्धाया॰ समाने निविष्टोऽमृत ञ्जुहोमि। शिवो मा विशाप्रदाहाय। समानाय स्वाहा।।

卐 ब्रह्मणि म आत्माऽमृतत्वाय। 卐 अमृतापिधानमसि।। 91।। (प्राणाय स्वाहा समाने निविष्टोऽमृत ञ्जुहोमि चत्वारि च। 69।)

☸❀ 卐 श्रद्धायां प्राणे निविश्यामृत॰ हुतम्। प्राण मन्नेनाऽऽप्यायस्व।।

卐 श्रद्धाया मपाने निविश्यामृत॰ हुतम्। अपान मन्नेनाऽऽप्यायस्व।।

卐 श्रद्धायाँ व्याने निविश्यामृत॰ हुतम्। व्यान मन्नेनाऽऽप्यायस्व।।

卐 श्रद्धाया मुदाने निविश्यामृत॰ हुतम्। उदान मन्नेनाऽऽप्यायस्व।।

卐 श्रद्धाया॰ समाने निविश्यामृत॰ हुतम्। समान मन्नेनाऽऽप्यायस्व।। 92।। 70।

☸❀ 卐 अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः। ईश स्सर्वस्य जगतः प्रभु प्रीणाति विश्वभुक्।। 93।। 71।

☸❀ 卐 वाङ्म आसन्न्। नसोः प्राणः। अक्ष्यो श्चक्षुः। कर्णयो श्श्रोत्रम्। बाहुवो र्बलम्। ऊरुवो रोजः। अरिष्टा विश्वान्यङ्गानि तनूः। तनुवा मे सह नमस्ते अस्तु मा मा हि॰सीः।। 94।। 72।

☸❀ 卐 वय स्सुपर्णा उपसेदु रिन्द्रं प्रियमेधा ऋषयो नाधमानाः। अप ध्वान्त मूर्णुहि पूर्धि चक्षु र्मुमुग्ध्यस्मा न्निधयेऽवबद्धान्।। 95।। 73।

ॐ प्राणाना ङ्ग्रन्थिरसि रुद्रो मा विशान्तकः। तेनान्नेनाऽप्यायस्व।। 96।।74।

ॐ नमो रुद्राय विष्णवे मृत्यु र्मे पाहि।। 97।। 75।

ॐ त्वमग्ने द्युभि स्त्वमाशुशुक्षणि स्त्वमद्भ्य स्त्वमश्मन स्परि। त्वँ वनेभ्य स्त्वमोषधीभ्य स्त्वन्नृणा न्नृपते जायसे शुचिः।। 98।। 76।

ॐ शिवेन मे सन्तिष्ठस्व स्योनेन मे सन्तिष्ठस्व सुभूतेन मे सन्तिष्ठस्व ब्रह्मवर्चसेन मे सन्तिष्ठस्व यज्ञस्यर्द्धि मनु सन्तिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नमः।। 99।। 77।

सत्यं परं पर॒ सत्य॒ सत्येन न सुवर्गा ल्लोका च्च्यवन्ते कदा चन सता॒ हि सत्य न्तस्माथ्सत्ये रमन्ते, तप इति तपो नानशना त्परँ यद्धि पर न्तप स्तद्दुर्धर्ष न्तद्दुराधर्ष न्तस्मा त्तपसि रमन्ते, दम इति नियतं ब्रह्मचारिण स्तस्मा द्दमे रमन्ते, शम इत्यरण्ये मुनय स्तस्मा च्छमे रमन्ते, दानमिति सर्वाणि भूतानि प्रश॒सन्ति दाना न्नातिदुश्चर न्तस्माद्दाने रमन्ते, धर्म इति धर्मेण सर्वमिदं परिगृहीत न्धर्मा न्नातिदुष्कर न्तस्मा द्धर्मे रमन्ते, प्रजन इति भूया॒स स्तस्माद्भूयिष्ठाः प्र जायन्ते तस्मा द्भूयिष्ठाः प्रजनने रमन्ते,ऽग्नय इत्याह तस्मा दग्नय आधातव्या, अग्निहोत्र मित्याह तस्मा दग्निहोत्रे रमन्ते, यज्ञ इति यज्ञो हि देवा स्तस्मा द्यज्ञे रमन्ते, मानस मिति विद्वा॒स स्तस्मा द्विद्वा॒स एव मानसे रमन्ते, न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि परा॒सि न्यास एवात्यरेचयद्य एवँ वेदेत्युपनिषत्।। 100।। 78। (सत्य न्तपो दम श्शमो दान न्धर्मः प्रजनन मग्नयोऽग्निहोत्रँ यज्ञो मानस न्न्यासो द्वादश। 12।)

ॐ प्राजापत्यो हाऽरुणि स्सुपर्णेयः प्रजापतिं पितर मुप ससार किं भगवन्तः परमँ वदन्तीति, तस्मै प्रोवाच-

सत्येन वायु रावाति सत्येनाऽदित्यो रोचते दिवि सत्यँ वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठित न्तस्माथ्सत्यं परमँ वदन्ति,

तपसा देवा देवता मग्र आय न्तपसर्षय स्सुव रन्वविन्द न्तपसा सपत्ना न्प्रणुदा.माराती स्तपसि सर्वं प्रतिष्ठित न्तस्मा त्तपः परमँ वदन्ति,

दमेन दान्ताः किल्बिष मवधून्वन्ति दमेन ब्रह्मचारिण स्सुव रगच्छ न्दमो भूताना न्दुराधर्ष न्दमे सर्वं प्रतिष्ठित न्तस्माद्दमः परमँ वदन्ति,

शमेन शान्ता श्शिव माचरन्ति शमेन नाकं मुनयोऽन्वविन्द न्छमो भूताना न्दुराधर्ष ञ्छमे सर्वं प्रतिष्ठित न्तस्माच्छमः परमँ वदन्ति,
दानँ यज्ञानाँ वरूथ न्दक्षिणा लोके दातार९ सर्वभूता न्युपजीवन्ति दानेनाराती रपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठित न्तस्मा द्दानं परमँ वदन्ति,
धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पाप मपनुदति धर्मे सर्वं प्रतिष्ठित न्तस्माद्धर्मं परमँ वदन्ति,
प्रजननँ वै प्रतिष्ठा लोके साधु प्रजाया स्तन्तु न्तन्वानः पितृणा मनृणो भवति तदेव तस्या अनृण न्तस्मा त्प्रजननं परमं वद,-
न्त्यग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक्पृथिवी रथन्तर मन्वाहार्यपचनँ यजु रन्तरिक्षँ वामदेव्य माहवनीय स्साम सुवर्गो लोको बृह त्तस्मा दग्नी न्परमँ वद,-
न्त्यग्निहोत्र९ सायंप्रात र्गृहाणा न्निष्कृति, स्स्विष्ट९ सुहुतँ यज्ञक्रतूनां प्रायण९ सुवर्गस्य लोकस्य ज्योति स्तस्मादग्निहोत्रं परमँ वदन्ति,
यज्ञ इति यज्ञेन हि देवा दिवङ्गता यज्ञेनासुरा नपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठित न्तस्माद्यज्ञं परमँ वदन्ति,
मानसँ वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठित न्तस्मा न्मानसं परमं वदन्ति,
न्यास इत्याहु र्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतम स्स्वयम्भु प्रजापति स्सँवथ्सर इति सँवथ्सरोऽसावादित्यो य एष आदित्ये पुरुष स्स परमेष्ठी ब्रह्माऽऽत्मा,
याभि रादित्य स्तपति रश्मिभि स्ताभिः पर्जन्यो वर्षति पर्जन्ये.नौषधिवनस्पतयः प्र जायन्त ओषधिवनस्पतिभि रन्नं भव,त्यन्नेन प्राणाः- प्राणै र्बलं- बलेन तप- स्तपसा श्रद्धा- श्रद्धया मेधा- मेधया मनीषा- मनीषया मनो- मनसा शान्ति- श्शान्त्या चित्त-ञ्चित्तेन स्मृतिꣳ- स्मृत्या स्मारꣳ- स्मारेण विज्ञानँ- विज्ञानेनाऽऽत्मानँ वेदयति, तस्मादन्न न्ददद्'2'न्थ्सर्वाण्येतानि ददा त्यन्नात्प्राणा भवन्ति, भूतानां प्राणै र्मनो- मनसश्च विज्ञानँ- विज्ञाना दानन्दो ब्रह्मयोनि,
स्स वा एष पुरुषः पञ्चधा पञ्चाऽऽत्मा येन सर्व मिदं प्रोतं पृथिवी चान्तरिक्षञ्च द्यौश्च दिश श्चावान्तरदिशाश्च, स वै सर्व मिद ञ्जग थ्स सभूत९ स भव्य ञ्जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्श्रद्धा सत्यो

महस्वा न्तपसो वरिष्ठादुज्ञात्वा तमेवँ मनसा हृदा च भूयो न मृत्यु मुप याहि विद्वा न्तस्मा न्न्यास मेषा न्तपसा मतिरिक्त माहु,

卐 वसुरण्वो विभूरसि प्राणे त्वमसि सन्धाता ब्रह्म न्त्वमसि विश्वधृ त्तेजोदा स्त्वमस्यग्नि रसि वर्चोदा स्त्वमसि सूर्यस्य द्युम्नोदा स्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा महस

卐 ओ- मित्यात्मानँ युञ्जीतैतद्वै महोपनिषद न्देवाना ङ्गुह्यँ य एवँ वेद ब्रह्मणो महिमान माप्नोति तस्मा द्ब्रह्मणो महिमान मित्युपनिषत्।। 101।। 179।

तस्यैवँ विदुषो यज्ञस्याऽऽत्मा यजमान- श्श्रद्धा पत्नी- शरीर मिध्म- मुरो वेदि- र्लोमानि बर्हि- र्वेद श्शिखा- हृदयँ यूप४- काम आज्यं- मन्यु४ पशु- स्तपोऽग्नि- र्दम श्शमयिता- दक्षिणा वाग्घोता- प्राण उद्गाता- चक्षु रध्वर्यु- र्मनो ब्रह्मा- श्रोत्र मग्नी,

द्यावद्ध्रियते सा दीक्षा- यदश्नाति तद्धवि- र्यत्पिबति तदस्य सोमपानँ- यद्रमते तदुपसदो- यथ्सञ्चर त्युपविश त्युत्तिष्ठते च स प्रवर्ग्यो- यन्मुखँ तदाहवनीयो- या व्याहृति राहुति- र्यदस्य विज्ञान न्तज्जुहोति- यथ्सायंप्रातरत्ति तथ्समिधँ- यत्प्रातर्मध्यन्दिन९ सायञ्च तानि सवनानि- ये अहोरात्रे ते दर्शपूर्णमासौ- येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि- य ऋतव स्ते पशुबन्धा- ये सँवथ्सराश्च परिवथ्सराश्च तेऽहर्गणा- स्सर्ववेदसँ वा एतथ्सत्रँ- यन्मरण न्तदवभृथ- एतद्वै जरामर्य मग्निहोत्र९ सत्रँ,

य एवँ विद्वा नुदगयने प्रमीयते देवाना मेव महिमान ङ्गत्वाऽऽदित्यस्य सायुज्य ङ्गच्छ,त्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमान ङ्गत्वा चन्द्रमस स्सायुज्य९ सलोकता माप्नो,त्येतौ वै सूर्याचन्द्रमसो र्महिमानौ ब्राह्मणो विद्वा नभि जयति, तस्माद्ब्रह्मणो महिमान माप्नोति तस्माद्ब्रह्मणो महिमानम्।। 102।। 80।

卐 सह नाववतु। सह नौ भुनक्तु। सह वीर्य ङ्करवावहै। तेजस्वि नावधीत मस्तु मा वि द्विषावहै। 卐 ओं शान्ति श्शान्ति श्शान्तिः।।

(अम्भस्यैकपञ्चाश दुत्तरशत, ज्ञातवेदसे चतुर्दश, भूरन्नं, भूरग्नये, भूरग्नये चैकमेकं, पाहि- पाहि- चत्वारि चत्वारि, यश्छन्दसा न्द्वे, नमो ब्रह्मण- ऋत न्तपो- यथा वृक्षस्यैक मेक, मणो रणीया९ श्चतुस्त्रि९श, त्सहस्रशीर्ष९ षड्वि९शति, रादित्यो वा एष- आदित्यो वै तेज एकमेक, न्निधनपतये त्रयोवि९शति, स्सद्यो जात न्त्रीणि, वामदेवायैक, मघोरेभ्य- स्तत्पुरुषाय द्वे द्वे, ईशानो- नमो हिरण्यबाहव- एकमेक, - मृत९ सत्य न्द्वे, सर्वो वै रुद्र श्चत्वारि, कद्रुद्राय त्रीणि, यस्य वैकङ्कती- कृणुष्व पाजो-ऽदिति- रापो वा

इद मेकमेक, मापः पुनन्तु चत्वा,-र्यग्निश्च सूर्यश्च नव न,वोमिति चत्वा,- र्यायाऽऽतु प,ञ्चौजोऽसि दशो-त्तमे चत्वारि, घृणि स्त्रीणि, ब्रह्म मेतु माँ यास्ते ब्रह्महत्या न्द्वादश, ब्रह्म मेधयाऽद्या न इमं भ्रूणहत्यां-ब्रह्म मेधवा ब्रह्मा देवाना मिदँ वीरहत्या मेकान्न वि९शति रेकान्न वि९शति, मेधा देवी- मेधां म इन्द्र श्चत्वारि चत्वा,र्यामां मेधा द्वे, मयि मेधा मेक, मपैतु- परँ- वातं प्राण- ममुत्रभूया- द्धरि९- शल्कै रग्निं-मा छिदो मृत्यो- मा नो महान्तं- मा नस्तोके- प्रजापते- स्वस्तिदा स्त्र्यंबकँ- ये ते सहस्र मयुत-न्द्वे द्वे, मृत्यवे स्वाहैक, -न्देवकृत स्यैकादश, यद्वो देवाः- कामोऽकार्षी- न्मन्युरकार्षी द्वे द्वे, तिला न्जुहोमि गाव श्श्रियं प्रजाः पञ्च, तिलाः कृष्णा श्चोरस्य श्रीः प्रज्ञातु जातवेद स्सप्त, प्राण वात्त्वक्छिर उत्तिष्ठ पुरुष पञ्च, पृथिवी शब्द मनो वागव्यक्ताऽऽत्माऽन्तरात्मा परमाऽऽत्मा मे क्षुधे ऽन्नमय पञ्चदशा,ऽग्नये स्वाहैकचत्वारि९श, दोन्तद्ब्रह्म नव, श्रद्धायां प्राणे निविष्टो ऽमृत ञ्जुहोमि चतुर्वि९शति, श्श्रद्धायां प्राणे निविश्याऽमृत९ हुत न्दशा,ऽङ्गुष्ठमात्रः पुरुषो द्वे, वाङ्म आस न्नष्टौ, वय स्सुपर्णाः- प्राणना ङ्ग्रन्थिरसि द्वेद्वे, नमो रुद्रायैक, न्त्वमग्ने द्युभि र्द्वे, शिवेन मे सन्तिष्ठस्व- सत्यं- प्राजापत्य- स्तस्यैव मेकमेक, मशीतिः।। अम्भस्य पारे- स्वस्तिनः- पाहि नो अग्न एकया- ऽऽदित्यो वा- ऋत९ सत्य- मोमि-त्याऽऽमां मेधा- मा न स्तोके- तिला न्जुहोमि- श्रद्धाया मपाने निविष्टः- प्राजापत्यो ह्युत्तर शतम्।। अम्भस्यपारे ब्रह्मणो महिमानम्।।)

## ॐएकाग्नि काण्डम्

### एकाग्नि काण्डे प्रथमः प्रश्नः

### वै।का।11एकादशानुवाकाः) 1विवाहप्रकरणम् 21)

卐 प्रसुग्मन्ता धियसानस्य सक्षणि वरेभि र्वरा९ अभिषु प्रसीदत। अस्माक मिन्द्र उभय ञ्जुजोषति यथ्सौम्यस्यान्धसो बुबोधति।।

卐 अनृक्षरा ऋजव स्सन्तु पन्था येभि स्सखायो यन्ति नो वरेयम्। समर्यमा सं भगो नो निनीया थ्सञ्जास्पत्य९ सुयम मस्तु देवाः।।

卐 अभ्रातृघ्नीँ वरुणापतिघ्नीं बृहस्पते। इन्द्रापुत्रघ्नीँ लक्ष्म्यन्ता मस्यै सवित स्सुव।।

卐 अघोरचक्षु रपतिघ्न्येधि शिवा पतिभ्य स्सुमना स्सुवर्चाः। जीवसू र्देवकामा स्योना शन्नो भव द्विपदे शञ्चतुष्पदे।।

卐 इद महँ या त्वयि पतिघ्न्यलक्ष्मि स्ता न्निर्दिशामि।

卐 जीवा॒ रुदन्ति विमयन्ते अध्वरे दीर्घा मनुप्रसिति न्दीधियु र्नरः। वामं पितृभ्यो य इद॒ समेरिरे मय॑ पतिभ्यो जनय॑ परिष्वजे।

卐 व्युक्षत्क्रूर मुदच न्त्वाप आऽस्यै ब्राह्मणा स्स्नपन॒ हरन्तु। अवीरघ्नी रुदच न्त्वापः।

卐 अर्यम्णो अग्निं परि यन्तु क्षिप्रं प्रतीक्षन्ता॒ श्वश्र्वो देवराश्च।

卐 खेऽनस॑ खे रथ॑ खे युगस्य शचीपते। अपाला मिन्द्र त्रि॑ पूत्व्यकर थ्सूर्यवर्चसम्।

卐 शन्ते हिरण्य॒ शमु सन्त्वाप श्शन्ते मेथी भवतु शँ युगस्य तृद्म। शन्त आप श्शतपवित्रा भव न्त्वथा पत्या तन्व॒ स॒सृजस्व।। 1।। (दीधियु र्नरोऽष्टौ च। 1।)

卐 हिरण्यवर्णा श्शुचय॑ पावका॑ प्रचक्रमुर् हित्वाऽवद्यमापः। शतं पवित्रा वितता ह्यासु ताभिष्ट्वा देव स्सविता पुनातु।।

卐 हिरण्यवर्णा श्शुचय॑ पावका यासु जात॑ कश्यपो या स्वग्निः। या अग्नि ङ्गर्भ न्दधिरे सुवर्णा स्तास्त आप श्शङ्ग स्योना भवन्तु।।

卐 यासा॒ राजा वरुणो याति मध्ये सत्यानृते अवपश्य न्जनानाम्। या अग्नि ङ्गर्भ न्दधिरे सुवर्णा स्तास्त आपश्शङ्ग स्योना भवन्तु।।

卐 यासा न्देवा दिवि कृण्वन्ति भक्षँ या अन्तरिक्षे बहुधा निविष्टाः। या अग्नि ङ्गर्भ न्दधिरे सुवर्णा स्तास्त आप श्शङ्ग स्योना भवन्तु।।

卐 शिवेन त्वा चक्षुषा पश्यन्त्वाप श्शिवया तन्वोप स्पृशन्तु त्वचन्ते। घृतश्चुत श्शुचयो या॑ पावका स्तास्त आप श्शङ्ग स्योना भवन्तु।।

卐 परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः। वृद्धाऽऽयु मनु वृद्धयो जुष्टा भवन्तु जुष्टयः।।

卐 आशासाने[1]- त्येषा।

卐 पूषा त्वेतो नयतु हस्त गृह्याश्विनौ त्वा प्रवहता॒ रथेन। गृहा न्गच्छ गृहपत्नी यथाऽसो वशिनी त्वँ विदथ मावदासि।। 2।। (भवन्तु पञ्च च। 2।)

卐 सोम॑ प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयो अग्निष्टे पति स्तुरीयस्ते मनुष्यजाः।।

卐 सोमोऽदद.द्गन्धर्वाय गन्धर्वोऽदद.दग्नये। रयिञ्च पुत्रा॒श्चादा दग्नि र्मह्य मथो इमाम्।।

1

卐 गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टि र्यथाऽसः। भगो अर्यमा सविता पुरन्धि र्मह्यन्त्वा ऽदु र्गार्हपत्याय देवाः।।
卐 ते ह पूर्वे जनासो यत्र पूर्ववहो हिताः। मूर्धन्वान् यत्र सौभ्रव॰ पूर्वो देवेभ्य आऽतपत्।।
卐 सरस्वति प्रेद मव सुभगे वाजिनीवति। तान्त्वा विश्वस्य भूतस्य प्रगायाम स्यग्रतः।।
卐 य एति प्रदिशस्सर्वा दिशोऽनु पवमानः। हिरण्यहस्त ऐरम्म स्सत्वा मन्मनस ङ्कृणोतु।।
卐 एक मिषे विष्णुस्त्वाऽन्वेतु 卐 द्वे ऊर्जे-- 卐 त्रीणि व्रताय-- 卐 चत्वारि मायोभवाय -- 卐 पञ्च पशुभ्य-- 卐 षड्ढतुभ्य-- 卐 स्सप्त सप्तभ्यो होत्राभ्यो- विष्णु स्त्वाऽन्वेतु।।
卐 सखा सप्तपदा भव सखायौ सप्तपदा बभूव सख्यन्ते गमेय॰ सख्यात्ते मा योष॰ सख्यान्मे मा योष्ठा स्समयाव सङ्कल्पावहै सम्प्रियौ रोचिष्णू सुमनस्यमानौ। इष मूर्ज मभि सँवसानौ सन्नौ मना॰सि सँ व्रता समु चित्तान्याऽकरम्।।
卐 सा त्वमस्यमूह ममूह मस्मि सा त्व- न्द्यौरहं पृथिवी त्व॰- रेतोऽह॰ रेतोभृत्त्वं- मनोऽहमस्मि वाक्त्व॰- सामाह मस्म्यृक्त्व॰- सा मामनुव्रता भव पु॰से पुत्राय वेत्तवै श्रियै पुत्राय वेत्तव एहि सूनृते।। 3।। (अग्रतष्षड्व। 3।)
卐 सोमाय जनिविदे स्वाहा 卐 गन्धर्वाय जनिविदे स्वाहा卐ऽग्नये जनिविदे स्वाहा।।
卐 कन्यला पितृभ्यो यती पतिलोक मव दीक्षा मदास्थ स्वाहा।
卐 प्रेतो मुञ्चाति नामुत स्सुबद्धा ममुतस्करत्। यथेय मिन्द्र मीढ्व स्सुपुत्रा सुभगाऽसति।
卐 इमा न्त्वमिन्द्र मीढ्व स्सुपुत्रा॰ सुभगाङ्कृणु। दशास्यां पुत्रा नाधेहि पति मेकादश ङ्कृधि।।
卐 अग्निरैतु प्रथमो देवताना॰ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदय॰ राजा वरुणोऽनु मन्यताँ यथेय॰ स्त्री पौत्र मघन्न रोदात्।।
卐 इमा मग्नि स्त्रायता ङ्गार्हपत्य॰ प्रजामस्यै नयतु दीर्घ मायुः। अशून्योपस्था जीवता मस्तु माता पौत्र मानन्द मभि प्र बुध्यता मियम्।।
卐 मा ते गृहे निशि घोष उत्था- दन्यत्र त्वद्रुदत्य स्सँ विशन्तु। मा त्वँ विकेश्युर आ वधिष्ठा जीवपत्नी पतिलोके वि राज पश्यन्ती प्रजा॰ सुमनस्यमानाम्।।
卐 द्यौस्ते पृष्ठ॰ रक्षतु वायु रूरू अश्विनौ च स्तन न्धयन्त॰ सविताऽभि रक्षतु। आ वासस॰ परिधाना द्बृहस्पति र्विश्वे देवा अभि रक्षन्तु पश्चात्।।

卐 अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम्। शीर्ष्ण स्स्रज मिवोन्मुच्य द्विषद्भ्यः प्रति मुञ्चामि पाशम्।।

卐इमं मे वरुण[1]❃ 卐 तत्त्वा यामि[2]❃ 卐 त्वन्नो अग्ने[3]❃卐 स त्वन्नो अग्ने[4]❃-

卐 त्वमग्ने अयाऽस्यया सन्मनसा हितः। अया सन् हव्य मूहिषेऽयानो धेहि भेषजम्।। 4।। (इयमष्टौ च। 4।)

❀ 卐 आतिष्ठेम मश्मान मश्मेव त्वꣳ स्थिरा भव। अभि तिष्ठ पृतन्यत स्सहस्व पृतनायतः।।

卐 इय न्नार्युप ब्रूते कुल्पा न्यावपन्तिका। दीर्घाऽऽयुरस्तु मे पति र्जीवातु शरद श्शतम्।।

卐 तुभ्यमग्ने पर्यवह'2'न्थ्सूर्यां वहतुना सह। पुनः पतिभ्यो जाया न्दा अग्ने प्रजया सह।।

卐 पुनः पत्नी मग्नि रदा दायुषा सह वर्चसा। दीर्घाऽऽयु रस्या यः पति स्स एतु शरदश्शतम्।।

卐 विश्वा उत त्वया वय न्धारा उदन्या इव। अति गाहेमहि द्विषः।।

卐 आतिष्ठेम मश्मानम्[5]❃।।

卐 अर्यमणन्नु देव ङ्कन्या अग्नि मयक्षत। स इमान्देवो अध्वरः प्रेतो मुञ्चाति नामुत स्सुबद्धा ममुतस्करत्।।

卐 तुभ्यमग्ने पर्यवह[6]❃ 卐ः पत्नी मग्नि रदा[7]❃ 卐 द्विश्वा उत त्वया वय[8]❃ 卐 मातिष्ठेम मश्मानम्[9]❃।

卐 त्वमर्यमा भवसि यत्कनीना न्नाम स्वधाव थ्स्वर्यं बिभर्षि। अञ्जन्ति वृक्षꣳ सुधित न्न गोभि र्यद्दम्पती समनसा कृणोषि।।

卐 तुभ्यमग्ने पर्यवह[10]❃ 卐ः पत्नी मग्नि रदा[11]❃ 卐 द्विश्वा उत त्वया वयम्[12]❃।

1
2
3
4
5
6
7
8
9
10
11
12

卐 प्र त्वा मुञ्चामि वरुणस्य पाशा द्येन त्वाऽबध्ना थ्सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनन्ते सह पत्या करोमि।।

卐 इमँ विष्यामि वरुणस्य पाशँ यमबध्नीत सविता सुशेवः। धातुश्च योनौ सुकृतस्य लोकेऽरिष्टा न्त्वा सह पत्या कृणोमि।।

卐 अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्व मया असि। अयसा मनसा धृतोऽयसा हव्य मूहिषेऽयानो धेहि भेषजम्।। 5।। (द्विष स्सुशेव स्त्रीणि च। 5।)

☸❀ 卐 सत्येनोत्तभिता भूमि स्सूर्येणोत्तभिता द्यौः। ऋतेनाऽऽदित्या स्तिष्ठन्ति दिवि सोमो अधिश्रितः।।

卐 युञ्जन्ति ब्रध्नँ[1] ❀ 卐 योगे योगे[2] ❀।

卐 सुकिꣳशुकꣳ शल्मलिँ विश्वरूपꣳ हिरण्यवर्णꣳ सुवृतꣳ सुचक्रम्। आ रोह वध्वमृतस्य लोकꣳ स्योनं पत्ये वहतु ङ्कृणुष्व।।

卐 उदुत्तर मारोहन्ती व्यस्यन्ती पृतन्यतः। मूर्धानं पत्यु रारोह प्रजया च विराड्भव।।

卐 सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्रुवां भव। ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु।।

卐 स्नुषाणाꣳ श्वशुराणां प्रजायाश्च धनस्य च। पतीनाञ्च देवृणाञ्च सजातानाँ विराड्भव।।

卐 नीललोहिते भवतः कृत्या सक्ति व्यज्यते। एधन्तेऽस्या ज्ञातयः पति र्बन्धेषु बध्यते।।

卐 ये वध्व श्चन्द्रँ वहतुँ यक्ष्मा यन्ति जनाꣳ अनु। पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः।।

卐 मा विद न्परिपन्थिनो य आसीदन्ति दम्पती। सुगेभि र्दुर्ग मतीता मपद्रा न्त्वरातयः।।

卐 सुगं पन्थान मा रुक्ष मरिष्टꣳ स्वस्तिवाहनम्। यस्मिन्वीरो न रिष्य त्यन्येषाँ विन्दते वसु।। 6। (धनस्य च नव च। 6।)

☸❀ 卐 ता मन्दसाना मनुषो दुरोण आ धत्तꣳ रयि न्दशवीरँ वचस्यवे। कृत न्तीर्थꣳ सुप्रपाणꣳ शुभस्पती स्थाणुं पथेष्ठा मप दुर्मतिꣳ हतम्।।

卐 अयन्नो मह्याः पारꣳ स्वस्ति नेष द्वनस्पतिः। सीरा न स्सुतरा भव दीर्घायुत्वाय वर्चसे।।

卐 अस्य पारे निरृतस्य जीवा ज्योति रशीमहि। मह्या इन्द्र स्वस्तये।

卐 यदृते चिदभिश्रिषः पुरा जर्तृभ्य आतृदः। सन्धाता सन्धिं मघवा पुरोवसु र्निष्कर्ता विहृतं पुनः।।

Sri Sachidananda Avadhoota Datta Peetham

---

1

2

卐 इडामग्न[1]❈ 卐इमं मे वरुण[2]❈ 卐 तत्त्वा यामि[3]❈ 卐 त्वन्नो अग्ने[4]❈卐 स त्वन्नो अग्ने[5]❈ त्वमग्ने अयासि[6]❈ ।

卐 ये गन्धर्वा अप्सरसश्च देवी रेषु वृक्षेषु वानस्पत्ये ष्वासते। शिवास्ते अस्यै वध्वै भवन्तु मा हिꣳसिषु र्वहतु मूह्यमानाम्।।

卐 या ओषधयो या नद्यो यानि धन्वानि ये वना। ते त्वा वधु प्रजावतीं प्र त्वे मुञ्चन्त्वꣳहसः।।

卐 सङ्काशयामि वहतुं ब्रह्मणा गृहै रघोरेण चक्षुषा मैत्रेण। पर्याणद्धं विश्वरूपं यदस्याꣳ स्योनं पतिभ्य स्सविता कृणोतु तत्।।

卐 आ वां मग'2'न्थ्सुमति र्वाजिनी वसू न्यश्विना हृथ्सु कामाꣳ अयꣳसत। अभूत ङ्गोपा मिथुना शुभस्पती प्रिया अर्यम्णो दुर्याꣳ अशीमहि।।

卐 अयन्नो देवस्सविता बृहस्पति रिन्द्राग्नी मित्रावरुणा स्वस्तये। त्वष्टा विष्णुः प्रजया सꣳरराणः काम आयात ङ्कामाय त्वा विमुञ्चतु।। 7।।(आसते नव च। 7।)

卐 शर्म वर्मेद माहरास्यै नार्या उपस्तिरे। सिनीवालि प्र जायता मियं भगस्य सुमता असत्।।

卐 गृहा न्भद्रा न्थ्सुमनसः प्रपद्येऽवीरघ्नी वीरवत स्सुवीरान्। इराँ वहतो घृत मुक्षमाणा स्तेष्वहꣳ सुमना स्सँ विशामि।।

卐 आग न्गोष्ठं महिषी गोभि रश्वै रायुष्मत्पत्नी प्रजया स्वर्वित्। बह्वीं प्रजा ञ्जनयन्ती सुरत्नेम मग्निꣳ शतहिमा स्सपर्यात्।।

卐 अय मग्नि र्गृहपति स्सुसꣳस त्पुष्टिवर्धनः। यथा भगस्याभ्या न्ददद्रयिं पुष्टि मथो प्रजाम्।।

卐 प्रजाया आभ्यां प्रजापत इन्द्राग्नी शर्म यच्छतम्। यथैनयो र्न प्रमीयाता उभयो र्जीवतोः प्रजाः।।

卐 तेन भूतेन हविषाऽय मा प्यायतां पुनः। जायाँ या मस्मा आवाक्षु स्ताꣳ रसेनाभि वर्धताम्।।

卐 अभि वर्धतां पयसाऽभि राष्ट्रेण वर्धताम्। रय्या सहस्रपोषसेमौ स्ता मनपेक्षितौ।।

卐 इहैव स्तं मा वि योष्टँ विश्व मायु र्व्यश्नुतम्। मह्या इन्द्र स्स्वस्तये।।

1

2

3

4

5

6

卐 ध्रुवैधि पोष्या मयि मह्यन्त्वाऽदा द्बृहस्पतिः। मया पत्या प्रजावती सञ्जीव शरद श्शतम्।।
卐 त्वष्टा जाया मजनय त्त्वष्टाऽस्यै त्वां पतिम्। त्वष्टा सहस्र मायूꣳषि दीर्घ मायुः कृणोतु वाम्।।
卐इमं मे वरुण[1]❃ 卐 तत्त्वा यामि[2]❃ 卐 त्वन्नो अग्ने[3]❃卐 स त्वन्नो अग्ने[4]❃ त्वमग्ने अयासि[5]❃ ।। 8।। (जीवतोः प्रजा वामेकञ्च। 8।)
❀ 卐 इह गावः प्र जायध्व मिहाश्वा इह पूरुषाः। इहो सहस्रदक्षिणो राय स्पोषो निषीदतु।।
卐 सोमेनाऽऽदित्या बलिन स्सोमेन पृथिवी दृढा। अथो नक्षत्राणा मेषा मुपस्थे सोम आधितः।।
卐 प्रस्वस्स्थः प्रेयं प्रजया भुवने शोचेष्ट।
卐 इह प्रियं प्रजया ते समृध्यता मस्मि न्गृहे गार्हपत्याय जागृहि। एना पत्या तन्वꣳ सꣳसृजस्वाथा जीव्री विदथ मा वदासि।।
卐 सुमङ्गली रियँ वधू रिमाꣳ समेत पश्यत। सौभाग्य मस्यै दत्त्वायाथास्तँ विपरेतन।।
卐 ध्रुवक्षिति र्ध्रुवयोनि र्ध्रुवमसि ध्रुवत स्स्थितम्। त्वन्नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः।।
卐 सप्तर्षयः प्रथमा ङ्कृत्तिकाना मरुन्धतीँ यद्ध्रुवताꣳ ह निन्युः। षट्कृत्तिका मुख्ययोगँ वहन्ती यमस्माक मेधत्वष्टमी।।
卐 सदसस्पति मद्भुतं प्रिय मिन्द्रस्य काम्यम्। सनिं मेधा मयासिषम्।।
卐 उद्दीप्यस्व जातवेदोऽपघ्न न्निरृतिं मम। पशूꣳश्च मह्य मावह जीवनञ्च दिशो दिश।।
卐 मा नो हिꣳसी ज्जातवेदो गामश्वं पुरुष ञ्जगत्। अबिभ्र दग्न आ गहि श्रिया मा परिपातय।। 9।। (ध्रुवत स्स्थितन्नव च। 9।)
❀ 卐 उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा। अन्यामिच्छ प्रफर्व्यꣳ सञ्जायां पत्या सृज।।
卐 उदीर्ष्वातः पतिवति ह्येषा विश्वावसु न्नमसा गीर्भि रीट्टे। अन्या मिच्छ पितृषदँ व्यक्ताꣳ स ते भागो जनुषा तस्य विद्धि।।
卐 अग्ने प्रायश्चित्ते- त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्र पद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नी मस्यै ताङ्कृणोमि स्वाहा।।

1
2
3
4
5

卐 वायो प्रायश्चित्त-- 卐 आदित्य प्रायश्चित्ते-- 卐 प्रजापते प्रायश्चित्ते- त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम॰ प्र पद्ये याऽस्यां पतिघ्नी तनू॰ प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नी मस्यैता ङ्कृणोमि स्वाहा।।

卐 प्रसव श्चोपयामश्च काट श्चार्णवश्च धर्णसिश्च द्रविणञ्च भग श्चान्तरिक्षञ्च सिन्धुश्च समुद्रश्च सरस्वा॰श्च विश्वव्यचाश्च ते य न्द्विष्मो यश्च नो द्वेष्टि तमेषा ञ्जम्भे दध्म स्स्वाहा।।

卐 मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेष श्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्च ते य न्द्विष्मो यश्च नो द्वेष्टि तमेषा ञ्जम्भे दध्म स्स्वाहा।।

卐 चित्तञ्च चित्ति श्चाऽऽकूतञ्चाऽऽकूति श्चाधीतञ्चाधीतिश्च विज्ञातञ्च विज्ञानञ्च नाम च क्रतुश्च दर्शश्च पूर्णमासश्च ते य न्द्विष्मो यश्च नो द्वेष्टि तमेषा ञ्जम्भे दध्म स्स्वाहा।

卐 भूस्स्वाहा 卐 भुवस्स्वाहा 卐 सुवस्स्वा卐 हो॰ स्वाहा।। 10।। (उदीर्ष्वातो दश। 10।)

卐 अपश्यन्त्वा मनसा चेकितान न्तपसो जात न्तपसो विभूतम्। इह प्रजा मिह रयि॰ रराण॰ प्रजायस्व प्रजया पुत्रकाम।।

卐 अपश्यन्त्वा मनसा दीध्याना॰ स्वाया न्तनू॰ ऋत्विये नाथमानाम्। उप मा मुच्चा युवति र्बभूया॰ प्र जायस्व प्रजया पुत्रकामे।।

卐 समञ्जन्तु विश्वे देवा स्समापो हृदयानि नौ। सं मातरिश्वा स न्धाता समुदेष्ट्री दिदेष्टु नौ।।

卐 प्रजापते तन्वं मे जुषस्व त्वष्ट र्देवेभि स्सह साम इन्द्र। विश्वै र्देवै रातिभि स्स॰रराण॰ पु॰सां बहूनां मातर स्स्याम।।

卐 आ न॰ प्रजा ञ्जनयतु प्रजापति राजरसाय समन त्त्वर्यमा। अदुर्मङ्गली॰ पतिलोक माविश शन्नो भव द्विपदे श ञ्चतुष्पदे।।

卐 तां पूषञ्छिवतमा मेरयस्व यस्यां बीजं मनुष्या वपन्ति। या न ऊरू उशती विस्रयातै यस्या मुशन्त॰ प्रहरेम शेफम्।। 11।। (श ञ्चतुष्पदे द्वे च। 11।)

## वै।का। 1गर्भाधान संस्कार: 20(त्रयोऽनुवाका: 3)

卐 आ रोहोरु मुपबर्हस्व बाहुं परिष्वजस्व जाया॰ सुमनस्यमानः। तस्यां पुष्यतं मिथुनौ सयोनी बह्वीं प्रजा ञ्जनयन्तौ सरेतसा।।

卐 आर्द्रयाऽरण्या यत्रामन्थ त्पुरुषं पुरुषेण शक्रः। तदेतौ मिथुनौ सयोनी प्रजयाऽमृतेनेह गच्छतम्।।

卐 अह ङ्गर्भ मदधा मोषधीष्वहँ विश्वेषु भुवनेष्वन्तः। अहं प्रजा अजनयं पितृणा मह ञ्जनिभ्यो अवरीषु पुत्रान्।।

卐 पुत्रिणेमा कुमारिणा विश्व मायु र्व्यश्नुतम्। उभा हिरण्यपेशसा वीतिहोत्रा कृतद्वसू।।

卐 दशस्यन्त्वा ऽमृताय क९ शमूधो रोम श९ हथो देवेषु कृणुतो दुवः।। 12।। (आ रोह नव। 12।)

卐 विष्णु र्योनि ङ्कल्पयतु त्वष्टा रूपाणि पि९शतु। आसिञ्चतु प्रजापति र्धाता गर्भ न्दधातु ते।।

卐 गर्भ न्धेहि सिनीवालि गर्भ न्धेहि सरस्वति। गर्भन्ते अश्विनौ देवावाधत्तां पुष्करस्रजा।।

卐 हिरण्ययी अरणी यन्निर्मन्थतो अश्विना। तन्ते गर्भ९ हवामहे दशमे मासि सूतवे।।

卐 यथेयं पृथिवी मही तिष्ठन्ती गर्भ मादधे। एव न्त्वङ्गर्भ माधथ्स्व दशमे मासि सूतवे।।

卐 यथा पृथिव्यग्निगर्भा द्यौ र्यथेन्द्रेण गर्भिणी। वायु र्यथा दिशा ङ्गर्भ एव ङ्गर्भ न्दधामि ते।।

卐 विष्णो श्श्रेष्ठेन रूपेणास्या न्नार्या ङ्गवीन्याम्। पुमा९स ङ्गर्भ माधेहि दशमे मासि सूतवे।।

卐 नेजमेष परापत स पुत्रः पुन रापत। अस्यै मे पुत्रकामायै गर्भ माधेहि यः पुमान्।।

卐 व्यस्य योनिं प्रति रेतो गृहाण पुमा न्पुत्रो धीयता ङ्गर्भो अन्तः। तं माता दशमासो बिभर्तु स जायताँ वीरतम स्स्वानाम्।।

卐 आ ते गर्भो योनि मेतु पुमा न्बाण इवेषुधिम्। आ वीरो जायतां पुत्रस्ते दशमास्यः।। 13।। (गर्भ न्दधामि तेऽष्टौ च। 13।)

卐 करोमि ते प्राजापत्य मा गर्भो योनि मेतु ते। अनूनः पूर्णो जायता मश्लोणोऽपिशाचधीतः।।

卐 पुमा९स्ते पुत्रो नारि तं पुमा ननु जायताम्। तानि भद्राणि बीजा न्यृषभा जनयन्तु नौ।।

卐 यानि भद्राणि बीजा न्यृषभा जनयन्ति नः। तैस्त्वं पुत्रान् विन्दस्व सा प्रसू र्धेनुका भव।।

卐 काम स्समृध्यतां मह्य मपराजित मेव मे। यङ्काम ङ्कामये देव तं मे वायो समर्धय।।

卐 अनुहवं परिहवं परीवादं परिक्षपम्। दुस्स्वप्न न्दुरुदित न्तद्विषद्भ्यो दिशाम्यहम्।।

卐 अनुहूतं परिहूत९ शकुने र्यदशाकुनम्। मृगस्य सृत मक्ष्णया तद्विषद्भ्यो दिशाम्यहम्।।

卐 आरात्ते अग्नि रस्त्वारा त्परशु रस्तु ते। निवाते त्वाऽभि वर्षतु स्वस्ति तेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पते।।

卐 नम श्शकृथ्सदे रुद्राय नमो रुद्राय शकृथ्सदे। गोष्ठमसि नमस्ते अस्तु मा मा हि९सी 卐 स्सिगसि नसि वज्रो नमस्ते अस्तु मा मा हि९सीः।।

卐 उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शꣳससि। स्वस्ति न श्शकुने अस्तु प्रति न स्सुमना भव।। 14।। (अहमष्टौ च। 14।)

## वै।का।एको)भाग्यसूक्तम् 20ऽनुवाक: 1)

卐 प्रात रग्निं प्रात रिन्द्रꣳ हवामहे प्रात र्मित्रावरुणा प्रात रश्विना। प्रात र्भगं पूषणं ब्रह्मणस्पतिं प्रात स्सोम मुत रुद्रꣳ हुवेम।।

卐 प्रातर्जितं भग मुग्रꣳ हुवेम वयं पुत्र मदितेर्यो विधर्ता। आध्र श्चिद्यं मन्यमान स्तुरश्चि द्राजा चिद्यं भगं भक्षीत्याह।।

卐 भग प्रणेत र्भग सत्यराधो भगेमा न्धिय मुदव ददन्नः। भग प्रणो जनय गोभि रश्वै र्भग प्र नृभि र्नृवन्त स्स्याम।।

卐 उतेदानीं भगवन्त स्स्यामोत प्र पित्व उत मध्ये अह्नाम्। उतोदिता मघव '2'न्थ्सूर्यस्य वय न्देवानाꣳ सुमतौ स्याम।।

卐 भग एव भगवाꣳ अस्तु देवा स्तेन वयं भगवन्त स्स्याम। तन्त्वा भग सर्व इज्जोहवीमि स नो भग पुरएता भवेह।।

卐 समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय। अर्वाचीनँ वसुविदं भगन्नो रथ मिवाश्वा वाजिन आ वहन्तु।।

卐 अश्वावती र्गोमतीर्न उषासो वीरवती स्सद मुच्छन्तु भद्राः। घृत न्दुहाना विश्वतꣷ प्रपीना यूयं पात स्वस्तिभि स्सदा नः।। 15।। (भवेह चत्वारि च। 15।)

## वै।का।2द्वावनुवाकौ )सपत्नी बाध प्रशमन मन्त्रा: 20)

卐 इमां खनाम्योषधीँ वीरुधं बलवत्तमाम्। यया सपत्नीं बाधते यया सँविन्दते पतिम्।।

卐 उत्तानपर्णे सुभगे सहमाने सहस्वति। सपत्नीं मे परा धम पतिं मे केवल ङ्कृधि।।

卐 उत्तराऽह मुत्तर उत्तरे दुत्तराभ्यः। अथा सपत्नी या ममाधरा साऽधराभ्यः।।

卐 न ह्यस्यै नाम गृभ्णामि नो अस्मि न्रमते जने। परामेव परावतꣳ सपत्नी न्नाशयामसि।।

卐 अहमस्मि सहमानाऽथ त्वमसि सासहिः। उभे सहस्वती भूत्वा सपत्नीं मे सहावहै।।

卐 उप तेऽधाꣳ सहमाना मभि त्वाऽधाꣳ सहीयसा। मामनु प्र ते मनो वथ्स ङ्गौरिव धावतु पथा वारिव धावतु।। 16।। (सहावहै द्वे च। 16।)

卐 उदसौ सूर्यो अगा दुदयं मामको भगः। अह न्तद्विद्वलापति मभ्यसाक्षि विषासहिः।।
卐 अह ङ्केतु रहं मूर्धाऽह मुग्रा विवाचनी। ममेदनु क्रतुं पति स्सेहानाया उवाचरेत्।।
卐 मम पुत्रा श्शत्रुहणोऽथो मे दुहिता विराट्। उताऽह मस्मि सञ्जया पत्यु में श्लोक उत्तमः।।
卐 येनेन्द्रो हविषा कृत्यभव द्विव्युत्तमः। अह न्तदक्रि देवा असपत्ना किलाभवम्।।
卐 असपत्ना सपत्निघ्नी जयन्त्यभिभूवरीः। आविथ्सि सर्वासा॰ राधो वर्चो अस्थेयसा मिव।।
卐 समजैष मिमा अह॰ सपत्नी रभिभूवरीः। यथाऽहमस्य वीरस्य विराजामि धनस्य च।। 17।।
(अस्थेयसामिव द्वे च। 17।)

## वै।का।एको)यक्ष्मघ्न सूक्तम् 20ऽनुवाकः 1)

卐 अक्षीभ्यान्ते नासिकाभ्या ङ्कर्णाभ्या ञ्चुबुका दधि। यक्षम॰ शीर्षण्यं मस्तिष्का जिह्वाया वि वृहामि ते।।
卐 ग्रीवाभ्यस्त उष्णिहाभ्य॰ कीकसाभ्यो ऽनूक्यात्। यक्ष्म न्दोषण्य म॰साभ्यां बाहुभ्यां वि वृहामि ते।।
卐 आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर् हृदयादधि। यक्ष्मं मतस्नाभ्याँ यक्न॰ प्लाशिभ्यो वि वृहामि ते।।
卐 ऊरुभ्यान्ते ऽष्ठीवद्भ्या ञ्जङ्घाभ्यां प्रपदाभ्याम्। यक्ष्मङ् श्रोणीभ्यां भासदा द्भ॰ससो वि वृहामि ते।।
卐 मेहना द्वलङ्करणा ल्लोमभ्यस्ते नखेभ्यः। यक्ष्म॰ सर्वस्मा दात्मनस्त मिमँ वि वृहामि ते।।
卐 अङ्गादङ्गा ल्लोम्नोलोम्नो जातं पर्वणिपर्वणि। यक्ष्म॰ सर्वस्मा दात्मनस्त मिमँ वि वृहामि ते।।
卐 परा देहि शाबल्यं ब्रह्मभ्यो वि भजा वसु। कृत्यैषा पद्वती भूत्वा जाया विशते पतिम्।।
卐 अश्लीला तनू र्भवति रुशती पापयाऽमुया। पति र्यद्वध्वै वाससा स्वमङ्ग मभिधित्सति।।
卐 क्रूर मेत त्कटुक मेत दपाष्ठव द्विषव न्नैतदत्तवे। सूर्याँ य॰ प्रत्यक्षँ विद्याथ्स एत त्प्रति गृह्णीयात्।।
卐 आशसनँ विशसन मथो अधि विचर्तनम्। सूर्याया॰ पश्य रूपाणि तानि ब्रह्मोत श॰सति।। 18।।
(इमँ वि वृहामि ते श॰सति। 18। अक्षीभ्या ङ्ग्रीवाभ्य आन्त्रेभ्य ऊरुभ्यां मेहना दङ्गादङ्गा त्परा देहि सप्त।)

(प्रसुग्मन्ताष्टादश- हिरण्यवर्णा॰ पञ्चदश- सोम॰ प्रथम ष्षोडश- सोमाय जनिविदेऽष्टादशा- ऽऽतिष्ठेम न्त्रयोवि॰शति- स्सत्येन ता मन्दसानैकान्न वि॰शति रेकान्न वि॰शति- श्शर्म वर्मैकवि॰शति- रिह गाव एकान्न वि॰शति- रुदीर्ष्वातो दशा-ऽपश्यन्त्वा द्वादशा-ऽऽरोहोरु न्नव- विष्णु र्योनि ङ्करोमि

तेऽष्टादशाऽष्टादश- प्रात रग्नि श्चतुर्द-शेमा ङ्वना म्युदसौ सूर्यो द्वादश द्वाद-शाऽक्षीभ्यान्ते विꣳशति-रष्टादश। 18। प्रसुग्मन्ताऽपश्य न्त्वाऽष्टादश। 18। प्रसुग्मन्ता तानि ब्रह्मोत शꣳसति।)

## एकाग्निकाण्डे द्वितीयः प्रपाठकः

### वै।का। 1उपनयन संस्कारः 21(षडनुवाकाः 6)

उष्णेन वायवुदके नेह्यदितिः केशान् वपतु।।

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे। ज्योक्च सूर्य न्दृशे।।

येनावप थ्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेद मस्याऽऽयुष्मा न्जरदष्टि र्यथाऽस दय मसौ।।

येन पूषा बृहस्पते रग्ने रिन्द्रस्य चाऽऽयुषे ऽवपत्। तेनास्याऽऽयुषे वप सौश्लोक्याय स्वस्तये।।

येन भूय श्चरा त्यय ञ्ज्योक्च पश्याति सूर्यम्। तेनास्याऽऽयुषे वप सौश्लोक्याय स्वस्तये।।

येन पूषा बृहस्पते रग्ने रिन्द्रस्य चाऽऽयुषे ऽवपत्। तेन ते वपाम्यसा वायुषा वर्चसा यथा ज्योक्सुमना असाः।।

यत्क्षुरेण मर्चयता सुपेशसा वप्त्रा वपसि केशान्। शुन्धि शिरो माऽस्याऽऽयुः प्र मोषीः।।

उप्त्वाय केशान् वरुणस्य राज्ञो बृहस्पति स्सविता सोमो अग्निः। तेभ्यो निधानं बहुधा ऽन्वविन्द न्नन्तरा द्यावापृथिवी अप स्सुवः।। 1।।(आयुषेऽवपत्पञ्च च। 1।)

आयुर्दा देव जरस ङ्गृणानो घृतप्रतीको घृतपृष्ठो अग्ने। घृतं पिब न्नमृत ञ्चारु गव्यं पितेव पुत्र ञ्जरसे नयेमम्।।

आतिष्ठेम मश्मान मश्मेव त्वꣳ स्थिरो भव। अभि तिष्ठ पृतन्यत स्सहस्व पृतनायतः।।

रेवतीस्त्वा व्यक्ष्ण न्कृत्तिका श्चाकृन्तꣳ स्त्वा। धियोऽवय न्नवग्ना अवृञ्ज ‘2’न्थ्सहस्र मन्ताꣳ अभितो अयच्छन्न्।।

देवी र्देवाय परिधी सवित्रे महत्तदासा मभव न्महित्वनम्।।

या अकृन्त न्नवयन् या अतन्वत याश्च देवी रन्ता नभितो ऽददन्त। तास्त्वा देवी र्जरसे सँव्यय न्त्वायुष्मानिदं परि धथ्स्व वासः।।

卐 परि धत्त धत्त वाससैनꣳ शताऽऽयुष ङ्कृणुत दीर्घमायुः। बृहस्पतिः प्रायच्छ द्वास एतथ्सोमाय राज्ञे परिधातवा उ।।

卐 जरा ङ्गच्छासि परिधथ्स्व वासो भवा कृष्टीना मभिशस्तिपावा। शतञ्च जीव शरद स्सुवर्चा रायश्च पोष मुप सँ व्ययस्व।।

卐 परीदँ वासो अधिधा स्स्वस्तयेऽभू रापीना मभिशस्तिपावा। शतञ्च जीव शरदः पुरूची र्वसूनि चार्यो विभजासि जीवन्न्।।

卐 इय न्दुरुक्ता त्परिबाधमाना शर्म वरूथं पुनती न आऽगात्। प्राणापानाभ्यां बल माभरन्ती प्रिया देवानाꣳ सुभगा मेखलेयम्।।

卐 ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्ष स्सहमाना अरातीः। सा न स्समन्त मनु परीहि भद्रया भर्तारस्ते मेखले मा रिषाम।।

卐 मित्रस्य चक्षु र्धरुणं बलीय स्तेजो यशस्वि स्थविरꣳ समिद्धम्। अनाहनस्यँ वसन ञ्जरिष्णु परीदँ वाज्यजिन न्दधेऽहम्।। 2।। (दीर्घमायु स्समिद्ध मेकञ्च। 2।)

卐 आगन्त्रा समगन्महि प्र सु मृत्युँ युयोतन। अरिष्टा स्सञ्चरेमहि स्वस्ति चरता दिह स्वस्त्या गृहेभ्यः।।

卐 समुद्रा दूर्मि र्मधुमाꣳ उदार दुपाꣳशुना सममृतत्व मश्याम्। इमे नु ते रश्मय स्सूर्यस्य येभि स्सपित्वं पितरो न आयन्न्।।

卐 अग्निष्टे हस्त मग्रभी 卐 थ्सोमस्ते हस्त मग्रभी 卐 थ्सविता ते हस्त मग्रभी 卐 थ्सरस्वती ते हस्त मग्रभी 卐 त्पूषा ते हस्त मग्रभी 卐 दर्यमा ते हस्त मग्रभी 卐 दꣳशुस्ते हस्त मग्रभी 卐 द्भगस्ते हस्त मग्रभी 卐 न्मित्र स्ते हस्त मग्रभी 卐 न्मित्र स्त्वमसि धर्मणाऽग्नि राचार्य स्तव।

卐 अग्नये त्वा परिददाम्यसौ 卐 सोमाय त्वा परि ददाम्यसौ 卐 सवित्रे त्वा परि ददाम्यसौ 卐 सरस्वत्यै त्वा परि ददाम्यसौ 卐 मृत्यवे त्वा परि ददाम्यसौ 卐 यमाय त्वा परि ददाम्यसौ 卐 गदाय त्वा परि ददाम्यसा 卐 वन्तकाय त्वा परि ददाम्यसा 卐 वद्भ्यस्त्वा परि ददाम्यसा 卐 वोषधीभ्यस्त्वा परि ददाम्यसौ 卐 पृथिव्यै त्वा सवैश्वानरायै परि ददाम्यसौ।।

卐 देवस्य त्वा सवितुः प्रसव उपनयेऽसौ।।

卐 सुप्रजाः प्रजया भूया स्सुवीरो वीरै स्सुवर्चा वर्चसा सुपोषः पोषैः।।

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore •

卐 ब्रह्मचर्य मा॒ऽगा मुप मा नयस्व देवेन सवित्रा प्रसूतः।।

卐 को नामा॑ऽस्यसौ नामा॑ऽस्मि कस्य ब्रह्मचार्यस्यसौ प्राणस्य ब्रह्मचार्य- 卐 स्म्यसा वेष ते देवसूर्य ब्रह्मचारी तङ्गोपाय स मामृतैष ते सूर्यपुत्र स्स दीर्घा॒ऽयु स्समामृत। या॒ स्वस्ति मग्नि र्वायु स्सूर्य श्चन्द्रमा आपोऽनु सञ्चरन्ति ता॒ स्वस्ति मनु सञ्चरासा वध्वना मध्वपते श्रेष्ठस्याध्वनः पार मशीय।। 3।। (आगन्त्रा दश। 3। अग्नि स्सोम स्सविता सरस्वती पूषाऽर्यमाऽ॒शुर्भगो मित्रो नव। अग्नये सोमाय सवित्रे सरस्वत्यै मृत्यवे यमाय गदायान्तकायाद्भ्य ओषधीभ्यः पृथिव्यै सवैश्वनराया एकादश।)

卐 योगेयोगे तवस्तर[1]❄ 卐 मिम मग्न आयुषे वर्चसे कृधी[2]卐 ति❄ द्वे।।

卐 शत मिन्नु शरदो अन्ति देवा यत्रा न श्चक्रा जरस न्तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषता॒ऽयु र्गन्तोः।।

卐 अग्निष्ट आयुः प्रतरा न्दधा त्वग्निष्टे पुष्टिं प्रतरा ङ्कृणोतु। इन्द्रो मरुद्भिर् ऋतुधा कृणो त्वादित्यै स्ते वसुभि रा दधातु।।

卐 मेधां मह्य मङ्गिरसो मेधा॒ सप्तर्षयो ददुः। मेधां मह्यं प्रजापति र्मेधा मग्नि र्ददातु मे।।

卐 अप्सरासु च या मेधा गन्धर्वेषु च यद्यशः। दैवी या मानुषी मेधा सा मा मा विशता दिह।।

卐इमं मे वरुण[3]❄ 卐 तत्त्वा यामि[4]❄ 卐 त्वन्नो अग्ने[5]❄卐 स त्वन्नो अग्ने[6]❄ त्वमग्ने अयासि[7]❄ ।

卐 राष्ट्रभृद स्याचार्यासन्दी मा त्वद्योषम्।

卐 तथ्सवितुर्वरेण्य[8]❄ - मित्येषा।

卐 अवृध मसौ सौम्य प्राण स्वं मे गोपाय। 卐 ब्रह्मण आणी स्थः।। 4।। (त्वमग्ने अयाऽसि चत्वारि च। 4।)

卐 सुश्रव स्सुश्रवसं मा कुरु यथा त्व॒ सुश्रव स्सुश्रवा अस्येव मह॒ सुश्रव स्सुश्रवा भूयासँ यथा त्व॒ सुश्रव स्सुश्रवो देवाना न्निधिगोपोऽस्येव महं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासम्।।

---

1

2

3

4

5

6

8

卐 स्मृतञ्च मेऽस्मृतञ्च मे तन्म उभयँ व्रत卐 न्निन्दा च मेऽनिन्दा च मे तन्म उभयँ व्रतꣳ 卐 श्रद्धा च मेऽश्रद्धा च मे तन्म उभयँ व्रतँ 卐 विद्या च मेऽविद्या च मे तन्म उभयँ व्रतꣳ 卐 श्रुतञ्च मेऽश्रुतञ्च मे तन्म उभयँ व्रतꣳ 卐 सत्यञ्च मेऽनृतञ्च मे तन्म उभयँ व्रत卐 न्तपश्च मेऽतपश्च मे तन्म उभयँ व्रतँ 卐 व्रतञ्च मेऽ व्रतञ्च मे तन्म उभयँ व्रतँ 卐 यद्ब्राह्मणानां ब्रह्मणि व्रतँ यदग्ने स्सेन्द्रस्य सप्रजापतिकस्य सदेवस्य सदेवराजस्य समनुष्यस्य समनुष्यराजस्य सपितृकस्य सपितृराजस्य सगन्धर्वाप्सरस्कस्य। यन्म आत्मन आत्मनि व्रत न्तेनाहꣳ सर्वव्रतो भूयासम्।।

卐 उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्था ममृताꣳ अनु।

卐 तच्चक्षु र्देवहितं पुरस्ता च्छुक्र मुच्चरत्। 卐 पश्येम शरद श्शत 卐 ञ्जीवेम शरद श्शत 卐 न्नन्दाम शरद श्शतं 卐 मोदाम शरद श्शतं 卐 भवाम शरद श्शतꣳ 卐 शृणवाम शरद श्शतं 卐 प्र ब्रवाम शरद श्शत 卐 मजीतास्स्याम शरद श्शत 卐 ञ्ज्योक्च सूर्य न्दृशे।।

卐 यस्मि न्भूतञ्च भव्यञ्च सर्वे लोका स्समाहिताः। तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णाम्यसौ।। 5।। (सुश्रव स्सुश्रवसमष्टौ। 5। स्मृत न्निन्दा श्रद्धा विद्या श्रुतꣳ सत्य न्तपो व्रतँ यद्ब्राह्मणाना न्नव।)

卐 परित्वाऽग्ने परिमृजा म्यायुषा च धनेन च। सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरै स्सुवर्चा वर्चसा सुपोषः पोषै स्सुगृहो गृहै स्सुपतिः पत्या सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः।।

卐 अग्नये समिध माऽहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यस एवं मामायुषा वर्चसा सन्या मेधया प्रजया पशुभि र्ब्रह्मवर्चसे.नान्नाद्येन समेधय स्वाहा।।

卐 एधोऽस्येधिषीमहि स्वाहा। 卐 समिदसि समेधिषीमहि स्वाहा।

卐 तेजोऽसि तेजो मयि धेहि स्वाहा।

卐 अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आऽगम न्तं मा सꣳ सृज वर्चसा स्वाहा।

卐 सं माऽग्ने वर्चसा सृज प्रजया च धनेन च स्वाहा।

卐 विद्युन्मे अस्य देवा इन्द्रो विद्या थ्सहर्षिभि स्स्वाहा।

卐 अग्नये बृहते नाकाय स्वाहा। 卐 द्यावापृथिवीभ्याꣳ स्वाहा।

卐 एषा ते अग्ने समित्तया वर्धस्व चाऽऽप्यायस्व च तयाऽहँ वर्धमानो भूयास माप्यायमानश्च स्वाहा।

卐 यो माऽग्ने भागिनꣳ सन्त मथाभाग ञ्चिकीर्ष त्यभागमग्ने तङ्कुरु मामग्ने भागिन ङ्कुरु स्वाहा।

卐 समिध माधायाग्ने सर्वव्रतो भूयासꣳ स्वाहा।

卐 ब्रह्मचार्य卐स्यपोऽशान卐 कर्म कुरु 卐 मा सुषुप्थाः।

卐 भिक्षाचर्य ञ्चरा 卐ऽऽचार्याधीनो भव।

卐 यस्य ते प्रथमवास्यꣳ हराम स्तन्त्वा विश्वे अवन्तु देवाः। तन्त्वा भ्रातर स्सुवृधो वर्धमान मनु जायन्तां बहव स्सुजातम्।। 6।। (सहर्षिभि स्स्वाहा नव च। 6।)

## वै।का।22 स्नातकव्रत संस्कारः

卐 इमꣳ स्तोम मर्हते जातवेदसे रथमिव सं महेमा मनीषया। भद्रा हि नः प्रमति रस्य सꣳसद्यग्ने सख्ये मा रिषामा वय न्तव।।

卐 त्र्यायुष ञ्जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवाना न्त्र्यायुष न्तन्मे अस्तु त्र्यायुषम्।।

卐 शिवो नामासि स्वधिति स्ते पिता नमस्ते अस्तु मा मा हिꣳसीः।।

卐 उष्णेन वाय वुदके[1]❈ - नेत्येषः ।

卐 इदमह ममुष्या ऽऽमुष्यायणस्य पाप्मान मुपगूहा म्युत्तरोऽसौ द्विषद्भ्यः।

卐 आपो हिष्ठा मयोभुव[2]❈ इति तिस्रो (3) 卐 हिरण्यवर्णा श्शुचयः पावका[3]❈ इति तिस्रः (4)।।

卐 अन्नाद्याय व्यूहध्व न्दीर्घायु रह मन्नादो भूयासम्। सोमो राजा यमागमथ्स मे मुखं प्र वेक्ष्यति भगेन सह वर्चसा।।

卐 सोमस्य तनूरसि तनुवं मे पाहि स्वामा तनू राविश।।

卐 नमो ग्रहाय चाभिग्रहाय च 卐 नम श्शाकजञ्जभाभ्या 卐 न्नम स्ताभ्यो देवताभ्यो या अभिग्राहिणीः।।

卐 अप्सरस्सु यो गन्धो गन्धर्वेषु च यद्यशः। दैवो यो मानुषो गन्ध स्स मा गन्ध स्सुरभि र्जुषताम्।।

卐 इय मोषधे त्रायमाणा सहमाना सहस्वती। सा मा हिरण्यवर्चसं ब्रह्मवर्चसिनं मा करोतु।।

卐 अपाशोऽस्युरो मे मा सꣳशारी श्शिवो मोप तिष्ठस्व दीर्घायुत्वाय शतशारदाय। शतꣳ शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय।।

卐 रेवतीस्त्वा व्यक्ष्ण[1]❈ न्नित्येताः।। 7।। (सह वर्चसा नव च। 7।)

1

2

3

卐 आयुष्यँ वर्चस्य॒ सुवीर्य॒ रायस्पोष मौद्भिद्यम्। इद॒ हिरण्य ञ्जैत्र्याया ऽऽविशतां माम्।।
卐 उच्चैर्वादि पृतनाजि सत्रासाह न्धनञ्जयम्। सर्वा स्समृद्धीर् ऋद्धयो हिरण्येऽस्मि '2'न्थ्समाहिताः।।
卐 शुनमह॒ हिरण्यस्य पितुरिव नामाग्रभैषम्। तं मा हिरण्यवर्चसं पूरुषु प्रिय ङ्कुरु।।
卐 प्रियं मा देवेषु कुरु प्रियं मा ब्रह्मणे कुरु। प्रियँ विश्येषु शूद्रेषु प्रिय॒ राजसु मा कुरु।।
卐 या तिरश्ची निपद्यसेऽहँ विधरणी इति। तान्त्वा घृतस्य धारया यजे स॒राधनी महम्।।
卐 स॒राधन्यै देव्यै स्वाहा 卐 प्रसाधन्यै देव्यै स्वाहा।।
卐 सम्राजञ्च विराज ञ्चाभिश्री र्या च नो गृहे। लक्ष्मी राष्ट्रस्य या मुखे तया मा स॒ सृजामसि।।
卐 शुभिके शिर आ रोह शोभयन्ती मुखं मम। मुख॒ हि मम शोभय भूया॒सञ्च भगङ्कुरु।।
卐 यामाऽहर ज्जमदग्नि श्रद्धायै कामायान्यै। इमान्ता मपि नह्येऽहं भगेन सह वर्चसा।।
卐 यदाञ्जन न्त्रैककुद ञ्जात॒ हिमवत उपरि। तेन वामाञ्जे तेजसे वर्चसे भगाय च।। 8।। (स॒राधनी महन्नव च। 8।)
卐 मयि पर्वतपूरुषं 卐 मयि पर्वतवर्चसं 卐 मयि पर्वतभेषजं 卐 मयि पर्वताऽऽयुषम्।।
卐 यन्मे वर्चः परागत मात्मान मुपतिष्ठतु। इद न्तत्पुन राददे दीर्घायुत्वाय वर्चसे।।
卐 प्रतिष्ठे स्थो देवतानां मा मा सन्ताप्तम्।।
卐 प्रजापते श्शरणमसि ब्रह्मण श्छदि विश्वजनस्य छायाऽसि सर्वतो मा पाहि।।
卐 देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्या माददे द्विषतो वधायेन्द्रस्य वज्रोऽसि वार्त्रघ्न श्शर्म मे भव यत्पाप न्तन्निवारय।।
卐 देवी ष्षडुर्वी[2]❀ - रित्येषा ।
卐 राष्ट्रभृदस्याचार्याऽऽसन्दी मा त्वद्योष॒ 卐 राष्ट्रभृदसि सम्राडासन्दी मा त्वद्योष॒
卐 राष्ट्रभृदस्यधिपत्न्यासन्दी मा त्वद्योषम्।।
卐 आपः पादावनेजनी र्द्विषन्त न्नाशयन्तु मे। अस्मि न्कुले ब्रह्मवर्चस्यसानि।।
卐 मयि महो मयि यशो मयीन्द्रियँ वीर्यम्।।
卐 आ मागन् यशसा वर्चसा स॒ सृज पयसा तेजसा च। तं मा प्रियं प्रजानां ङ्कुर्वधिपतिं पशूनाम्।।
卐 विराजो दोहोऽसि विराजो दोह मशीय मम पद्याय वि राज।।

1

2

卐 समुद्रँ वः प्र हिणोमि स्वाँ योनि मपि गच्छत। अच्छिद्रः प्रजया भूयासं मा परा सेचि मत्पयः।। 9।। (असानि षट्च। 9।)

☸❀ 卐 त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि। तं मा प्रियं प्रजाना ङ्कुर्वधिपतिं पशूनाम्।।

卐 आमाग[1]❀ - न्नित्येषा।

卐 अमृतोपस्तरणमस्यमृतापिधान मसि।

卐 यन्मधुनो मधव्यं परम मन्नाद्यँ वीर्यम्। तेनाहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोऽन्नादो मधव्यो ऽसानि।।

卐 गौरस्यपहतपाप्माऽप पाप्मान ञ्जहि मम चामुष्य च।।

卐 अग्निः प्राश्नातु प्रथम स्स हि वेद यथा हविः। अनष्ट मस्माक ङ्कृण्व न्ब्राह्मणो ब्राह्मणेभ्यः।।

卐 यज्ञो वर्धताँ यज्ञस्य वृद्धि मनु वर्धापचिति रस्यपचितिं मा कुर्वपचितोऽहं मनुष्येषु भूयासम्।।

卐 गौ र्धेनुभव्या माता रुद्राणा न्दुहिता वसूना स्वसाऽऽदित्याना ममृतस्य नाभिः। प्रणु वोच ञ्चिकितुषे जनाय मा गा मनागा मदितिँ वधिष्ट।।

卐 पिबतूदक न्तृणान्यत्तु। 卐 ओमुथ्सृजत।

卐 भूतम्। 卐 सा विराट्। 卐 तन्मा क्षायि 卐 तस्य तेऽशीय 卐 तन्म ऊर्जन्धाः।

卐 ओङ्कल्पयत।। 10।। (भूयास मष्टौ च। 10।)

## वै।का।23 पुंसुवन संस्कारः 1

☸❀ 卐 धाता ददातु नो रयि[2]❀ - मिति चतस्रो 卐 यस्त्वा हृदा कीरिणेति[3]❀ चतस्रः।

卐 भूर्भुवस्सुवो 卐 राका महँ[4]❀ 卐 यास्ते राके[5]❀।

卐 यौगन्धरि रेव नो राजेति साल्वी रवादिषुः। विवृत्तचक्रा आसीना स्तीरेण यमुने तव।।

卐 सोम एव नो राजेत्याहु ब्राह्मणीः प्रजाः। विवृत्तचक्रा आसीना स्तीरेणासौ तव।।

卐 पुंसुवन मसि।

1

2

3

4

5

卐 आभिष्ट्वाऽह न्दशभि रभि मृशामि दशमास्याय सूतवे।

卐 यथैव सोमः पवते यथा समुद्र एजति। एवन्ते गर्भ एजतु सह जरायुणा निष्क्रम्य प्रति तिष्ठत्वायुषि ब्रह्मवर्चसि यशसि वीर्ये ऽन्नाद्ये।।

卐 दशमासा ञ्छशयानो धात्रा हि तथा कृतम्। ऐतु गर्भो अक्षतो जीवो जीवन्त्याः।।

卐 आयमनी र्यमयत गर्भ मापो देवी स्सरस्वतीः। ऐतु गर्भो अक्षतो जीवो जीवन्त्याः।।

卐 तिलदे ऽव पद्यस्व न मा॰स मसि नो दलम्। स्थवित्र्यव पद्यस्व न मा॰सेषु न स्नावसु न बद्धमसि मज्जसु।।

卐 निरैतु पृश्नि शेवल॰ शुने जराय्वत्तवे।

## वै।का।24 जातकर्म संस्कारः

卐 दिवस्परी[1]❀ त्येषोऽनुवाकः।

卐 अस्मि न्नह॰ सहस्रं पुष्या म्येधमान स्स्वे वशे।

卐 अङ्गादङ्गाथ्सं भवसि हृदया दधि जायसे। आत्मा वै पुत्र नामाऽसि स जीव शरद श्शतम्।। 11।।

(अन्नाद्ये जायस एकञ्च। 11।)

❀ 卐 अश्मा भव परशु र्भव हिरण्य मस्तृतं भव। पशूनान्त्वा हिङ्कारेणाभि जिघ्राम्यसौ।।

卐 मेधान्ते देव स्सविता मेधा न्देवी सरस्वती। मेधान्ते अश्विनौ देवा वाधत्तां पुष्करस्रजा।।

卐 त्वयि मेधां त्वयि प्रजा न्त्वय्यग्नि स्तेजो दधातु-

卐 त्वयि मेधा न्त्वयि प्रजा न्त्वयीन्द्र इन्द्रिय न्दधातु-

卐 त्वयि मेधान्त्वयि प्रजान्त्वयि सूर्यो भ्राजो दधातु।।

卐 क्षेत्रियै त्वा निरृत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात्। अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे इमे।।

卐 शन्ते अग्नि स्सहाद्भि रस्तु शन्द्यावापृथिवी सहौषधीभिः। शमन्तरिक्ष॰ सह वातेन ते शन्ते चतस्रः प्रदिशो भवन्तु।।

卐 या दैवी श्चतस्रः प्रदिशो वातपत्नी रभि सूर्यो विचष्टे। तासा न्त्वा जरस आ दधामि प्र यक्ष्म एतु निरृतिं पराचैः।।

---

1

卐 अमोचि यक्ष्माद्दुरिता दवर्त्यै द्रुहः पाशा न्निरृत्यै चोदमोचि। अहा अवर्ति मविदथ्स्योन मप्यभू द्भद्रे सुकृतस्य लोके।।

卐 सूर्य मृत न्तमसो ग्राह्या यद्देवा अमुञ्च न्नसृज न्व्येनसः। एव मह मिम ङ्क्षेत्रिया ज्जामिश॰सा द्द्रुहो मुञ्चामि वरुणस्य पाशात्।।

卐 भूस्स्वाहा 卐 भुवस्स्वाहा 卐 सुवस्स्वा卐हो॰ स्वाहा।। 12।। (विचष्टे षट्च। 12।)

❀ 卐 मा ते कुमार॰ रक्षोऽवधी न्मा धेनु रत्यासारिणी। प्रिया धनस्य भूया एधमाना स्वे गृहे।।

卐 अय ङ्कुमारो जरान्धयतु दीर्घमायुः। यस्मै त्वॅ स्तन प्रप्यायाऽऽयु र्वर्चो यशो बलम्।।

卐 यद्भूमेर् हृदय न्दिवि चन्द्रमसि श्रितम्। तदुर्वि पश्यं माऽहं पौत्र मघ॰ रुदम्।।

卐 यत्ते सुसीमे हृदयँ वेदाह न्तत्प्रजापतौ। वेदाम तस्य ते वयं माऽहं पौत्र मघ॰ रुदम्।।

卐 नाऽऽमयति न रुदति यत्र वयँ वदामसि यत्र चाभिमृशामसि।।

卐 आप स्सुप्तेषु जाग्रत रक्षा॰सि निरितो नुदध्वम्।।

卐 अयङ्कलिं पतयन्तॅ श्वान मिवोद्वृद्धम्। अजाँ वाशितामिव मरुतः पर्याध्वॅ स्वाहा।

卐 शण्डेरथ श्शण्डिकेर उलूखलः। च्यवनो नश्यता दित स्स्वाहा।।

❀ 卐 अयश्शण्डो मर्क उपवीर उलूखलः। च्यवनो नश्यता दितस्स्वाहा।।

卐 केशिनी श्श्वलोमिनीः खजापो ऽजोपकाशिनीः। अपेत नश्यता दितस्स्वाहा।।

卐 मिश्रवाससः कौबेरका रक्षोराजेन प्रेषिताः। ग्राम॰ सजानयो गच्छन्तीच्छन्तो ऽपरिदाकृता न्थ्साहा।।

卐 एता न्नतैता न्गृह्णीतेत्ययं ब्रह्मणस्पुत्रः। तानग्निः पर्यसर त्तानिन्द्र स्ता न्बृहस्पतिः। तानहँ वेद ब्राह्मणः प्रमृशतः कूटदन्तान्विकेशा न्लम्बनस्तना न्थ्स्वाहा।। 13।। (निरितो नुदध्वॅ स्वाहा त्रीणि च। 13।)

❀ 卐 नक्तञ्चारिण उरस्पेशा न्छूलहस्ता न्कपालपान्। पूर्व एषां पिते त्युच्चैश्श्राव्यकर्णकः। माता जघन्या सर्पति ग्रामे विधुर मिच्छन्ती स्वाहा।।

卐 निशीथचारिणी स्वसा सन्धिना प्रेक्षते कुलम्। या स्वपन्तं बोधयति यस्यै विजातायां मनः। तासान्त्व ङ्कृष्णवर्त्मने क्लोमान॰ हृदयँ यकृत्। अग्ने अक्षीणि निर्दह स्वाहा।।

## वै।का।25 नामकरण संस्कारः

卐 अङ्गादङ्गा.थ्सं भवसि हृदया.दधि जायसे। वेदो वै पुत्रनामाऽसि स जीव शरद.श्शतम्।

卐 अश्मा भवे[1]❁-त्येषा। 卐 अग्नि रायुष्मा[2]-❁ निति पञ्च।

卐 सर्वस्मा दात्मन स्सम्भूताऽसि सा जीव शरद श्शतम्।

## वै।का।26 अन्नप्राशन संस्कारः 1

卐 भूरपा न्त्वौँ-षधीनाꣳ रसं प्राꣳशयामि शिवास्त आप ओषधय स्सन्त्वनमीवा.स्त आप ओषधय स्सन्त्वसौ 卐 भुवोऽपाꣳ-- 卐 सुव.रपां-- 卐 भूर्भुव.स्सुव रपा-ँन्त्वौषधीनाꣳ रसं प्राꣳशयामि शिवास्त आप ओषधय स्सन्त्वनमीवा.स्त आप ओषधय.स्सन्त्वसौ।।

## वै।का।27 चौल संस्कारः

卐 उष्णेन वायवुदकेने- त्येषः[3]❁ ।। 14।। (एषा चत्वारि च। 14।)

## वै।का28 गृहनिर्माण प्रकरणम्

❁❀ 卐 यद्भूमेः क्रूर न्तदितो हरामि पराची न्निरृति न्निर्वाहयामि। इदꣳ श्रेयो ऽवसान माऽगन्म देवा गोम दश्वाव दिद मस्तु प्रभूम।

卐 स्योना पृथिवि भवानृक्षरा निवेशनी। यच्छा न श्शर्म सप्रथाः।।

卐 इहैव तिष्ठ निमिता तिल्वला स्यादिरावती। मध्ये ताल्प्यस्य तिष्ठान्मा त्वा प्राप न्नघायवः।।

卐 आ त्वा कुमार स्तरुण आ वथ्सो जगता सह। आ त्वा परिस्रुतः कुम्भा आ दध्नः कलशीरयन्न्।।

卐 ऋतेन स्थूणा वधि रोह वꣳशोग्रो विराज न्नप सेध शत्रून्।।

卐 ब्रह्म च ते क्षत्रञ्च-ँ पूर्वे स्थूणे अभिरक्षतु।

卐 यज्ञश्च दक्षिणाश्च दक्षिणे-- 卐 इष श्चोर्ज श्चापरे-- 卐 मित्रश्च वरुण श्चोत्तरे--।

卐 धर्मस्ते स्थूणाराज 卐 श्श्रीस्ते स्तूपः।

卐 उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वाꣳश्चकार। अह्ना यदेनः कृत मस्ति पापꣳ-- 卐 रात्र्या यदेनः कृतमस्ति पापꣳ-ँ सर्वास्मा न्मोद्धृतो मुञ्च तस्मात्।।

---

1

2

3

卐 इन्द्रस्य गृहा वसुमन्तो वरूथिन स्तानह९ सुमनस॰ प्रपद्ये।।

卐 अमृताऽऽहुति ममृताया ञ्जुहोम्यग्निं पृथिव्या ममृतस्य जित्यै तयाऽनन्त ङ्काम मह ञ्जयानि प्रजापति यँ प्रथमो जिगायाग्नि मग्नौ स्वाहा।।

卐 अन्नपत[1]❃इत्येषा।

卐 अरिष्टा अस्माकँ वीरा स्सन्तु मा परा सेचि मे धनम्।

卐 भूमि र्भूमि मगा न्माता मातर मप्यगात्। भूयास्म पुत्रै॰ पशुभि र्यो नो द्वेष्टि स भिद्यताम्।।

卐 वास्तोष्पत[2]❃ इति द्वे।

卐 वास्तोष्पते प्रतरणो न एधि गोभि रश्वेभि रिन्दो। अजरासस्ते सख्ये स्याम पितेव पुत्रा न्प्रति नो जुषस्व।।

卐 अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्न्। सखा सुशेव एधि नः।।

卐 शिव९ शिवम्।। 15।। (अभिरक्षतु भिद्यता९ षड्व। 15।)

## वै।का।29 बालग्रह निवारक मन्त्राः

❃❀ 卐 कूर्कुर स्सुकूर्कुर॰ कूर्कुरो वालबन्धनः। उपरिष्टा द्यदेजाय तृतीयस्या इतो दिवः।।

卐 औलब इत्तमुपाह्वयथाऽऽर्जी न्छ्याम श्शबलः। अधोराम उलुम्बल स्सारमेयो ह धावति समुद्र मवचाकशत्।।

卐 बिभ्र.न्निष्कञ्च रुक्मञ्च शुना मग्र९ सुबीरिणः। सुबीरिण सृज सृज शुनक सृजैकव्रात्य सृजच्छत्।।

卐 तथ्सत्यँ यत्त्वेन्द्रोऽब्रवी.द्वा.स्स्पाशयस्वेति, तास्त्व३ स्पाशयित्वा ऽऽगच्छ, स्तन्त्वाऽब्रवी- दविदहा 3 इ,त्यविद९ हीति, वरँ वृणीष्वेति, कुमार.मेवाहँ वरं वृण- इत्यब्रवी, र्विगृह्य बाहू प्लवसे द्या मवचाकशत्।।

卐 बिभ्र न्निष्कञ्च रुक्मञ्च शुना मग्र९ सुबीरिणः। सुबीरिण सृज सृज शुनक सृजैक व्रात्य सृजच्छत्।

卐 तथ्सत्यँ यत्ते सरमा माता लोहित॰ पिता। अमी एके सरस्यका अवधावति तृतीयस्या इतो दिवः।।

卐 तेकश्च ससरमतण्डश्च तूलश्च वितूल श्चार्जुनश्च लोहितश्च। दुला ह नाम वो माता मन्थाकको ह व॰ पिता। सन्तक्षा हन्ति चक्री वो न सीसरीदत्।।

1

2

卐 छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर। समश्वा वृषण॰ पदो न सीसरीदत।।
卐 छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर। श्वान मिच्छ्वाऽद.न्न पुरुषञ्छत्।
卐 एते ते प्रति दृश्येते समानवसने उभे। ते अह॰ सारयेण मुसले.नाव हन्म्युलूखले।।
卐 हत श्शाङ्को हत श्शाङ्कपिता हत श्शाङ्ककुतुर्वकः। अप्येषा॰ स्थपतिर् हतः।।
卐 ऋषि बोध॰ प्रबोध स्स्वप्नो मातरिश्वा। ते ते प्राणा न्थ्स्परिष्यन्ति मा भैषी र्न मरिष्यसि।।
卐 जग्धो मशको जग्धा वितृष्टि र्जग्धो व्यध्वर स्स्वाहा 卐 जग्धो व्यध्वरो जग्धो मशको जग्धा वितृष्टि स्स्वाहा 卐 जग्धा वितृष्टि र्जग्धो व्यध्वरो जग्धो मशक स्स्वाहा।। 16।। (पिताऽव हन्म्युलूखले पञ्च च। 16।)

## वै।का।30 सर्पबलि मन्त्राः

卐 इन्द्र जहि दन्दशूकं पक्षिणँ य.स्सरीसृपः। दँ'2'क्ष्णन्तञ्च दशन्तञ्च सर्वा॰ स्तानिन्द्र जम्भय स्वाहा।।
卐 अप्सुजात सरवृद्ध देवाना मपिहस्त्य। त्वमग्न इन्द्रप्रेषित स्स नो मा मा हि॰सी स्स्वाहा।।
卐 त्राण.मसि परित्राण.मसि परिधि.रसि। अन्नेन मनुष्या॰ स्त्रायसे तृणै॰ पशू न्गर्तेन सर्पान् यज्ञेन देवा न्थ्स्वधया पितृ न्थ्साहा।।
卐 तथ्सत्यँ यत्ते ऽमावास्यायाञ्च पौर्णमास्याञ्च विषबलि॰ हरन्ति सर्व उदरसर्पिणः। तत्ते प्रेरते त्वयि सँ विशन्ति त्वयि न स्सत स्त्वयि सद्ध्यो वर्षाभ्यो न॰ परि देहि।।
卐 नमो अस्तु सर्पेभ्य[1] इति तिस्रः।
卐 नमो अस्तु सर्पेभ्यो ये पार्थिवा य आन्तरिक्ष्या ये दिव्या ये दिश्याः। तेभ्य इमं बलि॰ हरिष्यामि 卐 -- तेभ्य इमं बलि महार्षम्।।
卐 तक्षक वैशालेय धृतराष्ट्रैरावृत स्ते जीवा स्त्वयि न स्सत स्त्वयि सद्ध्यो वर्षाभ्यो न॰ परि देहि।।
卐 धृतराष्ट्रैरावत तक्षक वैशालेय स्ते जीवा स्त्वयि न स्सत स्त्वयि सद्ध्यो वर्षाभ्यो न॰ परि देहि।।
卐 अहि॰सातिबल स्ते जीवा स्त्वयि न स्सत स्त्वयि सद्ध्यो वर्षाभ्यो न॰ परि देहि।।
卐 अतिबलाहि॰स स्ते जीवा स्त्वयि न स्सत स्त्वयि सद्ध्यो वर्षाभ्यो न॰ परि देहि।।

1



Sri Ganapathi Sachchidananda Avadhoota Datta Peetham Mysore

卐 ये दन्दशूका॰ पार्थिवा स्ता॰ स्त्व.मित॰ परोगव्यूति नि वेशय। सन्ति वै न श्शफिन स्सन्ति दण्डिन स्ते वो नेद्धिनसा.न्न्ये.द्यूय मस्मान् हिनसात।।

卐 समीची नामासि प्राची दि[1]❋卐ग्घेतयो नाम स्थेति[2]❋ द्वादश पर्यायाः।।

卐 अप श्वेत पदा जहि पूर्वेण चापरेण च। सप्त च मानुषी रिमा स्तिस्रश्च राजबन्धवीः।

卐 न वै श्वेतस्याध्याचारे ऽहि र्जघान कञ्चन। श्वेताय वैदर्वाय नमो नम श्श्वेताय वैदर्वाय।। 17।।

(दिश्या राजबन्धवी द्वे च। 17।)

## वै।का।31 हेमन्त प्रत्यवरोहण मन्त्राः

卐 परमेष्ठ्यसि परमां मा॰ श्रिय ङ्गमय 卐 प्रत्यवरूढो नो हेमन्तः।

卐 प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे 卐 प्रत्यश्वेषु प्रति तिष्ठामि गोषु। 卐 प्रति प्रजायां प्रति तिष्ठामि भव्ये।

卐 इह धृति 卐 रिह विधृति 卐 रिह रन्ति 卐 रिह रमतिः।

卐 स्योना पृथिवि[3]❋ 卐 बडित्था पर्वताना[4]❋ मिति द्वे।

卐 आ त्वा वहन्तु हरय स्सचेतस श्श्वेतै रश्श्वै स्सह केतुमद्भिः। वाताजिरै रा याहि मम हव्याय शर्वो卐प स्पृशतु मीढ्वा न्मीढुषे स्वा卐होप स्पृशतु मीढुषी मीढुष्यै स्वाहा 卐 जयन्तोप स्पृश जयन्ताय स्वाहा 卐 भवाय देवाय स्वाहा 卐 शर्वाय देवाय स्वाहे卐शानाय देवाय स्वाहा 卐 पशुपतये देवाय स्वाहा 卐 रुद्राय देवाय स्वा卐होग्राय देवाय स्वाहा 卐 भीमाय देवाय स्वाहा 卐 महते देवाय स्वाहा 卐 भवस्य देवस्य पत्न्यै स्वाहा 卐 शर्वस्य देवस्य पत्न्यै स्वा卐हेशानस्य देवस्य पत्न्यै स्वाहा 卐 पशुपते र्देवस्य पत्न्यै स्वाहा 卐 रुद्रस्य देवस्य पत्न्यै स्वा卐होग्रस्य देवस्य पत्न्यै स्वाहा 卐 भीमस्य देवस्य पत्न्यै स्वाहा 卐 महतो देवस्य पत्न्यै स्वाहा 卐 जयन्ताय स्वाहा 卐ऽग्नये स्विष्टकृते सुहुतहु दाहुतीना ङ्कामाना॰ समर्धयित्रे स्वाहा।।

卐 स्वस्ति न॰ पूर्णमुख॰ परि क्रामतु 卐 गृहपोप स्पृश गृहपाय स्वाहा 卐 गृहप्युप स्पृश गृहप्यै स्वाहा 卐 घोषिण उप स्पृशत घोषिभ्य स्स्वाहा 卐 श्वासिन उप स्पृशत श्वासिभ्य स्स्वाहा 卐 विचिन्वन्त उप स्पृशत विचिन्वद्भ्य स्स्वाहा 卐 प्रपुन्वन्त उप स्पृशत प्रपुन्वद्भ्य स्स्वाहा 卐 समश्नन्त उप स्पृशत

1

2

3

4

समश्नव्य स्स्वाहा ॐ देवसेना उप स्पृशत देवसेनाभ्य स्स्वाहा ॐ या आख्याता याश्चानाख्याता देवसेना उप स्पृशत देवसेनाभ्य स्स्वाहा ॐ द्वारपोप स्पृश द्वारपाय स्वाहा ॐ द्वारप्युप स्पृश द्वारप्यै स्वाहा॥ऽन्वासारिण उप स्पृशतान्वासारिभ्य स्स्वाहा ॐ निषङ्गि.न्नुप स्पृश निषङ्गिणे स्वाहा ॐ नमो निषङ्गिण इषुधिमते[1]❀ ॐ क्षेत्रस्य पतिना वय[2]❀ मिति द्वे।। 18।। (परमेष्ठ्यसि परमा मष्टौ। 18।)

## वै।का।32 दर्श श्राद्ध 1मन्त्राः (मासि श्राद्ध)(एकोऽनुवाकः 1)

❀ ॐ यन्मे माता प्र लुलोभ चरत्यननुव्रता। तन्मे रेतः पिता वृङ्क्तां, माऽभु रन्योऽव पऽद्यता ममुष्मै स्वाहा।।

ॐ यास्तिष्ठन्ति या धावन्ति या आर्द्रोघ्नीः परितस्थुषीः। अद्भि र्विश्वस्य भर्त्रीभि रन्त रन्यं पितु र्दधेऽमुष्मै स्वाहा।।

ॐ यन्मे पितामही प्र लुलोभ चरत्यननुव्रता। तन्मे रेतः पितामहो वृङ्क्तां, माऽभु रन्योऽव पद्यता ममुष्मै स्वाहा।।

ॐ अन्तर्दधे पर्वतै रन्त र्मह्या पृथिव्या। आभि र्दिग्भि रनन्ताभि रन्त रन्यं पितामहा द्दधे ऽमुष्मै स्वाहा।।

ॐ यन्मे प्रपितामही प्र लुलोभ चरत्यननुव्रता। तन्मे रेतः प्रपितामहो वृङ्क्तां, माऽभु रन्योऽव पद्यता ममुष्मै स्वाहा।।

ॐ अन्तर्दध ऋतुभि रहोरात्रै स्ससन्धिभिः। अर्धमासैश्च मासै श्रान्त रन्यं प्रपितामहा द्दधेऽमुष्मै स्वाहा।।

ॐ ये चेह पितरो ये च नेह याᳶश्च विद्म याᳶ उ च न प्रविद्म। अग्ने तान् वेत्थ यदि ते जातवेद स्तया प्रत्तᳲ स्वधया मदन्तु स्वाहा।।

ॐ स्वाहा पित्रे। ॐ पित्रे स्वाहा। ॐ स्वाहा पित्रे। ॐ पित्रे स्वाहा। ॐ स्वधा स्वाहा।

ॐ अग्नये कव्यवाहनाय स्वधा स्वाहा।

ॐ एष ते तत मधुमाᳶ ऊर्मि स्सरस्वान्, यावा.नग्निश्च पृथिवी च- तावत्यस्य मात्रा- तावतीन्त एतां मात्रा न्ददामि, यथाऽग्नि रक्षितो ऽनुपदस्त- एवं मह्यं पित्रे ऽक्षितो ऽनुपदस्त,स्स्वधा भव - तान्त्वᳲ

1

2

स्वधा न्तैस्सहोप जीवर्चस्ते महि,卐मैष ते पितामह मधुमा९ ऊर्मि स्सरस्वान्, यावान् वायु श्चान्तरिक्षञ्च- तावत्यस्य मात्रा- तावतीन्त एतां मात्रा न्ददामि, यथा वायु रक्षितो ऽनुपदस्त- एवं मह्यं पितामहायाक्षितो ऽनुपदस्त, स्स्वधा भव - तान्त्वꣳ स्वधा न्तैस्सहोपजीव- सामानि ते महि卐मैष ते प्रपितामह मधुमा९ ऊर्मि स्सरस्वान्, यावा.नादित्यश्च द्यौश्च- तावत्यस्य मात्रा- तावतीन्त एतां मात्रा न्ददामि, यथा ऽऽदित्योऽक्षितोऽनुपदस्त- एवं मह्यं प्रपितामहायाक्षितो ऽनुपदस्त,स्स्वधा भव - तान्त्वꣳ स्वधा न्तैस्सहोपजीव - यजू९षि ते महिमा।। 19।। (अमुष्मै स्वाहा स्वधा स्वाहैकञ्च। 19।)

## वै।का33 पिण्डपितृयज्ञ मन्त्राः 1(एकोऽनुवाकः 1)

卐 पृथिवी ते पात्र- न्द्यौ रपिधानं ब्रह्मण स्त्वा मुखे जुहोमि ब्राह्मणानान्त्वा प्राणापानयो र्जुहो म्यक्षितमसि मैषा ङ्क्षेष्ठा अमुत्राऽमुष्मि न्लोके।

卐 मार्जयन्तां मम पितरो 卐 मार्जयन्तां मम पितामहा 卐 मार्जयन्तां मम प्रपितामहा 卐 मार्जयन्तां मम मातरो 卐 मार्जयन्तां मम पितामह्यो 卐 मार्जयन्तां मम प्रपितामह्यः।

卐 एतत्ते तताऽसौ ये च त्वा म-卐न्वेतत्ते पितामहासौ ये च त्वा म-卐न्वेतत्ते प्रपितामहासौ ये च त्वा म-卐न्वेतत्ते मात.रसौ याश्च त्वा म-卐न्वेतत्ते पितामह्यसौ याश्च त्वा म-卐न्वेतत्ते प्रपितामह्यसौ याश्च त्वामनु।

卐 मार्जयन्तां मम पितर[1] - इत्येते।

卐 ये च वोऽत्र ये चास्मा.स्वाश९सन्ते 卐 याश्च वोऽत्र याश्चास्मा.स्वाश९ सन्ते 卐 ते च वहन्ता 卐 न्ताश्च वहन्ता 卐 न्तृप्यन्तु भवन्त 卐 स्तृप्यन्तु भवत्य 卐 स्तृप्यत तृप्यत तृप्यत।

卐 पुत्रा न्पौत्रा नभि तर्पयन्ती रापो मधुमती रिमाः। स्वधां पितृभ्यो अमृत न्दुहाना आपो देवी रुभया९ स्तर्पयन्तु।

卐 तृप्यत तृप्यत तृप्यत।

卐 प्राणे निविष्टोऽमृत ञ्जुहोमि[2] 卐 ब्रह्मणि म आत्मा ऽमृतत्वाय।

卐 या.ञ्जना४ प्रतिनन्दन्ति रात्रि न्धेनु मिवाऽऽयतीम्। सँवथ्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा।।

1

2

卐 वह वपा ञ्जातवेदः पितृभ्यो यत्रैनान् वेत्थ निहिता न्पराके। मेदसः कूल्या उप तान्क्षरन्तु सत्या एता आशिष स्सन्तु कामै स्स्वाहा।।

卐 याञ्जनाः प्रति नन्दन्ती[1]❀-त्येषा।

卐 इय मेव सा या प्रथमा व्यौच्छ[2]❀- दिति तिस्रः।

卐 एकाष्टकां पश्यत दोहमाना मन्नं मा॰सव द्धृतव.थ्स्वधावत्। तद्ब्राह्मणै रतिपूत मनन्त मक्षय्य ममुष्मि न्लोके स्फीति.ङ्गच्छतु मे पितृभ्य स्स्वाहा।।

卐 औलूखला ग्रावाणो घोष मक्रत हविः कृण्वन्तः परिवथ्सरीणम्। एकाष्टके सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम्।।

卐 एकाष्टका तपसा तप्यमाना सँवथ्सरस्य पत्नी दुदुहे प्रपीना। तन्दोह.मुप जीवाथ पितर स्सहस्रधार ममुष्मिन्लोके स्वाहा।। 20।। (आयतीं प्रपीनैकञ्च। 20।)

## वै।का।34 अष्टकाश्राद्ध मन्त्राः

Sri Ganapati Sachchidananda Avadhoota Datta Peetham • Mysore • SGS

❀ 卐 उक्थ्यश्चास्यतिरात्रश्च साद्यस्क्री श्छन्दसा सह। अपूपघृताऽऽहुते नमस्ते अस्तु मा॰सपिप्पले स्वाहा।।

卐 भूः पृथिव्यग्निनर्चाऽमुं मयि काम न्नियुनज्मि स्वाहा।

卐 भुवो वायुनाऽन्तरिक्षेण साम्नाऽमुं मयि काम न्नियुनज्मि स्वाहा।

卐 स्वर्दिवाऽऽदित्येन यजुषाऽमुं मयि काम न्नियुनज्मि स्वाहा।

卐 जनदद्भि रथर्वाङ्गिरोभि रमुं मयि काम न्नियुनज्मि स्वाहा।

卐 रोचनायाजिरायाग्नये देवजातवे स्वाहा।

卐 केतवे मनवे ब्रह्मणे देवजातवे स्वाहा।

卐 स्वधा स्वाहाऽग्नये कव्यवाहनाय स्वधा स्वाहा।

卐 अन्नमिव ते दृशे भूयासँ 卐 वस्त्रमिव ते दृशे भूयासँ 卐 वित्तमिव ते दृशे भूयास 卐 माशेव ते दृशे भूयासꣳ 卐 श्रद्धेव ते दृशे भूयास॰ -

[1]

[2]

卐 सꣳ स्रवन्तु दिशो मही स्समाधावन्तु सूनृताः। सर्वे कामा अभि यन्तु मा प्रिया अभि रक्षन्तु मा प्रियाः।।

卐 यशोऽसि यशोऽह.न्त्वयि भूयास मसौ।

卐 अङ्कौ न्यङ्का वभित[1]❀- इत्येषा।

卐 अध्वनाध्वपते स्वस्ति मा सं पारय।

卐 अयँ वा मश्विना रथो मा दुःखे मा सुखे रिषत्। अरिष्ट स्स्वस्ति गच्छतु विविघ्न न्पृतनायतः।

卐 अश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ययु र्नामास्यादित्यानां पत्वाऽन्विहि।।

卐 हस्तियशसमसि हस्तियशसी भूयासँ वह काल वह श्रियं माऽभि वह। इन्द्रस्य त्वा वज्रेणाभि नि दधाम्यसौ।।

卐 अवजिह्वक निजिह्वकाऽव त्वा हविषा यजे। तथ्सत्यँ यदहं ब्रवीम्यधरो मदसौ वदा थ्स्वाहा।।

卐 आ ते वाच मास्या न्दद आ मनस्याꣳ हृदया दधि। यत्रयत्र ते वाङ्गिहिता तान्त आ ददे। तथ्सत्यँ यदहं ब्रवी.म्यधरो मत्पद्यस्वासौ।। 21।। (सूनृता हविषा यजे चत्वारि च। 21।)

## वै।का।35 काम्यसाधक मन्त्राः 1(एकोऽनुवाकः 1)

❀ 卐 या त एषा रराट्या तनू र्मन्यो र्मृध्रस्य नाशिनी। तान्देवा ब्रह्मचारिणो वि नयन्तु सुमेधसः।।

卐 यत्त एतन्मुखेऽमतꣳ रराट मुदिव विध्यति। वि ते क्रोध न्नयामसि गर्भ मश्वतर्या इव।।

卐 अव ज्यामिव धन्वनो हृदो मन्यु न्तनोमि ते। इन्द्राऽपास्य पलिग मन्येभ्यः पुरुषेभ्यो ऽन्यत्र मत्।।

卐 यदह न्धनेन प्रपणꣳ श्चरामि धनेन देवा धन मिच्छमानः। तस्मि'2'न्थ्सोमो रुच मा दधा.त्वग्नि रिन्द्रो बृहस्पतिश्च स्वाहा।।

卐 परि त्वा गिरे.रमिहं परिभ्रातुः परिष्वसुः। परि सर्वेभ्यो ज्ञातिभ्यः परिषीतः क्वेष्यसि।।

卐 शश्व त्परिकुपितेन सङ्क्रामेणाविच्छिदा। उलेन परिषीतोऽसि परिषीतो स्युलेन।।

卐 आवर्तन वर्तये[2]❀- त्येषा।

卐 आवर्तने निवर्तन आवर्तन निवर्तनाय स्वाहा।

1

2

卐 अनु पोऽह्व दनुह्वयो निवर्तो पो न्यवीवृतत्। ऐन्द्रः परिक्रोशो वः परि क्रोशतु सर्वतः।।
卐 यदि मा मति मन्याध्वा अदेवा देववत्तरम्। इन्द्रः पाशेन सित्त्वा वो मह्य.मि द्वश मानयाथ्स्वाहा।।
卐 यदि वृक्षा द्यद्यन्तरिक्षा त्फल मभ्यपत त्तदु वायु रेव। यत्रास्पृक्ष त्तनुवँ यत्र वास आपो बाधन्ता न्निरृत्तिं पराचैः।।
卐 ये पक्षिणः पतयन्ति बिभ्यतो निरृत्तै स्सह। ते मा शिवेन शग्मेन तेजसोन्दन्तु वर्चसा।।
卐 दिवो नु मा बृहतो अन्तरिक्षा दपाᳶ स्तोको अभ्यपत च्छिवेन। समह मिन्द्रियेण मनसाऽह माऽगां ब्रह्मणा सम्पृचान स्सुकृता कृतेन।।
卐इमं मे वरुण[1]❁ 卐 तत्त्वा यामि[2]❁ 卐 त्वन्नो अग्ने[3]❁卐 स त्वन्नो अग्ने[4]❁ त्वमग्ने अयासि[5]❁ । प्रजापते[6]❁।
卐 सम्राजञ्च[7]❁ 卐 व्याहृती र्विहृताः।
卐 इम.ञ्जीवेभ्यः परिधि न्दधामि मैषा.न्नु गा दपरो अर्ध मेतम्। शत.ञ्जीवन्तु शरदः पुरूची स्तिरो मृत्यु न्दधतां पर्वतेन।। 22।। (क्रेष्यसि पराचै रष्टौ च। 22।)
(उष्णेन पञ्चदशा,ऽऽयुर्दा एकविᳶशति,रागन्त्रा दश, योगेयोगे त्रयोदश, सुश्रव स्सुश्रवस मष्टौ, परि त्वाऽग्न- इमᳶ स्तोम- मायुष्य मेकान्न विᳶशति रेकान्न विᳶशति,र्मयि पर्वतपूरुषᳶ षोडश, त्रय्यै विद्याया अष्टादश, धाता ददातु नो रयि मेकविᳶशति,रश्मा भव षोडश, मा ते कुमार न्त्रयोविᳶशति, र्नक्तञ्चारिण श्चतुर्दश, यद्भूमे ष्षड्विᳶशतिः, कूर्कुरः पञ्चविᳶशति,रिन्द्र जहि द्वाविᳶशतिः, परमेष्ठ्यसि परमा मष्टौ, यन्मे माता- पृथिवी ते पात्र मेकविᳶशति रेकविᳶशति,रुक्ष्यश्च त्रयोविᳶशति,र्या त एषाऽष्टाविᳶशति, र्द्वाविᳶशतिः। 22। उष्णेन धातोक्ष्यश्च द्वाविᳶशतिः। 22। उष्णेन – पर्वतेन।)
हरिः ओम्।। तत्सत्।। समाप्तम् तैत्तिरीयमारण्यकम्।।

यदक्षर पदभ्रष्टं मात्राहीनन्तु यद्भवेत्।

तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तुते।।

1
2
3
4
5
6
7